# प्रसिद्धिलेखः

डाकव्ययसह मूल्यम्

रू०आ०

१. ऋग्वेदसंहिताभाष्यं—श्रीमद्विद्यारण्यमुनिविरचितम् बोडसोपाव्हैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशो- ... ५०—०
धितम् ... ४—८

२. ऋग्वेदसंहिता, परिशिष्टं सर्वानुक्रमसहितं च ... २–१२

३. शुक्लयजुर्वेदीयवाजसनेयसंहितापदानि—बोडसोपाह्वैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितानि. २–१२

४. ऐतरेयब्राह्मणं—बोडसोपाह्वैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितम् ... २—२

५. शिक्षा, ज्योतिषं, छंदः, निघंटः, अष्टाध्यायी, तथा निरुक्तादि वेदस्य षडङ्गानि ... १—८

६. हठयोगप्रदीपिका सटीका—हूणभाषांतरसहिता ... ०—२

७. महिम्नस्तोत्रम् ,, ... ३—८

८. कृष्णयजुर्वेदसंहिता—महामहोपाध्यायबोडसोपाख्यराजारामशास्त्रिभिः संशोधिता ... ०–१२

९. घेरण्डसंहिता—इंग्लिशभाषान्तरसहिता ... ०–१०

१०. योगसारसंग्रहः ... ७—०

११. अष्टोत्तरशतं उपनिषदः ... मुद्राप्यते.

१२. सांख्यतत्त्वकौमुदी—इंग्लिशभाषान्तरसहिता ... मुद्राप्यते.

१३. भगवद्गीता—इंग्लिशभाषान्तरसहिता ...

☞ एतानि पुस्तकानि मुम्बापुर्यां यमबाणमिते ( ५२ ) गृहे कष्टमहौसरस्तासंज्ञे तुकारामतात्यातः प्राप्नुवन्ति ।

इदं पुस्तकं गाडगीलोपाह्वकेशवसूनुना दिनकरशर्मणा संशोधितं
तुकारामतात्याभिख्येन तत्त्वविवेचकग्रंथप्रसारकसमित्यै
मोहमय्याम्
'तत्त्वविवेचक' मुद्रणयंत्रालये मुद्रितम्.

तच्च

पण्डित नारायण मुळजी काळबादेवीरोड रामवाडी एतेषा पुस्तकालये
प्रसिद्धिकर्तुश्च पुस्तकालये लभ्येत.

शकाब्दाः १८१७.

मूल्यम् रूपकद्वयम् ( २ )

# आश्वलायनीयगृह्यसूत्राणां विषयानुक्रमः।

## प्रथमाध्याये कण्डिकाः १—२४.

## तृतीया कण्डिका.



## चतुर्थी कण्डिका.

**एक विंशतितमा कंडिका.**



**द्वाविंशतितमा कण्डिका.**

सूत्रम्. पत्रम्.

## चतुर्थी कण्डिका.



## पञ्चमी कण्डिका.

दशमी कण्डिका.



तृतीयाध्याये कण्डिकाः १--१२.

प्रथमा कण्डिका.



द्वितीया कण्डिका.



तृतीया कण्डिका.

## नवमी कण्डिका.



## दशमी कण्डिका.

**तृतीया कण्डिका.**

चतुर्थी कण्डिका.

सूत्रम्. पत्रम्

## अष्टमी कण्डिका.



## नवमी कण्डिका.

इति आश्वलायनीयगृह्यसूत्राणां विषयानुक्रमः ।

# अथ गृह्यपरिशिष्टविषयानुक्रमः ।

## द्वितीयोऽध्यायः


## तृतीयोऽध्यायः

इति गृह्यपरिशिष्टविषयानुक्रमः ।

# अथ आश्वलायनगृह्यकारिकाविषयानुक्रमः ।

| विषयः | पत्रम्. |
|---|---|

## चतुर्थोऽध्यायः



इति आश्वलायनगृह्यकारिकाविषयानुक्रमः ।

॥ श्रीगणेशाय नमः ॥ आश्वलायनमाचार्यं प्रणिपत्य जगद्गुरुम् । देवस्वामिप्रसादेन क्रियते वृत्तिरीदृशी ॥ १ ॥ वैतानिकान्युक्तानि । अतः परं गृह्याणि वक्ष्यामः । वितानोऽग्नीनां विस्तारः । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यः[2] । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायां च वर्तते । यथा 'सगृहो

## ॥ ॐ ॥ श्रीमदाश्वलायनीयस्य गृह्यसूत्रस्य गार्ग्यनारायणीयवृत्तिसहितस्य प्रथमोऽध्यायः ॥ १ ॥

**उक्तानि वैतानिकानि गृह्याणि**

गृहमागत' इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः । उत्तरस्तु शालावचनः । येषां भार्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्तन्ते तेषामयं गृहशब्दो भार्यावचनः । येषां तु दायविभागकालेऽग्निरुत्पद्यते । तेषां शालावचनः । 'भार्यादिरग्निर्दायादिर्वा तस्मिन्गृह्याणि' इति गौतमः । उक्तानुकीर्तनं संबन्धकरणार्थम् । संबन्धकरणे प्रयोजनं कथं? सौत्र्यः परिभाषाः प्राप्नुयुरिति ।

---

१ मन्त्रव्याख्याकृदाचार्यः । २ तस्य निमित्तमिति यत् ।

सू० कथं वा न प्राप्नुयुः । शास्त्रान्तरत्वात् । कथं शास्त्रान्तरत्वम् । सूत्रसमाप्तावाचार्यनमस्कारात् । वृ० अ० १
॥ शास्त्रान्तर एवाचार्यनमस्कार उपपद्यते । इदं प्रतिज्ञासूत्रम् ॥ १ ॥ पाकयज्ञास्त्रयः । त्रिविधा इत्यर्थः । कुतः । 'हुताः प्रहुता ब्राह्मणिहुता' इत्येकैकस्मिन्बहुवचननिर्देशात् । यदि हि त्रिविधत्वं न स्यादेकवचनेन निर्देशं कुर्यात् । तस्मात्त्रिविधत्वमिति । पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा । दृष्टश्चोभयत्र पाकशब्दः । 'योऽस्मत्पाकतरः' इत्यत्राल्पत्वे पाकशब्दः । 'तं पाकेन मन-

**वक्ष्यामः ॥ १ ॥ त्रयः पाकयज्ञाः ॥ २ ॥ हुता अग्नौ हूयमाना अनग्नौ[1]**

साऽपश्यम्' इति 'यो मा पाकेन मनसा' इति च प्रशंसायाम् । तेन आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति । यदि हि पाकशब्दः पक्तौ वर्तेत । तर्हिआज्यहोमेषु तन्त्रं न स्यात् । इष्यते च । तस्मान्न तत्र वर्तते । प्रशस्तयज्ञा इत्युक्तम् । कथं प्रशस्तत्वम् । उच्यते । यस्मादेतेषु संस्कारा उच्यन्ते । तैश्च ब्राह्मण्यमवाप्यते । के पुनस्ते संस्काराः । गर्भाधानादयः । तस्मात्सर्वेषां पाकयज्ञत्वमिति यदुक्तं तत्सम्यक् ॥ २ ॥ कथं त्रिविधत्वमित्यत आह—अग्नौ हूयमानाः 'हविष्यस्य ॥ १ ॥

---

१ भूमौ ।

जुहुयात्' (गृ० १।२।१) इत्येवमादयो हुताः। अनग्नौ क्रियमाणाः 'अथ बलिहरणम्' (गृ० १।२।३) इत्येवमादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति ब्राह्मणान्भोजयित्वेति ते ब्रह्मणिहुताः। अग्नाविति वचनमनग्नौ हूयमानस्य सर्पबलेः प्रहुतत्वार्थम्। सोऽपि हि जुहोतिशब्दचोदितः। हुतादिसंज्ञाविधानं कृत्स्नोपदेशार्थं शब्दतश्चार्थतश्च मृगतीर्थसंज्ञावत्। अथवा। त्रैविध्योपदेशार्थम्। पाकयज्ञानामेतत्तन्त्रमिति वक्ष्यति। अत्र त्रैविध्योपदेशे सति तत्पाकयज्ञग्रहणम-

**प्रहुता ब्राह्मणभोजने ब्रह्मणिहुताः ॥ ३ ॥ अथाप्यृच उदाहरन्ति यः**

पार्थकम्। तत्समानजातीयानामेव हुतानां पाकयज्ञानां तन्त्रं यथा स्यादित्येवमर्थं त्रैविध्योपदेशः। प्रहुतब्रह्मणिहुतानां माभूत्तन्त्रमिति। तेन सर्पबल्यादाववदानधर्मो निवृत्तो, ब्राह्मणभोजने च निर्वापादि निवृत्तम् ॥ ३ ॥ अधिकपादग्रहणमृचोऽधिकस्य द्व्यृचस्य ग्रहणार्थम्[1]। न तृचस्य। तृतीयस्यामप्यर्थविरोधात्। बहुवचनं तु 'अगोरुधाय' 'आ ते अग्ने' 'यः समिधेति' द्व्यृचाचभिप्रेत्योपपन्नम्। ऋचामुदाहरणं कथम्?। एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यान्याहिताग्ने-

---

[1] कथितः।

रपि स्युरित्येवमर्थम् ॥४॥ 'समिधमेवापि श्रद्दधान आदधन्मन्येत' इत्यारभ्य 'यज्ञो वै नम' इत्यन्तं ब्राह्मणं भवति। तत्र समिधेत्यस्य तात्पर्यकथनं ब्राह्मणं समिधमेवापीति । समिधमेवापि श्रद्दधान आदधद्यज इदं दैवमिति मन्येतैव। कुतः। नमस्तस्मै। अत्र नमःशब्देनान्नमुच्यते। निघण्टुषु नमःशब्दोऽन्ननामसु पठितः। समिदपि तस्मै दैवताय नमो भवति। अन्नं भवति। प्रीतिहेतुर्भवतीत्यर्थः। श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधिकार इति ज्ञाप्यते। य आहुतीत्यस्य विवरणं

**समिधा य आहुती यो वेदेनेति ॥४॥ समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्ययैवाप्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच। अगोरुधाय गविषे द्युक्षा यदस्म्यं**

ब्राह्मणं यआहुत्येति। तत्र 'सुपां सुलुक्' इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णादेशः। यो वेदेनेत्यस्य तात्पर्यकथनं ब्राह्मणं यो वेदेनेतिविद्ययैवेत्यादि। विद्ययापि प्रीतिर्दैवतस्यास्त्येवेत्यर्थः। द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यभिप्रायः। विद्यया प्रीतिरस्तीत्येतद्द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरं साक्षित्वेन श्रुतिर्दर्शयति तदेतादित्यादि । तदेतदर्थरूपं पश्यन्नृषिर्मन्त्रद्रष्टोवाच

अगोरुधायेत्यादि । अस्मिन्सूत्रे स्तोतारः प्रत्यक्षीकृताः । एवंभूतायेन्द्राय हे सखायो वचो वोचत । घृतात्स्वादीयो मधुनश्चेति कृत्वेति । वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते । हे इन्द्र इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः । असिद्धत्वात्स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति स्वादीयोऽस्त्वित्यादिना । स्वादीयोऽस्त्वित्येवासौ साक्षित्वेन ऋषिराहेत्यर्थः ।

वचः । घृतात्स्वादीयो मधुनश्च वोचतेति । वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह । आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उतेति । एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । य इमं स्वाध्याय-

अतोऽस्ति प्रीतिः । एवमध्ययनं रसात्स्वादुतरमित्युक्तम् । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति आ ते अग्न इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनं ब्राह्मणं एत एवेत्यादि । हे अग्ने एत एव मे मत्संबन्धिनः । अत एव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । भवन्त्वित्यर्थः । भवन्तीति

लिङर्थे लेट्। विकरणसिप्प्रत्ययाडागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति । के मत्संबन्धिन इति चेत् । य इमं स्वाध्यायमधीयत इति । अस्य मन्त्रस्य तात्पर्यमुक्षादिमांसेन तव यावती प्रीतिस्तावती तव विद्ययापि भवत्वित्यर्थः । उत्तरार्धर्चतात्पर्यकथनं ब्राह्मणं यो नमसा स्वध्वर इति नमस्कारेणेत्यादि । नमस्कारेणापि योऽग्निमर्चयति । सोऽपि स्वध्वरः शोभनयज्ञः। 'तस्येदर्वन्तो रंहयन्त' इत्यादि पाकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति । कुतः । न वै देवा

**मधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ॥ ५॥ ॥ १ ॥**

नमस्कारमति । अतिरतिक्रमणे । देवा हि नमस्कारं नातिक्रामन्ति । तमप्याद्रियन्त इत्यर्थः । किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोपि यज्ञ इत्यर्थः । इति हि ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थः ॥ ५ ॥ इति प्रथमे प्रथमा कण्डिका ॥ १ ॥ अथशब्दो विशेषप्रक्रियार्थः । अथ गृह्याण्युच्यन्त इति । अत्र सायंप्रा

तःशब्दौ लक्षणयाहोरात्रवचनौ। कुत एतत्। स्मृतिदर्शनात्। 'सायंप्रातरशनान्यग्निपूजयेत्' इति। अशनं च मध्याह्ने विहितं। 'पूर्वाह्णे देवानां मध्यन्दिने मनुष्याणामपराह्णे पितॄणाम्' इति। वैश्वदेवानन्तरमातिथ्यादेर्विधानाच्च। सिद्धं पक्कम्। सिद्धस्येति? दध्नः पयसश्च माभूत्। हविष्यस्येति? चणककोद्रवादीनां माभूत्। कथमहविष्यस्य प्राप्नुयात्। अन्नसंस्कारत्वात्। उभयमपि तर्हि नारभ्यम्। दर्शनादेव सिद्धस्य हविष्यस्य च भविष्यति। यथा। चतुरश्चतुरो मुष्टीन्निर्वपतीत्युक्ते हविष्यमेव प्रतीयते। सिद्धं च तद्भवति। अनारभ्यमाणे दोषः। अनादिष्टद्रव्यत्वादाज्यं प्रसज्येत।

**अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्॥ १॥** अग्निहोत्रदे-

'आज्यशेषेण वानक्ति हृदये' इति ब्रुवञ्ज्ञापयति। यत्र द्रव्यं नादिश्यते तत्राज्येन होम इति। तस्मात्तन्निवृत्त्यर्थं सिद्धग्रहणमारभ्यम्। तर्हि हविष्यग्रहणमपार्थकम्। नन्वन्नसंस्कारत्वादहविष्यस्यापि स्यात्। अपूर्वार्थत्वाच्च न स्यात्। तर्हि तन्त्रनिवृत्त्यर्थं हविर्ग्रहणम्। कथम्। हविष्यस्य होम एव स्यान्न तन्त्रमिति। ननूत्तरत्र विधानान्न तन्त्रं प्राप्नोतीति च शङ्का न कार्या। एवं तर्हि विवाहेऽपि तन्त्रनिवृत्तिप्रसङ्गात्। तत्र चेष्यते तन्त्रम्॥ १॥ होममन्त्रानाह—अग्निहोत्रदेवताभ्य इति विधा-

यको न मन्त्रः। तथाऽर्थप्रतीतेः। अग्निहोत्रशब्दोऽयं द्रव्ये कर्मणि च वर्तते। तत्राग्निहोत्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्ते उत कर्मदेवता इति संशयः। काः पुनर्द्रव्यदेवताः। 'रुद्राद्या रौद्रङ्गविसत्' इत्याद्याः श्रुतावुक्ताः। ता न संभवन्ति। भक्तिमात्रत्वात्। तेन कर्मदेवता गृह्यन्ते। एवं चेदग्निर्गृहपति- रित्येवमाद्या अपि प्राप्नुवन्तीति शङ्का न कार्या। तासामनित्यत्वात्। कास्तर्हि। अग्निः सूर्यः प्रजापतिश्चोभयत्र। श्रुतौ चास्य सम्यगुपदेशः। 'तस्य वा एतस्याग्निहोत्रस्य' इत्यादि। सोमा-

**वताभ्यःसोमायवनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे स्वाहेति ॥ २ ॥ अथ**

यवनस्पतय इत्येको मन्त्रः। वनस्पतेर्गुणत्वेन दृष्टत्वात्। 'अग्निर्गृहपतिः सोमो वनस्पतिः' इति। समाचारश्चैवमेव। इत्युक्तो देवयज्ञः। अप्रैषितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचनं ज्ञापना- र्थम्। एतज्ज्ञाप्यते। अन्यत्र बलिहरणे स्वाहाकारो न भवतीति। तेन चैत्यबलौ नमस्कारो भवति ॥ २ ॥ अथशब्द आनन्तर्यार्थः। इतरथा कर्मान्तरत्वात्कालान्तरे वा बलिहरणं स्यात्।

ब्रह्मयज्ञस्त्वेषां पूर्वो वा स्यात् । उत्तरो वा । मनुष्ययज्ञस्तूत्तर एव । 'वैश्वदेवं कृत्वातिथिमाकाङ्क्षेत्' इति वचनात् । एताभ्यः प्रागुक्ताभ्यो देवताभ्यश्चकाराद्वक्ष्यमाणदेवताभ्यश्च बलिहरणं कार्यम् । एवकारः पौनर्वाचिकः ॥ ३ ॥ भूमौ प्राक्संस्थां पङ्क्तिं करोति । ब्रह्मणे स्वाहेति हुत्वान्तरालं मुक्त्वाऽद्भ्य इत्यादिभिर्जुहोति । गृहदेवताभ्य इति मन्त्रो न विधायकः । तथा वास्तुदेवताभ्य इति च । यदि हि विधायकः स्यादुभयवचनमपार्थकं स्यात् । गृहमेव हि वास्त्वित्युच्यते ॥ ४ ॥ दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते । यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलिं हरेत् ॥ ५ ॥ दिग्देवतानां मध्ये पूर्वोक्तेऽन्तराले ॥ ६ ॥ मध्य

**बलिहरणमेताभ्यश्चैव देवताभ्यः ॥ ३ ॥ अद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ॥ ४ ॥ इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ॥ ५ ॥ ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ ६ ॥ विश्वेभ्यो-**

एव ॥ ७ ॥ दिवाग्रहणं ज्ञापनार्थं क्रियते । तेन वैश्वदेवस्य प्रातरारम्भणं भवति । इतरथा सायंप्रातरुपदेशात्सायमुपक्रमः[1] स्यात् । अग्निहोत्रवत् । तच्चानिष्टम् । अतो दिवाग्रहणम् । तेनाग्नये स्वाहेति सायं जुहुयादित्यत्र सायमुपक्रमः ॥ ८ ॥ दिवाचारिभ्य इत्यस्य स्थाने नक्तंचारिभ्य इति नक्तं भवति ॥ ९ ॥ सर्वासामुत्तरतः ॥ १० ॥ 'यज्ञोपवीतशौचं च' (श्रौ० १।१।१०) इति यत्र

**देवेभ्यः ॥ ७ ॥ सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ॥ ८ ॥ नक्तंचारिभ्य इति नक्तम् ॥ ९ ॥ रक्षोभ्य इत्युत्तरतः ॥ १० ॥ स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ११ ॥ ॥ २ ॥**

प्राचीनावीतित्वं[2] निवीतित्वं वाऽऽचार्येण न विहितं तत्र यज्ञोपवीतित्वं प्राप्तम् । अतः प्राचीनावीतित्वं विधीयते । निनयेदिति वचनं? क्रियान्तरज्ञापनार्थम् । तेन बलिहरणमिदं न भवति । किमेवं सिध्यति ? स्वाहाकारो न भवति । ननु स्वधाकारः प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्यकारित्वेन समानजातीयत्वात्स्वधाकारस्तस्य बाधको भवति । नैतदेवम् । समानार्थयोः समुच्चयो



---

१ प्रारम्भः । २ उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्येस्मिन्निवीतं कण्ठलम्बितम् ।

दृश्यते । यथा 'सोमाय पितृमते स्वधा नमः' इति स्वधानमस्कारयोः । तद्वदत्राप्याशङ्का स्यात् । का पुनरियं क्रिया? पितृयज्ञः । एवं च कृत्वा पितृयज्ञार्थं ब्राह्मणभोजनमन्वहं[1] न कर्तव्यमिति सिद्धम् । शेषग्रहणमानन्तर्यार्थम् । असत्यस्मिन्क्रियान्तरत्वात्कालान्तरे वा स्यात् । एवमुक्तं वैश्वदेवं यस्मिन्कस्मिंश्चिदग्नौ वैश्वदेवं कार्यम् । न गृह्य एवेति नियमः । कुतः । प्राग्विधानाद्विवाहाग्नेः । यदि हि तत्राभिप्रेतमभविष्यत् । तमेव पूर्वं ब्रूयात् । पाणिना च वैश्वदेवं कार्यम् । न पात्रा

## अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुप-

न्तरेण । शक्यत्वात् ॥ ११ ॥ इति प्रथमे द्वितीया कण्डिका ॥ २ ॥ अथशब्दोऽधिकारार्थः । इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति । तेन वैश्वदेवः क्वचग्रहणेन प्राप्यमाणो होष्यद्धर्मो न भवति । खलुशब्दोऽपार्थकः । मिताक्षरेष्वनर्थक इति वचनात् । यत्रक्वचग्रहणमहरहः क्रियान्तरविध्याशङ्कानिवृत्त्यर्थम् । यत्र क्व च होष्यन्त्स्यादिति होममनूद्य धर्मविधिः । तर्हि यत्रैवास्तु । क्वचग्रहणमनर्थकम् । न । तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरण एतत्सूत्रविहितपरि-

---

१ अहनि अहनि ।

समूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं कुचग्रहणम्। लेखादयो न सन्तीति वक्ष्यामः। इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम्। एकस्य मात्राशब्दस्य लोपः। उष्ट्रमुखवत्। तच्च तदवरं च इषुमात्रावरम्। अवरं निकृष्टमित्यर्थः। सर्वतः सर्वासु दिक्षु। चतसृष्वित्यर्थः। चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं गोमयेनोपलिप्य षट् लेखा उल्लिखेत्। षड्ग्रहणं कथम्? षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति। केन चिद्याज्ञियेन शकलेन स्थण्डिलमध्य

**लित्योल्लिख्य षड्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य परिस्तीर्य पुरस्ता-**

उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत्। नानेत्यसंसर्गार्थम्। तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत्। ततस्तिस्रो मध्येऽसंसृष्टाः प्रागायता लेखा लिखेत्। शकलं तत्रैव निधाय स्थंडिलमभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्मममग्निं प्रतिष्ठाप्यान्वादधाति। ततोऽतिदेशप्राप्तं बर्हिष इध्मस्य च सन्नहनं करोति। अन्वाधानं नाम 'कर्माङ्गत्वेन द्वयोस्तिसृणां समिधामभ्याधानम्'। ततः परिसमूह्य। परिसमूहनं नामा 'ऽग्नेः समन्तात्परि-

मार्जनम्'। तच्चाग्निहोत्रवत्। ततः परिस्तीर्य। पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम्। उदक्संस्थवचनमेकैकस्यां दिश्युदक्संस्थताप्राप्त्यर्थम्। अथवा। इत्युदक्संस्थमिति पृथग्योगः। निपातानामनेकार्थत्वादितिशब्द एवंप्रकारे। एवंविधं यत्कर्म सर्वदिक्संबद्धं परिसमूहनपर्युक्षणशिरास्त्रिरुन्दनादिकं तदपराजितायां दिश्यारभ्योदक्संस्थं कार्यमित्यर्थः। ततस्तूष्णीं पर्युक्षणं करोति। तूष्णींग्रहणं? मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम्। त्रिस्त्रिरेकैकं पुनःपुनरुदकमादायादायान्ते च कर्मणां पर्युक्षणम्। उभयत्र च परिसमूहनपूर्वकत्वमित्यत्र पुनः परिसमूहनविधानं?

**दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम् ॥ १ ॥ पवित्राभ्यामाज्यस्योत्पवनम् ॥ २ ॥ अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ**

मध्ये परिस्तरणसिद्ध्यर्थम्। एतस्मिन्काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृन्मयेन वा। उत्तरत्र निनयनदर्शनात् ॥ १ ॥ कार्यमिति शेषः ॥ २ ॥ अथ किंलक्षणे पवित्रे कथं वा उत्पवनं कार्यमित्येतद्द्वयं निर्णेतुमाह—प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थः। न विद्यते अन्तर्मध्ये गर्भौ ययोस्तौ तथोक्तौ। प्रादेशमात्रौ कुशौ। एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ। नाने-

त्यसंसर्गार्थम् । पवित्रे अन्तयोरसंस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रागिति पाठः कार्यः । प्राङिति पुँल्लिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् । तच्च परिभाषासिद्धम् । ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम् । सत्यम् । तत्तु शास्त्रान्तरदृष्टपुनराहारनिवृत्त्यर्थम् । तेन ज्ञायते 'शास्त्रान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रियेति' । इत्थं हि शास्त्रान्तरे दृष्टम् । 'परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य, ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य, ततोऽग्निं पर्युक्ष्य, उदगग्रैर्दर्भेषु

## कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां

द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्याम्' । अयं पात्रासादनक्रमः । 'प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम् । भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान्' इति । आज्यहोमेषु दर्वीमत्सु तु कर्मस्वयं क्रमः । 'स्थालीं चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित्कुशैश्च' । 'ततोऽप्रच्छिन्नाग्रावित्युक्तलक्षणे पवित्रे गृहीत्वा, प्रोक्षणपात्रे निधायाप आसिच्य, ताभ्यां त्रिरुत्पूय, उत्तानानि

पात्राणि कृत्वा, विस्रस्येध्मं, सर्वाणि पात्राणि प्रोक्षति। ततः प्रणीतापात्रं प्रत्यगग्नेर्निधाय, तस्मिंस्ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा, गन्धादि प्रक्षिप्य, पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्नि दर्भेषु निधाय, दर्भैः प्रच्छाद्यासादयेदिति। आचार्यस्य तु पूर्णपात्रं कार्यम्। अन्यस्य तु करणेऽभ्युदयः। अकरणे न प्रत्यवाय इत्याशयः'॥ इत्थं चान्यशास्त्रे दृष्टम्। 'पूर्णपात्रनिधानानन्तरं तत्रस्थे पवित्रे गृहीत्वाज्यस्थाल्यां निधायाज्यमासिच्योदगङ्गारानपोह्य, तेष्वधिश्रित्याज्यमवज्वलयेत्। द्वे दर्भाग्रे प्रच्छिद्य, प्रक्षाल्याज्ये प्रत्यस्य, पुनर्ज्वलता तेनैवोल्मुकेन त्रिः परिहरेद्येनावज्वलनं कृतम्।

सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मि-

ततः शनैरुदगुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाज्यमुत्पूय, पवित्रे त्वद्भिः प्रोक्ष्याग्नौ विनिक्षिपेदिति।' आचार्यस्योत्पवनं नित्यम्। अन्यत्पाक्षिकम्। पूर्ववदित्याकूतम्॥ स्रुक्स्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टम्। तस्यापीच्छातः क्रिया। अनयोः संमार्ग उच्यते। 'दक्षिणेन हस्तेनोभौ गृहीत्वा, सव्येन कांश्चिद्दर्भानादाय, सहैवाग्नौ प्रताप्य, जुहूं निधाय, दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैर्बिलादारभ्य प्रागपवर्गं त्रिः संमृज्याधस्तादग्रैणैवाग्रमभ्यात्मं त्रिः संमार्ष्टि। ततो दर्भाणां मूलेन दण्डस्या-

घस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमार्ष्टि । अथाऽद्भिः प्रोक्ष्य स्रुवं निष्टप्या-
 ज्यस्थाल्यां निधायोदकस्पृष्टैरेव दर्भैर्जुहूं चैवमेव संमार्ष्टि । ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत्' ।
एवं संमार्गः । स्विष्टकृदन्ते चेध्मसन्नहनानामग्नौ प्रासनं दृष्टम् । अन्यदपि यदस्मच्छास्त्राऽविरुद्धं
परशास्त्रे दृष्टं तदपीच्छातः कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृतः । किंच ।
उत्पुनाति त्रिरित्येव वाच्यं लाघवार्थम् । तथा सति सर्वत्रैव कर्मावृत्तावित्यनेन सकृन्मन्त्रेण द्विस्तू-

**भिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥ कृताकृत-**

ष्णीमिति सिद्ध्यति । एवं सिद्धे इदं वचनं? गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थम् । पूर्वयोगः
किमर्थः? अस्याधिकारार्थ इति चेत् । तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम् । अथ पवित्रसंज्ञार्थः ।
तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम् । उच्यते । पूर्वेणामन्त्रकमुत्पवनं विधीयते । अनेन तु समन्त्रकम् ।
तत्र वैतानिकेऽमन्त्रकं गृह्ये कर्मणि समन्त्रकमित्येवं विनिवेशः ॥ ३ ॥ कृतिरेव कृतम् । कृतं च अकृतं 

च यस्य तत्तथोक्तम् । आज्यमेव यत्र हविः स आज्यहोमः। अन्यथाज्यग्रहणस्य वैयर्थ्यं स्यात् । सर्वत्र ह्याघारादयः सन्त्येव । आज्यहोमेषु परिस्तरणं कार्यं वा न वेत्यर्थः । अयं च परिस्तरण-विकल्पो यत्राग्रहणमस्ति यथा 'आज्याहुतीर्जुहुयात्' इति तत्रैव भवति। न पुनरनादिष्टाज्यहोमेषु। यद्यनादिष्टहोमेष्वप्ययं विकल्पः स्यात्तत्राज्यग्रहणमपार्थकं स्यात् ॥४॥ तथेति । कृताकृताविसर्थः। पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा न वेत्यर्थः। पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम् ॥ ५ ॥

**माज्यहोमेषु परिस्तरणम् ॥ ४ ॥ तथाज्यभागौ पाकयज्ञेषु ॥ ५ ॥**

तथेति वर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति । धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा । अथ तयोर्नित्यो भवति उत नैव भवति । नित्यो भवतीति ब्रूमः । कुतः । तयोरुपदेशात् । ब्रह्माणमग्निं चान्तरा वै वैद्यं च[1]रित्रवन्तं ब्रह्माणमुपवेश्य' इति च । तर्हि तस्मा-देव नित्योऽस्तु किमनेनेति च शङ्का न कार्या । अस्मिन्विकल्पप्रतिषेधेऽसति उपदेशस्य पक्षे कृता-र्थत्वात् । तयोरपि ब्रह्मा चौलवत्कृताकृतः स्यात् । ब्रह्मास्ति चेत्प्रणीताप्रणयनात्पूर्वं समस्तपाण्य-

---

१ चरित्रं आचारः ।

ङ्मुखो भूत्वाग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति तृणं प्रत्यग्दक्षिणां[1] निरस्य 'इदमहमर्वावसोः सदने सीदामि' इति मन्त्रेणोपविशेत् । ततः 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय' इत्यन्तं ब्रह्मजपं जपेत् । ततो 'ब्रह्मन्नपः प्रणेष्यामि' इति कर्त्राऽतिसृष्टो 'भूर्भुवःस्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत् । केचिदतिसर्जनं प्रत्यतिसर्जनं च नेच्छन्ति । कर्मान्ते प्रायश्चित्तानि संस्थाजपं च कुर्यात् । सर्वदा यज्ञमना भवेदुदङ्मु-

**ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ॥ ६ ॥ अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥ अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥ ८ ॥**

खश्च ॥ ६ ॥ क्वचिन्नामधेयेन होम उक्तः । 'सावित्र्यै ब्रह्मणे' इत्यादि । क्वचिन्मन्त्रेण होम उक्तः । 'अग्ने नय सुपथा राये अस्मान्' इति चतसृभिरिति । यत्र तु नोभयथा तत्र तु नामधेयेन कथं होमः स्यादित्येतत्सूत्रम् । प्राजापत्यस्य[2] स्थालीपाकस्य हुत्वा काम्याश्चरव इत्यादौ ॥ ७ ॥ यत्र होमस्यानादेशः कर्मणश्चादेशस्[3]तत्रैता देवता होतव्याः । कुत्र । जातकर्मादौ । तर्हि रथारोहणेऽपि

१ प्रतीचो दक्षिणस्याश्चान्तरालं नैर्ऋतिमित्यर्थः । २ तच्छब्दार्थं ब्रूते प्राजापत्यस्येति । ३ आदेशः कथनम् ।

स्यात् । एवं तर्हि अन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते न मन्त्रः चौलकर्मादौ 'नैके कांचन' (गृ० १।४।६) पक्षे तत्रैताभ्यो देवताभ्यो जुहोति मन्त्रानादेश इतीयमेव व्याख्या साध्वी । मन्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति । 'यत्र परशाखे होमश्चोद्यते स्वशाखे तु कर्ममात्रं तत्रैता देवता भवन्तीति' । क्व । जातकर्मादौ ॥ ८ ॥ एकबर्हिरादिर्येषां पाकयज्ञानां ते तथोक्ताः । तुल्यकाला एककालाः । एकस्मिन्काले यद्यनेके

**एकबर्हिराद्याज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥ ९ ॥ तदेषाभियज्ञगाथा गीयते । पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः । एकस्वि-**

पाकयज्ञाः कार्यत्वेन प्राप्तास्तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणम् । यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेककालत्वम् । यदा वाऽग्रयणाऽश्वयुजी कर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम् ॥ ९ ॥ बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति—तस्मिन्नर्थे एषा यज्ञगाथाऽभिगीयते[2] पठ्यते । बहून्पाकयज्ञानेकस्मिन्काले

१ शाखान्तरे । २ गै शब्दे कर्मणि लट् ।

० सू० समासाद्य माप्य एकाज्यानेकबर्हिष एकस्विष्टकृतः कुर्यान्नानापि सति दैवते । न प्रतिदैवतं तन्त्र- वृ० अ० १
१० ॥ मावर्तयितव्यमित्यर्थः ॥ १० ॥ इति प्रथमे तृतीया कण्डिका ॥ ३ ॥ अनेन चौलकर्मादीनां कालो विधीयते । उदग्यदा गच्छत्यादित्यस्तदुदगयनम् । तथा लोकप्रसिद्धेः । आपूर्यमाणस्य चन्द्रस्य यः पक्षः स तथोक्तः । स हि मासस्य च पक्षस्य च कर्ता । अथवा । आपूर्यमाणश्चासौ पक्षश्च आपूर्यमाणपक्षः । स हि चन्द्ररश्मिभिरापूर्यते शुक्लपक्ष इत्यर्थः । ज्योतिःशास्त्राविरुद्धं

ष्टकृतः कुर्यान्नानापि सति दैवते ॥ १० ॥ इति ॥ ३ ॥ उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥ १ ॥

कल्याणं नक्षत्रम् । चौलकर्मेति चौलस्यैव संज्ञान्तरं न तु व्रतादेशानामयं काल इष्यते । स कथं प्राप्नोति? । उपनयनातिदेशात् । तर्हि अत्र गोदानग्रहणमपार्थकम् । चौलातिदेशात् । उच्यते । समावर्तनार्थं गोदानग्रहणम् । 'गोदानिकं कर्म कुर्वीत' इति कर्मग्रहणं यथा कर्मणोऽन्यानियमे वाग्यमनादिकं निवर्तयति तथा कालमपि निवर्तयेत् । तस्माद्गोदानग्रहणं? यत्र गोदानगन्धोऽप्यास्ति तत्रापि यथा स्यात् । तर्हि समावर्तनग्रहणमेव कार्यम् । उच्यते । लाघवार्थं गोदानग्रहणम् ॥ १ ॥ ॥ १० ॥

एके आचार्याः सर्वस्मिन्काले विवाहमिच्छन्ति । नोदगयनादिनियमः । तेषां कोऽभिप्रायः? । दोषश्रवणात् 'ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति । अन्ये च लौकिका दोषाः समुत्पद्यन्ते ॥२॥ तेषांग्रहणं किमर्थम्? । विवाहस्यानन्तरत्वात्सर्वेषां प्राप्त्यर्थमिति चेत् । तन्न । दर्शनात्सर्वेषां स्युः । यदयं विवाहे चतुर्थीमित्याह । उच्यते । तेषां संबन्धिन्योऽन्तर्वर्तिन्य एता आहुतयो भवन्ति न तु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषांग्रहणम् । तर्हि पुरस्ताद्ग्रहणमपार्थकम् । न । प्रयोजनमुपरिष्टाद्वक्ष्यामः । संख्यावचनं किमर्थम्? । तत्रैके ब्रुवते । 'यत्र परिमाणवचनं प्रत्यृचग्रहणं वा

**सार्वकालमेके विवाहम् ॥ २ ॥ तेषां पुरस्ताच्चतस्र आज्याहुतीर्जु-**

नास्ति 'धाता ददातु दाशुष इति द्वाभ्यां' इत्यादौ तत्र कथं प्रत्यादेशं होमः स्यादिति' । तदसत् । एकमन्त्राणि कर्माणीति न्यायात् । अपि च । स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्तः । स च प्रदानार्थः[1] । न च तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ । तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम् । का पुनरस्य गतिः? । तत्रैके नियमार्थमिति प्राहुः ।

---

१ स्वाहा देवहविर्दाने ।

'समुच्चयपक्षेऽपि कथं चतस्र एव स्युर्न बह्वय इति । कथं प्रयोगः । एकैकस्या ऋचोऽन्ते एकैका आहुतिरिति'। तदप्यसत् । प्राधान्येनाहुतिविधिप्रकरणत्वादाहुतिसमुच्चय एव । न मन्त्रसमुच्चयः । किमर्थं तर्हीदं? नियमार्थमेव चतस्र एव स्युरिति । तेनाज्यभागौ न भवतः । तर्हि स्विष्टकृदपि न स्यात् । न । पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम् । आघारौ तु स्त एव । अनाहुतित्वात् ।

हुयात् ॥ ३ ॥ अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदे-तान्यन्य इति च व्याहृतिभिर्वा ॥ ४ ॥ समुच्चयमेके ॥ ५ ॥ नैके

आज्यग्रहणं? परिस्तरणविकल्पार्थम् ॥ ३ ॥ चतसृभिः । चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता । व्याहृतिभिश्च भूः स्वाहेत्यादिभिः ॥ ४ ॥ एके आचार्या ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चय-मिच्छन्ति । तेनाष्टाहुतयः ॥ ५ ॥ एके आचार्याः कामप्याहुतिं नेच्छन्ति । नैक इत्येव वक्तव्ये कांचनग्रहणं? ऋगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् । अन्यास्त्वाहुतयो होतव्या ॥ ११ ॥

॥ ११ ॥

इत्येवमर्थम् । किम्शब्दस्य सर्वनामत्वात् । सर्वनाम्नां च प्रकृतपरामर्शित्वात् । तेनाऽनादेशाहुतयः सिद्धाः ॥ ६ ॥ अत्र संशयः । पूर्वस्या बाध उतोत्कर्ष इति । उत्कर्ष इति ब्रूमः । असमानजातित्वात् । समानजातेरेव हि बाधो विहितः । एष समानजातिधर्म इति तच्छब्दचोदितश्च समानजातिर्भवति । यथा । अथ सामिधेन्यस्ताः सामिधेन्य इति । अत्र चातच्छब्दचोदितत्वान्न बाधोऽपि तूत्कर्षः । यथा 'प्रतिप्रस्थाता वाजिने तृतीय' इत्यत्र आग्नीध्रस्योत्कर्षस्तद्वदत्रापि ।

काञ्चन ॥ ६ ॥ त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थीम् ॥७॥

॥ ४ ॥ कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्

अपि च । संख्यानिर्दिष्टो न पूर्वं बाधते । यत्र तु बाधते तत्र स्थानग्रहणं करोति । यथा तृतीयाहुतिस्थाने महाव्रतमिति । तस्मादुत्कर्ष इति सिद्धम् ॥ ७ ॥ इति प्रथमे चतुर्थी काण्डिका ॥४ ॥
कुलशब्देनोभौ वंशौ महापातकादिरहिताविति सिद्धौ तथाऽपस्मारादिदोषरहिताविति । कुलमग्रे प्रथमं परीक्षेत । कथम् । ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् । 'ये मातृतः पितृतश्च दशपुरुषं

समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्यं निनयेयुः पितृतश्चैके' इति। अग्रेवचनं? वधूवरगुणेभ्यः कुलमेव प्रधानं स्यादित्येवमर्थम् ॥ १ ॥ अथ वरगुणमाह—अर्थदर्शिनी बुद्धिः। कोऽर्थः?। यः शास्त्राविरुद्धः। तद्वते बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥ अथ कन्यागुणमाह—बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत स्वीकुर्यात्। यत्र

॥ १ ॥ बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥ बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत ॥ ३ ॥ दुर्विज्ञेयानि लक्षणानीति ॥ ४ ॥ अष्टौ पिण्डान्कृत्वा, 'ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम्। यदियं

स्वमनो रमते तद्रूपम् ॥ ३ ॥ लक्षणानां दुरवगाहत्वं मत्वा परीक्षान्तरमाह—लक्षणानि दुर्ज्ञेयानीति कृत्वा एवं परीक्षेत ॥ ४ ॥ क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याऽष्टौ पिण्डान्कृत्वा 'ऋतमग्रे' इत्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति। पुनः पिण्डग्रहणं? कुमार्या अभिम-

१ उपायमः स्वीकरणे इति आत्मनेपदम्। २ कठिनत्वम्।

न्त्रणं माभूत्। सापि हि द्वितीयानिर्दिष्टा ॥ ५ ॥ उभयतःसस्यात्क्षेत्रादाहृतं मृत्पिण्डं गृह्णीयाच्चेदस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवमुत्तरत्रापि ज्ञेयम्। यदेकस्मिन्संवत्सरे द्विः फलति तदुभयतःसस्यं क्षेत्रम्। अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषम्। अविदासिहृदो नामा-

कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥ ५ ॥ क्षेत्राच्चेदुभयतः-सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी ॥ ६ ॥ ॥ ५ ॥

ऽशोष्यं ह्रदम्। देवनं द्यूतस्थानम्। यत्रोप्तं बीजं न प्ररोहति तदिरिणम्। द्वौ प्रव्रजतीति द्विप्रव्राजिनी। स्वैरिणीति यावत्। पतिं हन्तीति पतिघ्नी। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यम्। उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते ॥ ६॥ इति प्रथमे पञ्चमी कण्डिका ॥ ५ ॥

---

१ दरिद्रेत्यर्थः। २ इरिणं शून्यमूषरम्।

सू० कन्यामलंकृत्योदकपूर्वां दद्यात् । एष विवाहो ब्राह्मसंज्ञो १ भवति । तस्यां कन्यायां जातो द्वादशा-ऽवरानुत्पत्स्यमानान् द्वादश परान्[1] पुनाति । उभयतो मातृतः पितृतश्चेत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ।

३ ॥ अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो १ विवाहः । तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयतः । ऋत्विजे वितते *कर्मणि दद्यादलंकृत्य स दैवो २ दशावरान्दश परान्पुनात्युभयतः । सह धर्मं चरत इति प्राजापत्यो ३ ऽष्टावरानष्ट परान्पुनात्युभयतः । गोमिथुनं दत्त्वोपयच्छेत स आर्षः ४ सप्तावरान्सप्त परान्पुनात्युभयतः । मिथः समयं कृत्वोपयच्छेत स गान्धर्वः ५ । धनेनोपतोष्योपयच्छेत स

वितते कर्मणीति । वैतानिके कर्मणी[2]त्यर्थः २।३।४। मिथःसमय[3]करणं नाम त्वं मम भार्या भव अहं तव पुरु[4]षो भवामीत्येवंरूपो विवाहो गान्धर्वसंज्ञः ५ । कन्यापित्रे धनदानेन यो विवाहः स आसु-



१ उत्पन्नान् । २ यागकर्मणीत्यर्थः । ३ शपथः । ४ पतिः ।

रसंज्ञः ६ । सुप्तेभ्यः प्रमत्तेभ्योऽसावधानेभ्यः कन्यामपहृत्य यो विवाहः स पैशाचसंज्ञकः ७ । युद्धं कृत्वा कन्यामपहृत्य यो विवाहः स राक्षससंज्ञकः ८ । एवमेतेऽष्टौ विवाहाः । तत्र पूर्वेषु चतुर्षु पूर्वपूर्वः प्रशस्तः । उत्तरेषु चतुर्षु उत्तरोत्तरः पापीयान् । तत्र पूर्वौ[1] ब्राह्मणस्य । इतरयोः[2] प्रतिग्रहाभावात् । आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य । पुराणे दृष्टत्वात् । राक्षसश्च तस्यैव । युद्धसंयोगात् । आसुरस्तु वैश्यस्य । धनसंयोगात् । इतरे त्रयोऽनियताः ॥१॥ इति प्रथमे षष्ठी कण्डिका

**आसुरः ६ । सुप्तानां[3] प्रमत्तानां[3] वापहरेत्स पैशाचः ७ । हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः ८ ॥१॥ ॥६॥ अथ खलूच्चावचा**

॥ ६ ॥ अथशब्दोऽधिकारार्थः । यद्वक्ष्यते तद्विवाहे वेदितव्यमिति । खलूक्तः । उच्चावचग्रहणं कथम् ? । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् । नैकेन कर्त्रा समुच्चेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे सति अन्वये सिद्धे तानीतिवचनं ?

१ ब्राह्मदैवौ । २ कर्तरि षष्ठीयम् । ३ षष्ठीचानादरे इति षष्ठी ।

कुलधर्मा अपि कार्या इत्येवमर्थम् । तान् । तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं ?
कृत्स्ने विवाहे यथा स्युरित्येवमर्थम् । इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः ।
उपयमनं नाम 'कन्यायाः स्वीकरणम्' । प्रतीयादिति । कुर्यादित्यर्थः ॥ १ ॥ किमर्थमिदम् । यथा
अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थं तर्हि 'जनपदादिध-

**जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ॥ १ ॥ यत्तु समानं तद्वक्ष्यामः ॥ २ ॥ पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं**

र्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यान्न जनपदादिधर्ममिति' । यद्व-
क्ष्यामस्तत्सर्वत्र समानमेवेत्यर्थः । वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु 'ब्रह्मचारिणौ त्रिरात्रम्'
इति ब्रह्मचर्यं विहितम् । तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम् ॥ २ ॥ अग्निप्रतिष्ठापनो-
त्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भं प्रतिष्ठापयेत् । तत आज्यस्य बर्हिषि

१ आदिना ग्रामकुलग्रहः । २ एकहलादावित्यादिना उदकस्य उदादेशः ।

सादनान्तं कर्म कृत्वा, समन्वारब्धायां वध्वां इध्माभ्याधानान्तं कृत्वा, ततः पूर्वोक्ता आज्याहुतीर्हुत्वा, तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात्। गृभ्णामीत्युक्त्वा पुत्रकामश्चेत्[1]। मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम्। दृषत् प्रसिद्धा। अश्मा तत्पुत्रकः। तत्रोभयोः प्रतिष्ठापनं सिद्धम्। एवं चेद्दोषः। 'अश्मानमारोहयति' (गृ० १।७।७) इत्यत्र पुत्रकारोहणं स्यात्। तर्हि अश्मग्रहणं तस्य विशेषणं स्यात्। दृषदमश्मानामिति। अश्ममयीमित्यर्थः। मृन्मय्यपि हि लोके दृषद्विद्यते। तर्हि पुत्रकप्रतिष्ठापनं न स्यात्। न। स्यादेव मङ्गलार्थत्वात्[2]। दक्षिणतः

## समन्वारब्धायां हुत्वा तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि

पत्न्युपविशेदुत्तरतः पतिरिति शास्त्रान्तरे[3] दृष्टम्। स्रुवेण होमः। साधनान्तराऽनुपदेशात्। एवंभूता व्यक्तहोमेत्यनेनैवावस्थाने सिद्धे 'तिष्ठन्समिधमादध्यात्' (श्रौ०) इत्यत्र तिष्ठन्ग्रहणं कथम्?। अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थम्। ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठन्ग्रहणम्। प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम्। 'तस्य नित्याः प्राञ्चश्चेष्टाः' (श्रौ० १।१।८) इत्यनेन प्रा-

१ एतच्च पूर्वान्वयि। २ शोभा मङ्गलम्। ३ सूत्रान्तरे।

ङ्मुखत्वे सिद्धे प्राङ्मुख्या इति वचनं? प्रत्यङ्मुखाधिकारनिवृत्त्यर्थम् । आसीनाया इत्येतत्कथम्? । इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्याःस्यादित्येवमर्थम् । उत्तानेनोत्तानं पाणिं गृह्णीयान्नीचेन चोत्तानम्' इति शाखान्तरे दृष्टम् । पुत्रशब्दः पुंसि स्त्रियां च स्मृतौ दृष्टः 'अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ' इति ॥ (मनुः ९।१३६) दौहित्रेन मातामहः पौत्री भवतीत्यर्थः । लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते । एहि

**ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥ ३ ॥ अगुलीरेव स्त्रीकामः ॥ ४ ॥ रोमान्ते हस्तं**

पुत्रेति । मन्त्रे च दृश्यते । 'पुमांस्ते पुत्रो जायताम्' इति । तस्मात्पुमांसः पुत्रा इति विशेषणम् । अथवा । 'पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा' इति ॥ (मनुः ९।१३८) एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थमुभयोर्ग्रहणम् ॥ ३ ॥ एवकारोऽङ्गुष्ठनिवृत्त्यर्थः । स्त्रीकामो दुहितृकाम इत्यर्थः ॥ ४ ॥ उभयकामः पुत्रदुहितृकामः

अङ्गुष्ठाङ्गुलीभिः सह हस्तं गृह्णीयात् ॥ ५ ॥ अग्निमुदकुम्भं च त्रिःप्रदक्षिणं वधूं स्त्रीं परिणयञ्जपति । अमोहमस्मीति । उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके । अन्ये तु विवाहे यदन्यद्दृष्टं पात्रं अश्मा तस्यैव बाहिःकरणार्थमिति । त्रिर्ग्रहणं परिणयनेन संबध्यते उत जपेन । यदि

साङ्गुष्ठमुभयकामः ॥ ५ ॥ प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयञ्जपति । अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह विवहावहै । प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ॥ ६ ॥ परिणीय परिणीया-

पूर्वेण तर्हि सकृज्जपः स्यात् । अथ जपेन तर्हि सकृत्परिणीतिः । पूर्वेणेति ब्रूमः । कुतः । परिणीय परिणीयेति तस्य बहुत्वं दर्शितम् । जपश्च परिणयाङ्गमिति[2] कृत्वा यावत्परिणयनमावर्तते ॥ ६ ॥ वीप्साद्विर्वचनं सर्वपरिणयनेष्वश्मानमारोहणं कारयितव्यमित्येतदर्थम् । अथास्य कर्मणः कः

१ एतस्य पूर्वेण सममन्वयः । २ अङ्गस्य प्रधानानुगुणत्वादिति भावः ।

कर्ता? । आचार्यः। कुतः । वक्ष्यति । 'शिरसी उदकुम्भेनावसिच्य' ( गृ० १.७.२० ) इति । स्वयं-कर्तृत्वे सति अवसेचनं कर्तुं न शक्यत इति । तदसत् । आचार्येण ह्ययं विसृष्टो विवाहं करोति । उदकुम्भग्रहणं तु तत्रस्थमुदकं लक्षयति ॥ ७ ॥ ततो वध्वञ्जलौ उपस्तीर्य, वध्वा भ्रात्रादिर्द्विर्लाजा-

अश्मानमारोहयतीममश्मानमारोहाश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति ॥७॥ वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥८॥ त्रिर्जामदग्न्यानाम् ॥९॥ प्रत्यभिघार्य हविः

नावपति । वरो जामदग्न्यश्चेत्त्रिः[1] । तत शेषं मत्यभिघार्य, अवदानं च मत्यभिघारयति । एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति । भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च[2] ॥ ८ पश्चावत्तिनामित्यर्थः ॥ ९ ॥ हविःशब्दः शेषे वर्तते । यथा नात्र हवींषीति ॥ १० ॥ अवदानमित्यर्थः । उपस्तरणाभिघारणे कः

१ अत्र मानं त्रिर्जामदग्न्यानामित्यग्रिमं सूत्रम् । २ इदमुपलक्षणं पैतृष्वस्रीयश्च ।

करोति? । भ्राता । कुतः । समानकर्तृत्वनिर्देशात् । तदयुक्तम् । यदि ह्यत्र भ्राताऽभिप्रेतः स्याद्ध्रुवअलौ भ्रातोपस्तीर्येत्येवावक्ष्यत् । तस्माद्वर एव करोति । यत्तूक्तं समानकर्तृत्वनिर्देशादिति तत्र ब्रूमः । असमानकर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते । यथा 'आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्' इति होमे ब्रह्मा कर्ता । दाने यजमान इत्यादिषु पूर्वकालतामात्रमेव विवक्षितं तद्वदत्रापि

॥ १० ॥ अवत्तं च ॥ ११ ॥ एषोऽवदानधर्मः ॥ १२ ॥ अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातुनामुतः स्वाहा १ । वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः

॥ ११ ॥ यत्र यत्रावदानमस्ति तत्र तत्रैष धर्मो भवतीत्यर्थः । मध्यात्पूर्वार्धाच्च हविषोऽवद्यतीत्यादौ ॥ १२ ॥ को जुहोति? । वधूः । कुतः । अविच्छिन्दत्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः? । वध्वाः । कुतः । सा हि जुहोति । मन्त्रलिङ्गात् । कन्या अग्निमयक्षतेति । तदसत् । न हि स्त्रीणां मन्त्रेष्वधिकारोऽस्ति । ननु कथं पत्नीवाचने? । तत्र वचनमस्ति । अत्र तु सन्दिग्धम् ।

१ एतस्य मन्त्रेण सह संबधः ।

 

तस्माद्वरस्य मन्त्राः। मन्त्रलिङ्गाच्च। 'स इमां देव' इति हि परोक्षनिर्देशः। यदि हि वध्वाः स्युः स इमां देव इति न स्यात्। यत्तूक्तं सा हि जुहोतीति। तत्र ब्रूमः। अन्यस्याऽपि मन्त्रो दृश्यते। अध्वर्युर्जुहोति होता वषट्करोति। यत्तूक्तं मन्त्रलिङ्गादिति। तत्र ब्रूमः। न ह्यत्रेयं कन्याऽभिधीयते। अन्या एव तु कन्याः। यदीयमभिधीयेत बहुवचनं नोपपद्येत। तथाभूतश्च प्रत्ययः। तस्माद्वरस्येति सिद्धम्॥ १३॥ अप्राप्तनिषेधः किमर्थः?। चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येव-

प्रेतो मुञ्चातुनामुतः स्वाहा २। पूषणं नु देवं कन्या अग्निमयक्षत। स इमां देवः पूषा प्रेतो मुञ्चातुनामुतः स्वाहा ३। त्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात्॥ १३॥ अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम्॥१४॥

मर्थमित्येके। अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि। तत्र त्रयो होमाः। तत्र कथं पूर्वं पूर्वं परिणयनं कृत्वा पश्चाद्धोमः स्यादिति ज्ञापयितुमिति। शूर्पपुटः कोणः। तूष्णींवचनं प्रजापतिज्ञापनार्थम्। चतुर्थग्रहणं कथम्?। एतस्य द्रव्यस्य स्विष्टकृतं न स्यात्स एव च कर्ता यथा स्यादिति। तेन वधूर्जुहोति॥ १४॥ अभिमतार्थज्ञापनार्थो हशब्दः। एके लाजानोप्योप्य पश्चात्परिणयन्ति। ॥ १७ ॥

किमिति ?। तथा सत्युत्तमे आहुती न सन्निपतत इति कृत्वा । पूर्वस्मिंस्तु पक्षे उत्तमे आहुती सन्निपततः।
कोऽयं सन्निपातो नाम । यदि पूर्वाहुतिशिरसि प्रक्षेपः। न तर्हि क्वचिदप्यसाविष्यते किं पुनः पूर्वस्मि-
न्पक्षे । अथानन्तर्यम् । न तर्ह्यसौ दोषः । पार्वणादौ दृष्टत्वात् । तस्मादयमर्थः । यथोत्तमे आहुती
न सन्निपततस्तथा कर्तव्यम् । उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः । कथं वा न स्यात् ? ।
अपरिणीय शूर्पपुटेनाभ्यात्ममिति । अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत् । अथवा पूर्वस्मिन्पक्षे

**ओप्योप्य हैके लाजान्परिणयन्ति तथोत्तमे आहुती न सन्निपततः ॥ १५ ॥ अथास्यै शिखे विमुञ्चति यदि कृते भवतः ॥ १६ ॥ ऊर्णा-**

उत्तमे सन्निपततः । अत्र तु न सन्निपतत इति वदन्नपरिणीयवचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि
पक्षे पूर्वं परिणयणं कृत्वा पश्चाद् होमो न चानन्तर्येण होम इति ज्ञापयति । यदि त्वानन्तर्येण होमः
स्यात्सर्वासामेव सन्निपातादुत्तमयोराहुत्योः पूर्वस्मिन्पक्षे सन्निपात इति नोपपद्यते ॥१५॥ अथशब्द
इदानीं स्विष्टकृन्निवृत्त्यर्थः । अस्या इति वरस्य निवृत्त्यर्थः । यदीत्यनित्ये । देशधर्मादिना यदि

सू० कृते भवतः ॥ १६ ॥ के कृते भवत इत्याह—प्र त्वा मुञ्चामीति दक्षिणां शिखां विमुञ्चति ॥ १७ ॥ वृ० अ० १
प्रेतो मुञ्चामीत्युत्तरां शिखां विमुञ्चति । वरस्य तु शिखे तूष्णीं विमुञ्चति ॥ १८ ॥ अथशब्दः
१८ ॥ पूर्वेण तुल्यः । एनां वधूम् । अपराजिता प्रागुदीची । तत्र सप्त पदान्यभ्युत्क्रामयाति वधूं सप्तभिर्म-
न्त्रैः । वाक्यस्य साकाङ्क्षत्वाद्भावादेश्च योग्यत्वात्सन्निहितत्वाच्च प्रत्येकं संबध्यते । यथा रहस्ये

स्तुके केशपक्षयोर्बद्धे भवतः । प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥१७॥
उत्तरामुत्तरया ॥ १८ ॥ अथैनामपराजितायां दिशि सप्तपदान्यभ्यु-
त्क्रामयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय
चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा
मामनुव्रता भव । पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥१९॥

उल्लिखामीति शब्दः 'प्राणाय त्वापानाय त्वा व्यानाय त्वोल्लिखामि' इत्यन्त्ये वाक्ये पठितोऽपि
पूर्वत्रापि संबध्यते तद्वदत्रापि । ऐतरेयिभिरप्युक्तं 'भवादि सर्वत्र समानम्' इति । तेन इष एकपदी ॥ १८ ॥

भव सा मामनुव्रता भवेति सर्वत्र संबन्धनीयम् ॥ १९ ॥ सप्तमे पदे अभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी सन्निधाय केनचिदुदकुम्भमानाय्य, तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाज्येन स्विष्टकृतं जुहोति ॥ २० ॥ ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात्तदा एवंगुणयुक्ताया ब्राह्मण्या गृहेऽनन्तरां रात्रीं वसेत् । वसतिं कुर्यादित्यर्थः । स्वग्रामे विवाहश्चेन्नायं विधिः ॥ २१ ॥ समाप्ते होमे

**उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य ॥ २० ॥ ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रीं वसेत् ॥ २१ ॥ ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नीं प्रजां**

रात्रौ ध्रुवादीन्दृष्ट्वा वाचं विसृजेत 'जीवपत्नीं' इति मन्त्रेण । इदानीं वाग्विसर्जनविधानाद्धोमादारभ्य एतावन्तं कालं वाचो नियम इति गम्यते । कस्यायं वाग्विसर्गः । वध्वाः । कुतः । मन्त्रलिङ्गात् । तथा हि । जीवः पतिर्यस्याः सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । 'विभाषा सपूर्वस्य'

---

१ आर्षत्वाद्व्यत्ययेनात्मनेपदम् ।

इति ङीप्प्रत्ययो नश्चान्तादेशः ॥ २२ ॥ इति प्रथमे सप्तमी कण्डिका ॥ ७ ॥ विवाहहोमानन्तरं स्वगृहं गन्तव्यम् । तत्र यदि ग्रामान्तरे गृहं स्यात् । तथा सति तत्र प्रयाणे यदि यानमुपपद्यते । तथा सत्युपपद्यमाने याने यानमारोहयेद्वधूं पूषेत्यादिना मन्त्रेण । तेन प्रयाणे यानस्याऽनियमः ।

विन्देयेति ॥ २२ ॥ ॥ ७ ॥ प्रयाण उपपद्यमाने 'पूषा त्वेतो नयतु हस्तगृह्येति' यानमारोहयेत् ॥ १ ॥ 'अश्मन्वतीरीयते संरभध्वमि'–त्यर्धर्चेन नावमारोहयेत् ॥ २ ॥ उत्तरेणोत्क्रमयेत् ॥ ३ ॥ 'जीवं

यानादन्येन शिबिकादिना प्रयाणे च न भवति मन्त्रः । स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधिः ॥ १ ॥ यद्यन्तरा नाव्या[1] नदी स्यात्तदाऽनेनार्धर्चेन नावमारोहयेत् । वधूमिति[2] शेषः ॥ २ ॥ उत्तरेणार्धर्चेन । अत्राजहामेत्यर्धर्चेन वधूमुदकादुत्तारयेत् ॥ ३ ॥ नीयमाना वधूः यदि रोदिति

१ नावा तार्या नाव्या नौवयोधर्मेत्यादिना यत् वान्तो यि प्रत्यये इत्यात्रादेशः । २ गतिबुद्धीत्यादिना कर्मत्वम् ।

बन्धुवियोगात्तदा एतां जपेत् । अयं विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ ४ ॥ विवाहाग्निग्रहण-मग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थम् । अजस्रग्रहणं ध्रियमाणस्य नयनार्थम् । तेनान्यत्र प्रयाणे समारोपणं कृत्वा नयनं गम्यते । अयं च विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ ५ ॥ कल्याणेषु

रुदन्तीति' रुदत्याम् ॥ ४ ॥ विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥ ५ ॥ कल्याणेषु देशवृक्षचतुष्पथेषु 'माविदन्परिपन्थिन' इति जपेत् ॥ ६ ॥ वासेवासे 'समुङ्गलीरियं वधूरि'–तीक्षकानीक्षेत ॥ ७ ॥ 'इह प्रियं प्रजया ते समृध्यतामिति' गृहं प्रवेशयेत् ॥ ८ ॥ विवाहाग्निमुपसमा-

विवाहादिशोभनेषु देशवृक्षचतुष्पथेषु एताञ्जपेत् ॥ ६ ॥ वसतौवसता ईक्षकाः सन्ति चेत्तानेतयेक्षेत । वासादन्यत्रेक्षणे मन्त्रः । वीप्साद्विर्वचनं प्रतिवसति[2] मन्त्रप्राप्त्यर्थम् ॥७॥ अनया वधूं गृहं प्रवेशयेत् । इदमादयो विधयः स्वग्रामेऽपि विवाहे भवन्ति ॥ ८ ॥ अग्निप्रणयनान्तं कृत्वाऽग्निमुपसमादधाति ।

---

१ प्रज्वलय्येत्यर्थः । २ वीप्सायामव्ययीभावः ।

समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः। ततः पश्चादस्याऽऽनडुहं चर्मास्तृणाति। प्राग्ग्रीवमुत्तरलोम ऊर्ध्वलोम। ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिश्चर्मण्युपविष्टायां समन्वारब्धायां वध्वामिध्माधानाद्याज्यभागान्तं कृत्वा 'आ नः प्रजामिति' चतसृभिः प्रत्यृचं हुत्वा ततः समञ्जन्त्वित्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत्। सा तु तूष्णीं प्राश्नाति। सकृत्प्रयुक्तस्य मन्त्रस्य उभयप्राशनार्थत्वादुभयार्थत्वम्। नाविति मन्त्रे द्विवचनात्। आज्यशेषेण

**धाय पश्चादस्याऽऽनडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम्। 'आ नः प्रजां जनयतु प्रजापतिः' इति**

त्वोभयोर्हृदये अनक्ति तेनैव मन्त्रेण। हृदये अत ऊर्ध्वमिति विवृत्या पाठः कार्यः। प्रगृह्यत्वात्। ततः स्विष्टकृतादि समापयेत्। विवाहाग्निग्रहणमन्यनिवृत्त्यर्थम्। कथं पुनरन्याग्निप्राप्तिशङ्का?। 'गृह्याणि वक्ष्यामः' (गृ० १।१।१) इति प्रतिज्ञातम्। उच्यते। दायविभागकालेऽग्निः परिगृह्यते चेदत्राप्यन्योऽग्निः प्रसज्येत तन्निवृत्त्यर्थमिदम्। आपि चात्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्ने-

१ अनड्वान् वृषभः। तस्येदम्। २ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु इतिधातोर्लटिरूपम्।

गृह्यत्वसिद्धिः। किंतर्हि गृहप्रवेशनीयहोमे कृते। एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिर्नैकेनेति ज्ञाप्यते। तेन गृहप्रवेशनीयहोमादर्वाग्दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः । परिचरणहोमस्तु कार्य एव । 'पाणिग्रहणादि' (गृ० १।९।१) इति वचनात् । वैश्वदेवं च कार्यमेव। तस्याग्निविशेष-विध्यभावात् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम् । उपसमाधायेति आस्तरणकालोपदेशा-र्थम् । अथवा । समानकर्तृकत्वसिद्ध्यर्थम् । तेन यत्रोपसमाधानग्रहणं नास्ति तत्राऽन्यो वोपसमा-

चतसृभिः प्रत्यृचं हुत्वा 'समञ्जन्तु विश्वेदेवा इति दध्नः[१] प्राश्य प्रति-प्रयच्छेदाज्यशेषेण वानक्ति हृदये[२] ॥१॥ अक्षारालवणाशिनौ ब्रह्मचा-

धानं कुर्यात् । तस्मिन्निति वचनं चर्मास्तरणानन्तरं तन्त्रान्तरमिति ज्ञापनार्थम् । प्रत्यृचग्रहणं कथम् ? । ऋगन्ते होमः स्यान्न स्वाहाकारान्ते इत्येवमर्थम् । स्वाहाकारं पठञ्जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चाद्धोमः । आज्यशेषेणवेति सिद्धवदुपदेशादना-देशे[३]याज्येन होम इति गम्यते ॥ ९ ॥ विवाहादारभ्य एते नियमा भवन्त्युभयोः । 'हैडिम्बिका

---

१ शेषे षष्ठी । २ द्वितीयाद्विवचनमेतत् । ३ अत्रायादेशः ।

राजमाषा माषा मुद्गा मसूरिकाः । लङ्कयाढक्याश्च निष्पावास्तिलाद्याः क्षारसंज्ञिताः' गृहप्रवेशीयहोमात्प्रागपि नियमानामिष्टत्वाद्योगविभागः कृतः ॥ १० ॥ उत्तरावधिमाह—अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्याताम् ॥ ११ ॥ संवत्सरं वा नियतौ स्यातामेक ऋषिकल्पः[1] पुत्रो जायत इति कृत्वा । अन्ये त्वाहुः । व्रतान्ते एक ऋषिः संपद्यते । पितृ

१ ॥

रिणावलंकुर्वाणावधःशायिनौ स्याताम् ॥ १० ॥ अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम् ॥ ११ ॥ संवत्सरं वैक ऋषिर्जायत इति ॥ १२ ॥ चरितव्रतः सूर्याविदे वधूवस्त्रं[2] दद्यात् ॥ १३ ॥ अन्नं ब्राह्मणेभ्यः ॥ १४ ॥

गोत्रं विहाय पतिगोत्रं भजत इत्यर्थः ॥ १२ ॥ व्रतानन्तरं सूर्याविदे वध्वोपयमनकाले उपाहितं वस्त्रं दद्यात् । सूर्यया दृष्टो मन्त्रः सूर्या[3] । यथा वृषाकपिरिति । सा च 'सत्येनोत्तभिता' इति सूक्तम् । कथं तत्पुनरसौ वेत्ति ? स्वरतो वर्णत इत्यादि ॥ १३ ॥ दद्यादिति शेषः ॥ १४ ॥ ॐस्वस्ति

१ ईषदसमाप्तौ कल्पप्देश्यदेशीयरः इति कल्पप् । २ षष्ठीसमासोऽयम् । ३ उपचारादिति भावः ।

भवन्तो ब्रुवन्त्विति । ते च ॐस्वस्तीति प्रत्यूचुः ॥ १९ ॥ इति प्रथमेऽष्टमी कण्डिका ॥ ८ ॥ पाणिग्रहणप्रभृति गृह्यमग्निं परिचरेत्स्वयं पत्न्यादयो वा । पाणिग्रहणादिवचनं? गृहप्रवेशनीयहोमानन्तरकाले प्रारम्भाशङ्कानिवृत्त्यर्थम् । यद्विधास्यते तत्परिचरणम् । पत्नीकुमार्यौ न होमकर्म कुर्यातामित्येके । कुतः । स्त्रीणां मन्त्राऽनधिकारात् । अन्ये तु सहोमकम् । कुतः? । वचनात् ।

अथ स्वस्त्ययनं वाचयीत ॥ १५ ॥ ॥ ८ ॥ पाणिग्रहणादि गृह्यं परि[1]चरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा ॥ १ ॥ नित्या-

पत्नीसन्नहनवत् । अन्तेवासी शिष्यः ॥ १ ॥ अनुशब्दः परिशब्दस्य स्थाने । नित्यं परिगृहीत स्यादित्यर्थः । किमुक्तं भवति? । यदि विवाहाग्निर्नष्टः स्यात्ततो नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेदिति । अथवा । आत्मनः पत्न्या वा समीपे कथं नित्यः स्यात् । न । उभयोरन्यतरः स्थापयितव्य

---

१ पूजयेत् पूजा च तत्र होमादिः ।

 



इति । अथवा । होष्यद्धर्मस्योपलेपनादेर्निवृत्त्यर्थम् । तदपि हि कचग्रहणेन प्राप्नोति परिसमूहनादिवत् ॥ २ ॥ यदि प्रादुष्करणकाल उद्वासयेत्ततोऽन्यस्माद्धोमकालात्पत्न्युपवसेदित्येके । 'अयाश्चाग्न' इत्येकामाहुतिं जुहुयादित्येके । कुतः ? । शास्त्रान्तरे दर्शनात् । अन्ये तु पूर्वसूत्रमेवं व्याचख्युः । 'नित्यशब्द उक्तार्थः । नित्यमाचमनमिति यथा । अनुशब्दः पश्चाद्वचनः । एतदुक्तं भवति । यदि वैवाह्यो न गृहीतो दायविभागकाले गृह्यते । गृहीतोऽपि नष्टो वा द्वादशरात्रम-

**नुगृहीतं स्यात् ॥ २ ॥ यदि तूपशाम्येत्पत्न्युपवसेदित्येके ॥ ३ ॥ तस्या-**

तिक्रान्तः । तत उक्तया क्रियया पश्चाद्गृहीतो भवतीति' । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाज्याहुतयश्च हृदयाञ्जनं च भवति । नान्यत् । कन्यासंस्कारत्वात् । होमद्वयं चात्र समानतन्त्रं स्यात् । लाजहोमोऽत्रापि पत्न्यञ्जलिना कार्यः । तद्धोमे तस्य साधनत्वेन दृष्टत्वात् । लाजावपनं तु स्वयमेव करोति । न भ्राता । दायविभागकाले गृह्यमाणे प्रयोगविशेषोऽन्वेष्यः ॥ ३ ॥



१ उपवासोऽशनाभावः । २ ग्रन्थान्तरादित्यर्थः ।

तस्यग्रहणं योगविभागार्थम् । तस्याग्निहोत्रेणैव विधिर्भवति नान्येन । तेन पाकयज्ञतन्त्रं न भवति ॥ ४ ॥ तर्हि प्राशनादयोऽपि स्युरित्याशङ्क्याह—प्रादुष्करणं नामापराह्णे गार्हपत्यं प्रज्वाल्येति । एवं प्रातर्व्युष्टायामिति च । प्रदोषान्तो होमकालः सायं सङ्गवान्तः प्रातरिति । एतावेव भवतो नान्यदित्यर्थः ॥ ५ ॥ होम्यं चाग्निहोत्रेण व्याख्यातम् । 'पयसा नित्यहोम' इत्यादि पञ्च द्रव्याण्याम्नातानि । मांसवर्जमिति मांसप्रतिषेधाच्छास्त्रान्तरे दृष्टमपि होम्यं भवतीति गम्यते । 'पयो

**ग्निहोत्रेण ॥ ४ ॥ प्रादुष्करणहोमकालौ व्याख्यातौ ॥ ५ ॥ होम्यं च मांसवर्जं ॥ ६ ॥ कामं तु व्रीहियवतिलैः ॥ ७ ॥ अग्नये स्वाहेति सायं**

दधि यवागूश्च सर्पिरोदनतण्डुलाः । सोमो मांसं तथा तैलमापस्तानि दशैव तु ।' द्रवद्रव्याणि स्रुवेण जुहोति । कठिनानि तु पाणिना । येन द्रव्येण सायं जुहोति तेनैव प्रातः प्रतिनिधिवर्जम् ॥६॥ कामवचनं पूर्वोक्ताभावे कथमेतेषां ग्रहणं स्यादित्येवमर्थम् । व्रीह्यादयश्च प्रत्येकं साधनानि । न मिश्राणि । तच्च न्यायतोऽवगन्तव्यम् ॥ ७ ॥ तूष्णीं द्वितीये आहुती जुहोति । तूष्णींवचनं प्रजा-

---

१ वीप्सायामव्ययीभावः । विभक्तानीत्यर्थः ।

पतिध्यानार्थम् । उभयत्र सायं प्रातश्चेत्यर्थः । अग्निं परिसमूह्य परिस्तीर्य पर्युक्ष्य होमद्रव्यस्याऽग्निहोत्रवत्तूष्णीं संस्कारं कृत्वा, ततोऽग्नये स्वाहेति जुहोति । ततः प्रजापतय इति चतुर्थ्यन्तं शब्दरूपं ध्यात्वा, स्वाहेत्युपांशूक्त्वा, द्वितीयाहुतिं जुहोति । ततः परिसमूहनपर्युक्षणे । एवं सायम् । प्रातर्होमे तु पूर्वमन्त्रस्थाने सूर्याय स्वाहा इति विशेषः ॥ ८ ॥ इति प्रथमे नवमी कण्डिका ॥ ९ ॥

उक्तोऽर्थः । पर्वणि भवः पार्वणः । स्थालीपाक इति कर्मनामधेयम् । ज्योतिष्टोमादिवत् । दर्शपूर्ण-

**जुहुयात्सूर्याय स्वाहेति प्रातस्तूष्णीं[1] द्वितीये उभयत्र ॥ ८ ॥ ॥ ९ ॥**

**अथ पार्वणः स्थालीपाकः ॥ १ ॥ तस्य दर्शपूर्णमासाभ्यामुपवासः**

मासातिदेशात्काले सिद्धे पार्वणवचनं ? पाणिग्रहणाद्यहरहःक्रियाशङ्कानिवृत्त्यर्थम् । विवाहादनन्तरं या पौर्णमासी तस्यामस्य प्रारम्भः । प्रतिपद्यौपासनं हुत्वा ततः परिसमूहनादि प्रारभेत ॥ १ ॥

तस्यग्रहणं? नियमार्थम् । 'तस्यैवोपवासो यथा स्यात्तदतिदिष्टानां माभूदिति' । दर्शपूर्णमासाविति कर्मनामधेयम् । उपवास इत्येकभोजनम् । सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमशितव्यमित्यादयश्च

१ अमन्त्रकं प्रजापतिध्यानेनेत्यर्थः ।

नियमा लक्ष्यन्ते । तस्य ताभ्यामुपन्यासो व्याख्यात इत्यर्थः ॥ २ ॥ अनयोश्च बन्धनं ताभ्यां व्याख्यातम् । 'इध्मः पञ्चदशदारुक' इति शान्तिकर्मणि साधयिष्यामः[1] ॥ ३ ॥ देवताश्च ताभ्यां व्याख्याताः । उपांशुयाजादिवर्जम् । तेनाऽग्निरग्नीषोमौ पौर्णमास्याम् । अग्निरिन्द्राग्नी अमावास्यायाम् । तदुक्तं शौनकेन 'पौर्णमासी तु संप्राप्ताथ विवाहादनन्तरम् । ततः प्रक्रम्य कुर्वीत स्थालीपाकं तु कर्मसु ॥ तत्र यद्यप्यमावास्या विवाहानन्तरं यदा । तथापि पौर्णमास्यादिस्थाली-

**॥ २ ॥ इध्माबर्हिषोश्च सन्नहनम् ॥ ३ ॥ देवताश्चोपांशुयाजेन्द्रमहे-**

पाकक्रिया स्मृता ॥' अथेन्द्रमहेन्द्रयोर्निषेधः किमर्थः? सन्नयत एव हि ते विहिते । 'इन्द्रं महेन्द्रं वा सन्नयत' इति । न चात्र सांनाय्यं विहितम् । उच्यते । गृह्यकर्माणि तावदाहिताग्नेरपीष्यन्तेऽर्धाधान औपासनाग्नौ । सर्वाधाने तु कर्मणि पुनः संस्कुर्यात् । सन्नयत इति कर्तृविशेषणम् । दर्शे चासौ सन्नयन् भवति सोमेनेष्टवांश्चेत् । तेनात्राऽपि तस्य प्राप्नुतः । तस्मान्निषेधः । तर्हि

---

[1] वक्ष्याम इत्यर्थः ।

इन्द्राग्नी न स्यातामसन्नयत इति वचनात् । उच्यते । इन्द्राग्नी अस्याऽपि देवता भवत्येव । अत्र ह्यसावसन्नयन्निति कृत्वा । न चात्राभावः कर्तृविशेषणम् ॥ ४ ॥ उक्ताभ्योऽन्या या उपांशुयाजाद्या देवतास्ताः काम्या भवन्ति । कामे सति कर्तव्या इत्यर्थः । 'विष्णुं बुभूषन्यजेत' इत्येवमाद्याः काम्याः । अथ काम्यानां स्थान इत्येव सिद्धे उपांशुयाजादीनामपि निषेधः कृतः । तच्चात्र काम्यत्वेनाऽपि न क्रियेरन्निति भ्रान्तिः स्यात्तन्निवृत्त्यर्थमिदं वचनम् । अथात्र किं द्रव्य-



न्द्रवर्जम् ॥ ४ ॥ काम्या इतराः ॥ ५ ॥ तस्यैतस्यै देवतायै चतुर-

मुपांशुयाजस्य[1] तावदाज्यम् । तस्य विद्यमानत्वादादिष्टत्वाच्च । इन्द्रमहेन्द्रयोस्तु चरुः । सान्नाय्याभावात् ॥ ५ ॥ प्रणीताप्रणयनोत्तरकालं शूर्पे पवित्रे अन्तर्धाय व्रीहीन्यवान्वा असम्भवेऽन्यान्वा होम्यानेकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति । 'अमुष्मै त्वा जुष्टं निर्वपामि' इति । अमुष्मैशब्दस्य स्थाने चतुर्थ्या विभक्त्या देवतां निर्दिशेत् । चतुरश्चतुर इति वीप्सावचनं एकै-

१ साध्वर्थीयो यः ।

कस्यै देवतायै चतुश्चतुर्मुष्टिप्राप्त्यर्थम् । पवित्रे व्याख्याते ॥ ६ ॥ अथशब्दः कथम् ? । सर्वासामेव देवतानां निरुप्तेषु प्रोक्षणं स्यादित्येवमर्थम् । एतानिति बहुवचनं? 'संश्लिष्टानेव प्रोक्षेन्न विभज्ये- त्येवमर्थम्' । यथानिरुप्तमिति? 'तस्यैतस्यै देवतायै चत्वारिचत्वारि प्रोक्षणानि समन्त्रकेषु निर्वा- पेषु समन्त्रकाणि अमन्त्रकेष्वमन्त्रकाणि पवित्रे अन्तर्धाय कुर्यादित्येवमर्थम्' । निर्वापप्रोक्षणे

श्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्धायाऽमुष्मै त्वा जुष्टं निर्वपामीति ॥ ६ ॥ अथैनान्प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति ॥७॥ अवहतांस्त्रिःफलीकृतान्नाना श्रपयेत् ॥ ८ ॥ समोप्य वा ॥ ९ ॥ यदि

एकस्मिन्नेव पात्रे भवतः । उत्तरत्र विधानात् ॥ ७ ॥ कृष्णाजिने उलूखलं कृत्वा पत्न्यवहन्यात् । त्रिःफलीकृतानिति । त्रिःशुक्लीकृतानित्यर्थः । पिण्डपितृयज्ञे सकृत्प्रक्षाल्येति सकृद्ग्रहणादत्र त्रिः प्रक्षालयेत् । ततो नाना श्रपयेत् ॥८॥ एकत्र वा श्रपयेत् ॥९॥ यदि पृथक् श्रपयेत्तथा सति तण्डु-

१ पृथक् । २ श्रा पाके इत्यस्माण्णिजन्ताल्लिङ् ।

लानभिमृशेत् । 'इदममुष्मा इदममुष्मा' इति । अमुष्मैशब्दः पूर्ववत् ॥१०॥ यदि समोप्य श्रपयेत् । तथा सति चरुं व्युद्धृत्य, एवमभिमृश्य, ततो जुहुयात् । व्युद्धारमिति व्युद्धृत्येत्यर्थः । व्युद्धरणं नाम पात्रान्तरे पृथक्करणम् । जुहुयादितिवचनं होमकाले व्युद्धरेदित्येवमर्थम् ॥ ११ ॥ उत्तरतोऽग्ने-

नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इति ॥ १० ॥ यद्यु वै समोप्य व्युद्धारं जुहुयात् ॥ ११ ॥ शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्ममभिघार्या-ऽयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसे-

राज्यमुत्पूयाग्नेः पश्चाद्बर्हिरास्तीर्याज्यमासाद्य, ततः शृतानि हवींष्यभिघार्योदगुद्वास्य, बर्हिष्यासाद्य, तत इध्ममभिघार्य, 'अयन्त' इति मन्त्रेणाग्नावादध्यात् । बर्हिष्यासाद्य पुनरभिघार्येति केचित्प-

१ स्पृशेदित्यर्थः । २ आर्षःक्त्वाविषये णमुल् ।

ठन्ति ॥ १२ ॥ तूष्णींग्रहणं ? मन्त्रवर्जमन्ये धर्माः शास्त्रान्तरदृष्टाः कथं प्रवर्तेरन्निति । उत्तरपश्चिमाया आरभ्य दक्षिणपूर्वां प्रति अविच्छिन्नामाज्यधारां हरेत् । तथा दक्षिणपश्चिमाया आरभ्य उत्तरपूर्वां प्रत्याघारयेत् । स्रुवेणोभौ जुहुयात् । कुतः । यत्राज्यहोमे साधनान्तराऽनुपदेशस्तत्र स्रुवेण होम इति साधितम् 'एवंभूतोऽव्यक्तहोम' इति सूत्रे । व्याख्यातृभिर्यावन्मात्रं स्वशास्त्रानुक्तमपेक्षितं तावन्मात्रं ग्राह्यं नतु स्वशास्त्रे उक्तमपि ।'आज्यभागौ जुहुयादग्नये स्वाहा सोमाय

नान्नाद्येन समेधय स्वाहेति' ॥ १२ ॥ तूष्णीमाघारावाघार्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति ॥ १३ ॥ उत्तरमाग्नेयं दक्षिणं सौम्यम् ॥ १४ ॥ विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ ॥ १५ ॥

स्वाहा' इति । आज्यभागाविसनयोर्यागयोः संज्ञा ॥ १३ ॥ अग्नेरुत्तरपार्श्वे आग्नेयमाज्यभागं जुहुयात् । दक्षिणपार्श्वे तु सौम्यम् । स्रुवेणोभौ जुहुयात्पूर्ववत् ॥१४॥ आज्यभागौ 'यज्ञस्य चक्षुषी' इत्येवं श्रूयेते इत्यर्थः ॥ १५ ॥ ततः किमित्याह—यज्ञपुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिण-

१ दिङ्नामान्यन्तराले इति समासः । एवं दक्षिणपूर्वाशब्देपि ।

मक्ष्युत्तरं भवत्युत्तरं दक्षिणम् । तस्माद्दक्षिणसंस्थैव शक्या कर्तुम् । नोदक्संस्थेत्यर्थः । श्रुत्याकर्षोऽन्यत्र क्वचिदुदक्संस्थाऽपि यथा स्यादिति । तेन बलिहरणे प्रधानानामुत्तरतः पुरुषेभ्यो बलिहरणं[1] सिद्धम् ॥ १६ ॥ अग्नेर्मध्यप्रदेशे हवींषि जुहोति । प्रत्यक्करं वा देशे हवींषि जुहोति । प्रत्यक्करमिति द्वितीया सप्तम्यर्थे[2] । तत्रापि देशे प्राक्संस्थानि वा जुहोत्युदक्संस्थानि वा । ननु प्राक्संस्थानीत्यस्मिन्नसत्यप्युदक्संस्थानि वेति वाशब्दप्राप्तया प्राक्संस्थया सह विकल्पे सति पक्षे

**तस्मात्पुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् ॥ १६ ॥ मध्ये हवींषि प्रत्यक्करं वा प्राक्संस्थान्युदक्संस्थानि वोत्तरपुरस्तात्सौविष्टकृतम् ॥ १७ ॥ मध्यात्पूर्वार्धाच्च हविषोऽवद्यति**

प्राक्संस्थत्वमपि सिध्यति किमर्थं प्राक्संस्थवचनम् ? । उच्यते । देशद्वयस्य संस्थाद्वयस्य चानन्तर्ययोगो मा भूदित्येवमर्थम् । तेन देशद्वयेऽपि संस्थाद्वयस्य यथासङ्ख्यता नास्तीति सिद्धम् । अग्नेरुत्तरपूर्वदेशे सौविष्टकृतं हविर्जुहोति ॥१७॥ हविषो मध्यात्पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रं हविरवद्यतीति देशो

१ बलिहरणं नाम अथ बलिहरणमित्यादिना विहितम् । २ सौत्रीत्यर्थः ।

नियम्यतेऽवदानस्य ॥१८॥ पञ्चावत्तिनां तु मध्यात्पूर्वार्धात्पश्चार्धादित्येवमवदानं भवति। पश्चार्धाच्चे-
त्येतावतैव सिद्धे मध्यात्पूर्वार्धादिति वचनं? 'प्रत्यक्संस्थता यथा स्यात्। प्राक्संस्थता मा भूदित्येवमर्थम्'
॥ १९ ॥ सर्वेषां हविषामुत्तरार्धात्स्विष्टकृदर्थमवदानं प्रधानादवदानाद्भूयः सकृत्सकृदवखण्डयति ।
पञ्चावत्ती तु एवं सकृत्सकृद्गृहीत्वा, पुनरपि पूर्वावदानदेशस्य पुरस्तात्सकृत्सकृदवद्येत्। तथा दृष्ट-

॥ १८ ॥ मध्यात्पूर्वार्धात्पश्चार्धादिति पञ्चावत्तिनाम् ॥ १९ ॥ उत्तरा-
र्धात्सौविष्टकृतम् ॥ २० ॥ नात्र हवींषि प्रत्यभिघारयति । स्विष्टकृतं
द्विरभिघारयति ॥ २१ ॥ 'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहा-
करम् । अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे ।' अग्नये

त्वात्। ततो द्विरुपरिष्टादभिघारयति पञ्चावत्ती चतुरवत्ती च ॥ २० ॥ स्विष्टकृति हविःशेषं न
प्रत्यभिघारयति । अत्रग्रहणम्? अत्रैव नाभिघारयति सप्रधानहविःष्वित्येवमर्थम् । हविःशब्दः
शेषे वर्तते। यद्यवत्ते वर्तेत चतुरवत्तताऽऽहुतेर्न स्यात्। तन्न चेष्यते ॥ २१ ॥ अनेन मन्त्रेण

सू० स्विष्टकृतं जुहुयात् ॥ २२ ॥ यत्पूर्वं निहितं पूर्णपात्रं तदधुना बर्हिषि निनयेत् । निषिञ्चेदित्यर्थः वृ० अ० १
॥ २३ ॥ यदिदं पूर्णपात्रनिनयनमेषोऽस्य कर्मणोऽवभृथो भवति । अवभृथवचनमवभृथधर्म-
२७ ॥ प्राप्त्यर्थम् । तेन कालोऽभ्युक्षणं च भवति । कालस्तु सर्वप्रायश्चित्तादूर्ध्वं प्राक् संस्थाजपात् । अनेनैवाभ्युपायेन सर्वप्रायश्चित्तानि संस्थाजपश्च कर्त्रा कार्याणीत्युक्तं भवति॰। निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इति पञ्च ब्रह्मणो भवन्तीत्युक्तं तत्रैवं क्रमः । 'पूर्वं

**स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्त्समर्धय स्वाहा' इति ॥ २२ ॥ बर्हिषि पूर्णपात्रं निनयेत् ॥ २३ ॥ एषोऽवभृथः ॥ २४ ॥ पाकयज्ञानामेतत्तन्त्रम् ॥ २५ ॥**

कर्ता सर्वप्रायश्चित्तानि जुहोति । ततो ब्रह्मा सर्वप्रायश्चित्तानि जुहुयात् । ततः कर्ता पूर्णपात्रं निनयति । ततः कर्ता संस्थाजपेनोपतिष्ठते । ततो ब्रह्मोपतिष्ठते । ततः कर्ता परिसमूहनपर्युक्षणे' इति । अभ्युक्षणं च 'आपो अस्मान्, इदमापः, सुमित्र्या नः' इत्येतैर्मन्त्रैः ॥ २४ ॥
एतत्तन्त्रं पाकयज्ञानां सर्वेषां भवतीत्यर्थः । पाकयज्ञग्रहणं? 'स्थालीपाकसदृशानां हुतानामेव तन्त्रं ॥ २७ ॥

स्यात् । प्रहुतब्रह्मणिहुतानां मा भूदित्येवमर्थम् । अङ्गसंहतिस्तन्त्रम् । विध्यन्त इत्यर्थः । यद्यपि सर्वमुच्यते तथापि न प्रधानदेवताः प्रसंजन्ति । 'देवतागमे निसानामपाय' इति बाधदर्शनात् ॥ २५ ॥ उच्छिष्टं हविर्दक्षिणां ददाति ब्रह्मणे यद्यस्ति ब्रह्मा । तदभावे ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् ॥ २६ ॥ इति प्रथमे दशमी कण्डिका ॥ १० ॥ उक्तोऽर्थः । अत्र पशोस्तन्त्रमात्रमुच्यते । न पुनः पशुर्विधीयते । कल्पग्रहणात् । एवं तर्ह्युपाकरणविधानमनर्थकम् । अष्टकाशूलगवयोः प्रतिषे-

**हविरुच्छिष्टं दक्षिणा ॥२६॥ ॥१०॥ अथ पशुकल्पः ॥१॥ उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा पाययित्वा पशुमाप्लाव्य पुरस्तात्प्रत्यङ्मुखमव-**

धात् । प्रोक्षणोपाकरणवर्जं, प्रोक्षणादि समानं पशुनेति । उच्यते । मधुपर्के ॐकुरुतेति यदा ब्रूयात्तदार्थवत् । अत्र 'ऋत्विजां बार्हस्पत्यः, स्नातकस्यैन्द्राग्नः, ऐन्द्रो राज्ञः, आचार्यादीनामाग्नेयः, प्रियस्य मैत्रः, वरस्य प्राजापत्यः, अतिथेराग्नावैश्वानरः' इत्येवं शास्त्रान्तरे दृश्यते । काम्यपशुषु चार्थवत् ॥ १ ॥ आज्यभागान्तं कृत्वोत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा, ततः पशुं पाययित्वा,

---

१ अत्र इंशसञ्जस्वञ्जां शपीति नलोपः ।

ततः पशुमाप्लाव्याग्नेः पुरस्तात्प्रत्यङ्मुखमवस्थाप्य, ततोऽग्निं दूतमिति द्वाभ्यां हुत्वा । सपलाशया सपर्णया । आर्द्रशाखया अशुष्कशाखया । पश्चादिति पृष्ठदेशे । उपस्पृशेत्पशुं 'अमुष्मै त्वेति' मन्त्रेण । अमुष्मैशब्दः पूर्ववत् । अग्निंदूतमित्यस्य प्रतीकस्य बहुगतत्वेऽपि हीनपादग्रहणसामर्थ्यात्सूक्तादेर्ग्र-

स्थाप्याऽग्निं दूतमिति द्वाभ्यां हुत्वा सपलाशया[1]ऽऽर्द्रशाखया 'पश्चादु-
पस्पृशे-'दमुष्मै त्वा जुष्टमुपाकरोमीति' ॥ २ ॥ व्रीहियवमती[2]भिरद्भिः
पुरस्तात्प्रोक्षति 'अमुष्मै त्वा जुष्टं प्रोक्षामीति' ॥ ३ ॥ तासां पाय-

हणम् । तर्हि द्वे सूक्ते प्राप्नुतः । न । यत्र सूक्तद्वयमिच्छति तत्र सूक्ते इति करोति । यथा । उप प्र यन्त इति सूक्ते इति । तस्माद्दचौ भवत इति सिद्धम् ॥ २ ॥ व्रीहियवमिश्राभिरद्भिः पशुं पुरस्तादग्रतः प्रोक्षति 'अमुष्मै त्वेति' मन्त्रेण ॥ ३ ॥ तासां व्रीहियवमतीनामेकदेशं पशुं पाययित्वा दक्षिणं बाहुं

१ पत्रं पलाशमित्यमरः । २ अत्र मतोर्मस्य न वत्वं । तद्विधायकसूत्रे अयवादिभ्य इति यवादिशब्दवर्जनात् ।

अनु शेषं निषिञ्चेत् । तासांग्रहणं? प्रोक्षणप्रतिषेधेऽपि अष्टकायां पायनं यथा स्यादित्येवमर्थम् ॥४॥ आवृतैव पर्यग्नि कृत्वा, पशुमुदञ्चं नयन्ति । आवृतैव तूष्णीमेवेत्यर्थः । मन्त्रप्रतिषेधो मन्त्रवर्जमन्ये धर्मास्त्रेतायां दृष्टाः कथं स्युरिति त्रिःपर्यग्निकरणादयः ॥ ५ ॥ तस्य पशोः पुरस्तादग्रत उल्मुकं प्रदीप्तं काष्ठं हरन्ति । तस्यग्रहणम्? 'अग्रतो नयनं यथा स्यात् । नापि पूर्वेण । नापि प्रथममित्येवमर्थम्' । अन्यथा पुरस्ताच्छब्दस्याऽनेकार्थत्वाद्दिक्कालवाचिनोऽपि ग्रहणं स्यात् ॥ ६ ॥ एषोऽग्निः शामित्रो भवति । तस्मात्प्रागुक्ते शामित्रायतने तस्य प्रतिष्ठापनं भवति ॥ ७ ॥ वपाश्रपण्यौ काश्मर्यमय्यौ भवतः । तत्रैका विशाखा परा सशाखा । ताभ्यां योऽस्य कर्मणः कर्ता अध्वर्यु-स्थानीयः स्यात्स पशुमन्वारभते ॥ ८ ॥ अध्वर्युं यजमानोऽन्वारभते ॥ ९ ॥ शामित्रस्य पश्चिमे

यित्वा दक्षिणमनु बाहुं शेषं निनयेत् ॥४॥ आवृतैव पर्यग्नि कृत्वोदञ्चं नयन्ति ॥ ५ ॥ तस्य पुरस्तादुल्मुकं हरन्ति ॥ ६ ॥ शामित्र एष भवति ॥ ७ ॥ वपाश्रपणीभ्यां कर्ता पशुमन्वारभते ॥ ८ ॥ कर्तारं

देशे बर्हिरुपस्तृणाति कर्ता । 'तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति' इति श्रुतेः । ततस्तस्मिन्बर्हिषि प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं पशुं संज्ञपयति शमिता । उदक्पादमित्येव सिद्धे प्राक्शिरसं प्रत्यक्शिरसं वेति वचनम्? ऊर्ध्वशिरसः संज्ञपनं मा भूदित्येवमर्थम् । ततः कर्ता पुरा नाभेरर्वाङ्नाभेर्दक्षिणतो नाभेरासीनो वपास्थानं ज्ञात्वा, तत्र तृणमन्तर्धाय, तिर्यक् छित्त्वा, वपामुत्खिदेदुद्धरेत् । वपास्थानं तु दक्षिणस्य पार्श्वस्य विविक्तप्रदेशः । यदि प्राक्शिराः संज्ञप्तः ।

**यजमानः ॥ १ ॥ पश्चाच्छामित्रस्य प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं संज्ञप्य, पुरा नाभेस्तृणमन्तर्धाय, वपामुत्खिद्य, वपामवदाय,**

तथा सति दक्षिणं पार्श्वमुत्तानं कृत्वा, तृणान्तर्धानादि कुर्यात् । ततो वपामवदायावखण्ड्य । पुनर्वपाग्रहणं? कृत्स्नावदानार्थम् । तेनान्येष्ववदानेष्वकृत्स्नानि ग्रहणानि भवन्ति । ततो वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य प्रक्षाल्य शामित्रे प्रताप्य । प्रतापनं तु धर्ममात्रम् । श्रपणस्योत्तरत्र विधानात् । ततः शामित्रस्योत्तरतो गत्वाऽग्रेणैनमौपासनमग्निं वपां हुत्वास्य दक्षिणत आसीनः श्रपयित्वा, श्रप- ॥ २९ ॥

यिता तां वपामभिघार्य, बर्हिषि लक्षशाखासु निधाय, उभावप्यग्नी यथागतं परीत्य, जुहुयादमुष्मै स्वाहेति । वपाश्रपणकाले आज्येनावसिच्यावसिच्य श्रपयति । 'तामध्वर्युः स्रुवेणाभिघारयन्नाह' इति श्रुतेः । 'यद्यपि चतुरवत्ती यजमानः स्यात् । अथ पञ्चावत्तैव वपा' इति श्रुतेर्वपा पञ्चावत्ता भवति । आज्यं हिरण्यशकलं वपा हिरण्यशकलमाज्यमिति । हिरण्याभावे तु द्विराज्यं ततो वपा

**वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य, शामित्रे प्रताप्याग्रेणैनमग्निं हृत्वा, दक्षिणत आसीनः श्रपयित्वा, परीत्य जुहुयात् ॥ १० ॥ एतस्मिन्नेवाग्नौ स्थालीपाकं श्रपयन्ति ॥ ११ ॥ एकादश पशोरवदानानि**

पुनर्द्विराज्यमिति ॥ १० ॥ एतस्मिन्नेवौपासने एवाग्नौ पश्वङ्गत्वेन पशुदेवतायै स्थालीपाकं श्रपयन्ति । बहुवचनं? कर्तुरनियमार्थम् । एतस्मिन्निति वचनं? शामित्रे मा भूदित्येवमर्थम् । इतरथा शामित्रस्य श्रपणार्थत्वात्तस्मिन्नेव स्यात् ॥ ११ ॥ पशोर्ग्रहणं? यानि त्रेतायामेकादशावदानानि पशोः प्रसिद्धानि तानि यथा स्युरित्येवमर्थम् । हृदयं जिह्वा वक्ष इत्येवमादीनि । सर्वाङ्गग्रहणमेकादशभ्योऽ-

न्यान्यपि यान्यङ्गानि दृष्टानि तेषामपि विकल्पेन ग्रहणार्थम् । एवमवदाय तानि शामित्रे श्रपयति । हृदयं शूले प्रोत्य तथा प्रतापयति । यथा शृतं भवति । ततः शृतान्यभिघार्योद्वास्य । ततः स्थालीपाकस्यैकदेशं पूर्वं जुहुयात्ततोऽवदानानि ॥ १२ ॥ अवदानैर्वा सह स्थालीपाकं जुहोति । न पृथक् । यदा तु पृथग्जुहोति । तदा स्विष्टकृदपि पृथक्कार्यः ॥ १३ ॥ द्विर्ग्रहणं देशानियमार्थम् । एकैकस्यावदानस्य यस्मिन्कस्मिंश्चिद्देशे द्विर्द्विरवद्यति । पञ्चावत्ती तु त्रिस्त्रिरवद्यति । उपस्तरणप्रत्यभिघारणे

**सर्वाङ्गेभ्योऽवदाय, शामित्रे श्रपयित्वा, हृदयं शूले प्रताप्य, स्थालीपाकस्याग्रतो जुहुयात् ॥ १२ ॥ अवदानैर्वा सह ॥ १३ ॥ एकैकस्यावदानस्य द्विर्द्विरवद्यति ॥ १४ ॥ आवृतैव हृदयशूलेन चरन्ति ॥१५॥**

कृत्वा जुहोति ॥१४॥ स्विष्टकृत्सर्वप्रायश्चित्तान्तं (कर्म) कृत्वा, तूष्णीं हृदयशूलेन चरन्ति। आवृद्ग्रहणं कथं? मन्त्रवर्जमन्ये धर्मास्त्रेतायां दृष्टा यथा स्युरित्येवमर्थम् । तेन शुष्कार्द्रयोः सन्धिदेशे शूलस्योद्वासनम् । तस्योपरिष्टादप उपस्पर्शनम् । समिद्ग्रहणमुपस्थानं समिदाधानमित्येते धर्माः कार्याः । ततः
पूर्णपात्रनिनयनादि कृत्वा समापयेत् ॥ १५ ॥ इति प्रथमे एकादशी ॥ ११ ॥ चित्ते भवाश्चैत्याः । ॥ ३० ॥

शङ्करः, पशुपतिः, आर्या, ज्येष्ठा, इत्येवमादयः। यदि कस्यैचिद्दैवतायै[1] प्रतिशृणोति। 'यदि आत्मनोऽभिप्रेतं वस्तु लब्धं ततस्त्वामहमाज्येन स्थालीपाकेन पशुना वा यक्ष्यामीति[2]'। ततो लब्धे वस्तुनि तस्य तेन यागं कुर्यात्स चैत्ययज्ञः। तत्र स्विष्टकृतः प्राक् चैत्याय बलिं हरेन्नमस्कारान्तेन नामधेयेन। पुनश्चैत्यस्य ग्रहणं? प्रत्यक्षहरणार्थम्। तेन चैत्यायतन एवोपलेपनादि कुर्यात् ॥ १ ॥

॥ ११ ॥ चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत् ॥ १ ॥ यद्यु वै विदेशस्थं पलाशदूतेन 'यत्र वेत्थ वनस्पत' इत्येतयर्चा द्वौ पिण्डौ कृत्वा, वीवधेऽभ्याधाय, दूताय प्रयच्छे-'दिमं तस्मै बलिं हरेति' चैनं

यदि विदेशस्थं चैत्यं यजेत्तदा पलाशदूतेन बलिं हरेत्। पलाशेन दूतं वीवधं च कुर्यात्। यत्र वेत्थेत्यृचा द्वौ पिण्डौ कृत्वा, वीवधेऽभ्याधाय, दूताय प्रयच्छेत्। तयोरेकं पिण्डं निर्दिश्य दूतं वदति। 'इमं तस्मै बलिं हरेति'। अपरं दूताय प्रयच्छति। 'अयं तुभ्यमिति'। एतयर्चेति वचनम्? अन्यत्र पादग्रहणेऽपि क्वचित्सूक्तं भवतीत्येवमर्थम्। तेन 'आत्वाहार्षमन्तरेधि' इति

---

[1] प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्तेति संप्रदाने चतुर्थी। [2] अस्य प्रतिशृणोतिना अन्वयः।

'ऋषभं मा समानानाम्' इति च सूक्तं सिद्धम्। अन्ये पुनरभ्यासार्थं मन्यन्ते। पिण्डकरणे, वीवधाभ्याधाने, दूताय प्रदान इति ॥ २ ॥ कर्तुश्चैत्यस्य च मध्ये भयमस्ति चेच्छस्त्रमपि किंचिद्द्याद्दूताय ॥ ३ ॥ उभयोर्मध्ये यदि नावा तार्या नदी स्यात्तदा प्लवरूपमपि किंचिद्द्यादनेनेति मन्त्रेण ॥ ४ ॥ यदि धन्वन्तरिश्चैत्यो भवति। तदा ब्रह्माणमग्निं चान्तरा पुरोहितायाग्रे बलिं हरेत्पुरोहिताय नम इति।

ब्रूया-'दयं तुभ्यमिति' दूताय ॥ २ ॥ प्रति भयं चेदन्तरा शस्त्रमपि किंचित् ॥ ३ ॥ नाव्या चेन्नद्यन्तरा प्लवरूपमपि किंचि-'दनेन तरितव्यमिति' ॥ ४ ॥ धन्वन्तरियज्ञे ब्रह्माणमग्निं चान्तरा पुरोहितायाग्रे बलिं हरेत् ॥ ५ ॥ ॥ १२ ॥ उपनिषदि गर्भलम्भनं पुंसवन-

ततो धन्वन्तरये नम इति। धन्वन्तरौ विदेशस्थे त्वयं विशेषः। धन्वन्तरेश्च पुरोहितस्य चैकः पिण्डो देयः। द्वितीयो दूताय ॥ ५ ॥ इति प्रथमे द्वादशी कण्डिका ॥ १२ ॥ आम्नातमिति शेषः। गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं भवति तद्गर्भलम्भनम्। पुमांल्लभ्यो जायते येन तत्पुंसव-

१ उडुपम्। २ कथितम्। ३ सफलम्। ४ करणे ल्यट्। एवं उत्तरयोः।

नम् । पुमांस्तु सन्येन नावलुप्यते तदनवलोभनम् । वर्णविकारो द्रष्टव्यः । पृषोदरादित्वात् । एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि । किं ? तर्हि । गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाताः । अस्मच्छाखायां सा न विद्यते । अतस्तत्कर्म कर्तव्यमित्युपदिश्यते ॥ १ ॥ तस्या उत्सन्नत्वाद्यदि तां नाधीयात्तत एवं कुर्यादित्याह—गर्भाधानमाचार्येणानुक्तमिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याहुः । इदं तु पुंसवनम् । गर्भसहितो मासो

**मनवलोभनं च ॥ १ ॥ यदि नाधीयात्तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्सायां गोर्दधनि द्वौ द्वौ माषौ यवं च दधि प्रसृतेन**

गर्भमासः । तिष्येणेति 'नक्षत्रे च लुपि' इत्यधिकरणे तृतीया । तिष्येणेति प्राशनकर्मणा संबध्यते । तस्य प्रधानत्वात् । नोपवासेन । गुणत्वात् । तेन पुनर्वसुना उपोषितायाः पत्न्यास्तिष्येणेदं कर्म करोति । तत्र प्राजापत्यस्य स्थालीपाकस्याज्यभागान्तं कृत्वा, वक्ष्यमाणं कर्म कुर्यात् । समानं रूपं यस्य स सरूपः । सरूपो वत्सो यस्याः सा तथोक्ता । गोग्रहणं? सरूपवत्साया अभावे अस-

१ क्रियया । २ गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात्फलितमिदम् ।

ज्ञापनार्थः ॥ ६ ॥ प्राजापत्यस्य स्थालीपाकस्यैकदेशं हुत्वा, हृदयदेशं हृदयसमीपमस्या आलभेत स्पृशेत् 'यत्ते' इति मन्त्रेण । ततः स्विष्टकृदादि समापयेत् । इदं कर्म प्रतिगर्भमावर्तते । गर्भसंस्कारत्वात् । प्रथमगर्भे तृतीयमासि यदि गर्भो न विज्ञातस्तदा चतुर्थे कुर्यात् । विज्ञाते गर्भे

राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादिति' ॥ ६ ॥ प्राजापत्यस्य स्थालीपाकस्य हुत्वा, हृदयदेशमस्या आलभेत । 'यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं नियामिति' ॥ ७ ॥ ॥ १३ ॥ चतुर्थे गर्भमासे सीमन्तो-[1]

तिष्ये पुंसवनम् । 'तत्तृतीये मास्यन्यत्र गृष्टेः' इति च स्मरणात् । गृष्टिः प्रथमगर्भः । पञ्चमे मास्यङ्गनिष्पत्तिर्भवति । स्वयमेव चास्य कर्ता । माहं पौत्रमिति लिङ्गात् । तदभावे देवरः[2] ॥ ७ ॥ इति प्रथमे त्रयोदशी कण्डिका ॥ १३ ॥ सीमन्तो यस्मिन्कर्मणि उन्नीयते तत्सीमन्तोन्नयनम् ।



१ सीमन्तः केशवेशः । २ पत्युर्भ्राता ।

चतुर्थे मासि कार्यम्। इदं कर्म न प्रतिगर्भमावर्तते। स्त्रीसंस्कारत्वात्। नन्वयं गर्भसंस्कारः?। 'एवं तं गर्भमाधेहि' इति मन्त्रलिङ्गात्। सत्यम्। तथापि नावर्तते। आधारसंस्कारस्य प्राधान्यात्। कुतः प्राधान्यमिति चेत्। सीमंतोन्नयनमिति समाख्याबलात्[1]। आधारस्य च संस्कृतत्वात्। सकृत्संस्कृता यं यं गर्भं प्रसूते, स सर्वः संस्कृतो भवेत्। तेनावृत्तिर्न भवतीति सिद्धम् ॥ १ ॥ शुक्लपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्तदेदं कर्म कार्यम्। पुंसा नक्षत्रेण। पुंनाम-

**न्नयनम्[2] ॥ १ ॥ आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥ २ ॥ अथाग्निमुपसमाधाय, पश्चादस्याऽऽनडुहं चर्मास्तीर्य**

धेयेन नक्षत्रेणेत्यर्थः। तिष्यो, हस्तः, श्रवण, इत्यादिना। चन्द्रमा युक्तः स्यादिति वचनं? प्रकर्षेण युक्ते चन्द्रमसि यथा स्यात्। एतदुक्तं भवति। 'षष्टिघटिकासु मध्ये मध्यमत्रिंशद्घटिकासु कुर्यादिति' ॥२॥ जुहुयादिति शेषः। अथशब्दोऽन्यस्मिन्नपि काले भवतीदं कर्मेति ज्ञापनार्थः। कस्मिन्?। षष्ठाष्टमयोर्मासयोः। शास्त्रान्तरे चायं कालो विहितः। अग्निमुपसमाधायेत्यादि गृहप्रवेशनीये व्याख्या

१ समाख्या यौगिकः शब्दः। २ अधिकरणे ल्युट्।

तम् । आज्यभागान्तं ( कर्म ) कृत्वा 'धाता ददातु दाशुषे' इत्यादिभिरष्टावाज्याहुतीर्जुहुयात् ॥३॥ अस्यै अस्याः । युग्मेन समेन । केन ? । शलाटुग्लप्सेन तरुणफलसंघातेन । शलाटुरित्यपक्वानां फलानां समाख्या । ग्लप्स इति स्तबक उच्यते । औदुम्बरस्तबकेन । शास्त्रान्तरे दृष्टत्वात् । तदभावेऽन्येन ।

**प्राग्ग्रीवमुत्तरलोम, तस्मिन्नुपविष्टायां समन्वारब्धायां 'धाता ददातु दाशुष' इति द्वाभ्यां 'राकामहमिति' द्वाभ्यां 'नेजमेषेति' तिसृभिः 'प्रजापते न त्वदेतान्यन्य' इति च ॥ ३ ॥ अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशापिञ्जूलैरूर्ध्वं सीमन्तं व्यूह-**

त्रीण्येतानि यस्याः सेयं त्र्येणी शलली । एतः शुक्ल इत्यर्थः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् तकारस्य नत्वं च । ततो 'रषाभ्यां नो णः' इति णत्वम् । कुशापिञ्जूलैः कुशतरुणैः । एतैरे-

---

१ नेदं सूत्रं त्र्येणीशब्दे प्रवर्तते । रषाभ्यामिति पञ्चमीनिर्देशेनाव्यवधान एव प्रवृत्तेः । अट्कुप्वाङ्नित्यपि न । तस्य निमित्तनिमित्तिनोरेकपदस्थितावेव प्रवृत्तेः । नचात्रैकपद्यम् । निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वेन हि तत् । तस्मात्पूर्वपदादिति णत्वम् ।

कीकृतैर्ललाटकेशयोः सन्धिमारभ्य ऊर्ध्वं सीमन्तं व्यूहति मन्त्रेण । आ मूर्धप्रदेशात्केशान्पृथक्करोतीत्यर्थः । एवं त्रिर्व्यूहति । मन्त्रावृत्तिरुक्ता ॥ ४ ॥ चतुर्वा व्यूहति मन्त्रेण ॥ ५ ॥ वीणा च गाथा च वीणागाथे । ते ययोः स्तस्तौ तथोक्तौ । तौ संशास्ति संप्रेष्यति । 'सोमं राजानं

ति भूर्भुवः स्वरोमिति त्रिः ॥ ४ ॥ चतुर्वा ॥ ५ ॥ वीणागाथिनौ संशास्ति 'सोमं राजनं संगायेतामिति' ॥ ६ ॥ 'सोमो नो राजाऽवतु मानुषीः प्रजा निविष्टचक्राऽसाविति' यां नदीमुपवसिता भवन्ति ॥ ७ ॥ ब्राह्मण्यश्च वृद्धा जीवपत्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः

संगायेतामिति' ॥ ६ ॥ तौ च एतां गाथां गायत इत्याह—असावित्यस्य स्थाने यस्या नद्याः समीपे वसन्ति तस्या नाम आमन्त्रणविभक्त्या ब्रूयाताम् । निविष्टचक्रा गङ्गे इति ॥ ७ ॥ एवंगुणयुक्ता ब्राह्मण्यो यद्यद्ब्रूयुः । तत्तत्कार्यम् । मैषं दत्वा स्विष्टकृदादि सर्वं समापयेत् ॥ ८ ॥ ऋषभो

सू० गौरासेचनसमर्थः । तं दक्षिणां दद्यात् । अत्र तु स्वयमेव कर्ता । कुतः । 'अस्यै मे पुत्रकामायै'
८ ॥ इति लिङ्गात् । कस्मै तर्हि दक्षिणा? । ब्रह्मणे । यद्यस्ति सः । तदभावे सन्निहितेभ्यो
ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् ॥ ९ ॥ इति प्रथमे चतुर्दशी कण्डिका ॥ १४ ॥
इदं जातकर्म । कुमारग्रहणं? कुमारीनिवृत्त्यर्थम् । ननु कुमार्या अपि भवत्येव जातकर्म । कुतः ।
वक्ष्यति 'आवृतैव कुमार्या' (गृ० १।१४।१२) इत्युच्यते । प्रवासादागतस्य विहितं कर्मावृता

॥ ८ ॥ ऋषभो दक्षिणा ॥ ९ ॥ कुमारं जातं पुराऽन्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् । 'प्र ते ददामि मधुनो घृतस्य

भवति । न जातकर्म । अनन्तरत्वात् । एवमेके । अन्ये पुनरावृतैव कुमार्या इत्येतदुभयार्थमिति
वदन्ति । तेन कुमार्या अपि जातकर्म भवति । मनुनाप्युक्तम् 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषत'
इति (अ० २ । ६६) तर्हि कुमारग्रहणं कथम्? । अधिकारार्थम् । 'अष्टमे वर्षे ब्राह्मणमुपनये
दित्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति । ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव न
भविष्यति । न । जातिनिर्देशे लिङ्गमविवक्षितम् । यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि

न हन्यते। एवमत्रापि स्त्रियाः प्रसज्येत। तन्निवृत्त्यर्थं कुमारग्रहणमिति'। जातग्रहणमप्यधिकारार्थम्। 'गोदानं षोडशेवर्षे, इति जन्मतः प्रभृति षोडशे यथा स्यात्। उपनयनप्रभृति माभूदिति'। पुरा पूर्वमित्यर्थः। अन्यग्रहणमनधिकृतालम्भनात्माकर्म कर्तव्यमित्येवमर्थम्। सर्पिर्मधुनी हिरण्येन

वेदं सवित्रा प्रसूतं मघोनाम्। आयुष्मान्गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति' ॥ १ ॥ कर्णयोरुपनिधाय मेधाजननं जपति। 'मेधां ते देवः सविता मेधां देवी सरस्वती। मेधां ते अश्विनौ

निकाषयति। ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत्, मातुरुपस्थे आसीनं 'प्रते ददामि' इति मन्त्रेण ॥ १ ॥ अस्य कर्णयोः हिरण्यं निधाय, मेधाजननं जपति' 'मेधां त' इति। उपग्रहणं तस्य मुखसमीपे आत्मनो मुखं निधाय जपार्थम्। मेधाजननमित्यस्य मन्त्रस्याख्या।

---

१ उत्सङ्गे। २ आख्या नाम।

सकृन्मन्त्रः पर्यायेणोपनिधानमित्येके । अन्ये मन्त्रावृत्तिमिच्छन्ति ॥ २ ॥ स्तनबाह्वोर्मध्यप्रदेशोंऽसः । अत्र बहुधा विप्रतिपन्नाः । तत्रैके सकृन्मन्त्रं पर्यायेणांसाभिमर्शनमिच्छन्ति । द्वार्याभिमर्शनवत् । ननु युक्तस्तत्र सकृन्मन्त्रः । द्विवचनयुक्तत्वान्मन्त्रस्य । इह त्वेकवचनयुक्तः । अत आवृत्या भवितव्यम् । नैतदेवम् । नात्रांसावुच्येते । किं तर्हि कुमारः । स चैकः । तस्मान्नावृत्तिरिति । अन्ये मन्त्रविभागमिच्छति । 'अश्मा भव' इत्यनेन दक्षिणमंसमभिमृशेत् । 'इन्द्र श्रेष्ठानि'

देवावाधत्तां पुष्करस्रजाविति' ॥ २ ॥ अंसावभिमृशति । 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः

'अस्मे प्रयन्धि' इत्याभ्यां सव्यमिति । कथं पुनर्मन्त्रविभागो ज्ञातः । मध्ये इतिकरणात् । नहि क्वचिन्मन्त्रमध्ये इतिकरणं पठन्ति । अपरे त्वाहुः । सकृदेव त्रयो मन्त्रा वक्तव्याः । न च मन्त्रविभागः । न च पृथगभिमर्शः । द्वार्याभिमर्शने त्वशक्यत्वात्पृथगभिमर्शः । इह तु शक्यते युगपदंसौ स्प्रष्टुम् । यत्पुनरुक्तमितिकरणादिति । तत्र ब्रूमः । अन्यत्रापि मन्त्रमध्ये इतिकारः

पठ्यते । यथा । 'आसीद सदनं स्वमासीद सदनं स्वमिति माहिंसीर्देवप्रेरित' इति । अयमेव नः पक्षोऽभिप्रेतः । यस्य त्रयाणामन्यतमः पक्षोऽभिप्रेतः तस्यापि कुर्वतो न दोषः । सर्वेषां गमकत्वादिति भाष्यकारः । अत्रैके मन्त्रविभागः श्रेयानित्याहुः । मध्ये इतिकारात् । नन्वन्यत्रापि विद्यत इत्युक्तम् । तत्रापि विभाग एव । किमुत्पतसीति बर्हिषि निधाय, माहिंसीरित्यभिमन्त्रयेत् । कुत एतत् । आनन्तर्ययोगात् । ननु इडायां दृश्यते 'हविर्जुषन्तामिति तस्मिन्नुपहूत

शतमिति' । 'इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषि-

इति । अनर्थज्ञो भवान् । इतिकारो मन्त्रस्य मध्ये वृथा न पठ्यत इति वयं ब्रूमः । इडायां तु मन्त्रैकदेशे इतिकारः । युष्मत्पक्षे त्वभिमन्त्रणे इतिकारो वृथैवेति । तदसत् । भगवता भाष्यकारेण यः पक्षः परिगृहीतः स एव सम्यक् । अन्यत्रापि मन्त्रमध्ये इतिकारदर्शनात् । 'नमो यज्ञ निषीदसीति अमुं माहिंसीरमुं माहिंसीरिति' चेति । तेन त्रीन्मन्त्रानसकृदुक्त्वा, युगपदेवोभावंसौ स्पृशेदिति सिद्धम् ॥ ३ ॥ कुर्युरित्यर्थः । नामकरणस्याचार्येण कालान्तरानुक्तेर्जातकर्मानन्तरं

कार्यमित्येके। अन्ये शास्त्रान्तरोक्तः कालो ग्राह्य इत्याहुः । उक्तं च मनुना ( अ० २ । ३० ) । 'नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्। पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते' इति ॥ ४ ॥ कीदृग्लक्षणं तन्नामेत्याह—प्रथमाद्वितीया वर्गाणामूष्माणश्च हकारवर्जमघोषवन्तः। शिष्टा घोषवन्तः। तदादौ यस्य तत्तथोक्तम्। अन्तर्मध्येऽन्तस्था यस्य तत्तथोक्तम् । यकारादयश्चतस्रो-

**न्निति' च॥ ३ ॥ नाम चास्मै दद्युः॥ ४ ॥ घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम् ॥ ५ ॥ चतुरक्षरं वा ॥ ६ ॥ द्व्यक्षरं प्रतिष्ठाकाम-**

ऽन्तस्थाः। अभिनिष्ठानो विसर्जनीयः। सोऽन्ते यस्य तत्तथोक्तम्। अक्षरं स्वरः । अकारादयो द्वादश स्वराः। शिष्टं व्यञ्जनम्। द्वे अक्षरे यस्य तद्व्यक्षरम् । व्यञ्जनमपरिमितम् ॥ ५ ॥ चतुरक्षरं वा उक्तलक्षणं नाम कुर्युः। भद्रः, देवः, भवः, भवनाथः, नागदेवः, रुद्रदत्तः, देवदत्तः इत्येवंलक्षणानि नामानि भवन्ति ॥ ६ ॥ द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत्काम्यमपीत्याह—प्रतिष्ठाब्रह्मवर्चसे च

कुमारस्य । तत्संस्कारत्वात् । न कर्तुः ॥ ७ ॥ अथवा । युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति । एवकारोऽवधारणार्थः । कथं? । 'युग्ममेवाद्रियेत न पूर्वाणि लक्षणानीति'। तेन शिवदत्तः, नागदत्तः, देवस्वामी, वसुशर्मा, रुद्रः, जनार्दनः, वेदघोषः, पुरन्दरः, विष्णुशर्मा, इत्यादि सिद्धम् ॥ ८॥ अयुजान्ययुग्माक्षराणि स्त्रीणां नामानि भवन्ति । सुभद्रा, सावित्री, सत्यदा, वसुदा, इत्यादि ॥ ९ ॥

**श्चतुरक्षरं ब्रह्मवर्चसकामः[1] ॥ ७ ॥ युग्मानि[2] त्वेव पुंसाम् ॥ ८ ॥ अयुजानि[3] स्त्रीणाम् ॥ ९ ॥ अभिवादनीयं[4] च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्[5][6] ॥ १० ॥ प्रवासादेत्य पुत्रस्य शिरः परिगृह्य**

सांव्यवहारिकं नाम कृत्वा अभिवादनीयं च कार्यमित्याह—येन नाम्ना उपनीतः अभिवादयते । तच्च समीक्षेत । कुर्यादित्यर्थः । तच्च मातापितरावेव विद्यातामोपनयनात् । उपनीतस्य त्वाचक्षते 'अनेन नाम्नाऽभिवादयस्वेति' ॥ १० ॥ प्रवासादागत्य गृहानीक्षेताप्यनाहिताग्निरित्यादिसूत्रोक्तमा-

---

१ ब्रम्हहस्तिभ्यां वर्चसः इत्यच् प्रत्ययः । २ इच्छा । इच्छुर्वा । ३ विषमाणि । ४ बाहुलकात्करणेऽनीयर् । ५ आद्यादिकाद्विदज्ञानेइत्यस्माल्लिङिरूपम् । ६ आङ्मर्यादेतिकर्मप्रवचनीयत्वम् । पञ्चम्यपाङ्परिभिरिति पञ्चमी ।

 गेंण त्रिधिं कृत्वा, पुत्रस्य शिरः परिगृह्य सर्वतो गृहीत्वा, मूर्धनि त्रिरवघ्राय, ततो जपति अङ्गादङ्गादिति 
॥११॥ कुमार्यास्तु अमन्त्रकं कुर्यादिति। अनन्तरस्य चायं शेष इत्येके। अनन्तरस्य जातकर्मणश्चेत्यपरे
८ ॥ ॥ १२ ॥ इति प्रथमे पञ्चदशी कण्डिका ॥ १५ ॥ जन्मप्रभृति षष्ठे मासे । न गर्भप्रभृति।

जपति। 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति' मूर्धनि त्रिरवघ्राय ॥ ११ ॥ आवृतैव कुमार्यै ॥ १२ ॥ ॥ १५ ॥ षष्ठे मास्यन्नप्राशनम् ॥ १ ॥ आजमन्नाद्यकामः ॥ २ ॥ तैत्तिरं ब्रह्मवर्चसकामः ॥ ३ ॥ घृतौदनं तेज-

जाताधिकारात्। तत्रान्नप्राशनं नाम कर्म कार्यम् ॥ १ ॥ अजस्येदमाजम्[1]। तैत्तिरसाहचर्यान्मांसस्यात्र ग्रहणम्। न क्षीरदधिघृतानाम् ॥ २ ॥ तित्तिरेरिदं[1] तैत्तिरं[2]। आजतैत्तिरयोर्व्यञ्जकत्वेनोपदेशो नान्नत्वेन। तथा लोके प्रसिद्धत्वात्। तेनान्नमपि सिद्धम् ॥ ३ ॥ घृतसंस्कृत ओदनो घृतौदनः[3]।



१ पक्षिविशेषस्य। २ तस्येदमित्यण्। ३ अन्नेन व्यञ्जनमिति समासः।

कुतः । ओदनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्याद् 'घृतं तेजस्काम' इत्येवावक्ष्यत् । ततश्च पूर्ववद्व्यञ्जकत्वेनान्नमपि सिद्धत्येव । शृते नेदीयसि घृतसेके कृते घृतसंस्कृतो भवति । न तु घृते श्रपणम् । विक्लेदानुपपत्तेः ॥ ४ ॥ अकामसंयोगेन दध्यादिमिश्रमन्नं प्राशयेत् । 'अन्नपतेऽन्नस्य न' इति मन्त्रेण । अयं मन्त्रः सर्वप्राशनेष्वपि भवति । कुतः । प्राशनसहितत्वान्मन्त्रस्य । प्राशये-

स्कामः ॥ ४ ॥ दधिमधुघृतमिश्रमन्नं प्राशयेत् । 'अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद' इति ॥ ५ ॥ आवृतैव कुमार्यै ॥ ६ ॥ ॥ १६ ॥ तृतीये

दित्यस्य च सर्वशेषत्वात् । आज्यं प्राशयेदित्यादि ॥ ५ ॥ कुमार्यास्त्वमन्त्रकमन्नप्राशनं कार्यमित्यर्थः ॥ ६ ॥ इति प्रथमे षोडशी कण्डिका ॥ १६ ॥ कुलधर्मोपदिष्टे वा काले चौलं कार्यम् । जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः । केषांचिदुपनयनेन सह स्मर्यते

इति ॥ १ ॥ प्रणीताप्रणयनोत्तरकाल उत्तरतोऽग्नेर्व्रीहियवमाषतिलैः पूर्णानि शरावाणि निदधाति स्थापयति । पृथग्ग्रहणं? द्रव्यभेदार्थम् । पृथक् पूरयित्वा निदध्यादिति । अन्यथा, समासोपदेशान्मिश्रितानां पूरणं स्यात् । यथा सर्पिर्मधुनी हिरण्यनिकाषमिश्रमिश्रितानां प्राशनम् । अथवा । सत्यपि समासोपदेशे यथाकामं व्रीहियवतिलैरित्यत्रैकं द्रव्यं भवति । एकेन कृतार्थत्वात् ।

**वर्षे चौलं यथाकुलधर्मं वा ॥ १ ॥ उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक्पूर्णशरावाणि निदधाति ॥ २ ॥ पश्चात्कारयिष्यमाणो मातुरु-**

एवमिहाप्येकं द्रव्यं प्रसज्येत । तन्निवृत्त्यर्थं पृथग्ग्रहणम् ॥ २ ॥ कथं? पृथग्भूतानां सर्वेषां द्रव्याणां पूर्णशरावाणि निधीयेरन्निति—अग्नेः पश्चात्कारयिष्यमाणः कुमारः । तत्प्रयुक्तं हि चौलम् । एवं च कृत्वा संस्कारकर्मसु व्यवायपरिहारेषु कार्येषु कुमारोऽन्तरतम इति दर्शितं भवति । मातुरुपस्थे उत्सङ्गे आस्ते । आनडुहं गोमयं नवे शरावे उपनिहितं भवति । शमीपर्णानि चान्य



---

१ किमश्चतुर्थ्यन्तात्थमुः । कस्मै प्रकारायेत्यर्थः । हेतुतृतीयान्ताद्वा । २ गोश्च पुरीषे इति मयट् ।

स्मिन्नवे शरावे उपनिहितानि भवन्ति ॥ ३ ॥ मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलान्यादायास्ते। मातुर्ग्रहणं? मातुः सकाशाद्दक्षिणतो यथा स्यादग्नेर्दक्षिणतो माभूदिति ॥ ४ ॥ एतानि कुशपिञ्जूलानि ब्रह्मा वा धारयेत्। यद्यस्ति सः॥ ५ ॥ आघारान्तं कृत्वा, पूर्वोक्ता आहुतीर्हुत्वा, कुमारस्य पश्चिमदेशे स्थित्वा, शीतमुदकमुष्णं चोदकमुभाभ्यां पाणिभ्यां गृहीत्वा, अन्यस्मिन्पात्रे

**पस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति ॥ ३ ॥ मातुः पिता दक्षिणत एकविंशति कुशपिञ्जूलान्यादाय ॥ ४ ॥ ब्रह्मा वैतानि धारयेत् ॥ ५ ॥ पश्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा आपः समानी—'योष्णेन वा य उदकेनेहीति'**

युगपन्निनयति उष्णेनेति मन्त्रेण। समिस्रेकीभावे । ननु दक्षिणाङ्गकारितया भाव्यम्। कथमुभाभ्यां पाणिभ्यामिति। उच्यते। अनियमे प्राप्ते नियमार्था या सा परिभाषा न तु दक्षिणाङ्गविधायिका ॥ ६ ॥ तासामपामेकदेशं गृहीत्वा, नवनीतं च गृहीत्वा, तदभावे

दधिद्रप्सान्वा गृहीत्वा, प्रदक्षिणं शिरस्त्रिरुन्दति क्लेदयति मन्त्रेण । मन्त्रावृत्तिरुक्ता । तासांग्रहणं? समानीतानां ग्रहणार्थम् । इतरथा समानयनस्य शीतोष्णाभिरद्भिरवर्थ-मित्यत्र कृतार्थत्वात्तासां ग्रहणमेव न स्यात् । गृहीत्वेत्यस्य च नवनीतेनैव संबन्धः स्यात् । तस्मि



॥ ६ ॥ तासां गृहीत्वा नवनीतं दधिद्रप्सान्वा प्रदक्षिणं शिरस्त्रिरुन्दति[3] । 'अदितिः केशान्वपत्वाप उन्दन्तु वर्चस' इति ॥ ७ ॥ दक्षिणे केशपक्षे[4] त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति 'ओषधे त्रायस्वैनमिति' ॥ ८ ॥ 'स्वधिते मैनं हिंसीरिति' निष्पीड्य

स्तु सति आपो निराः । नवनीतदधिद्रप्सयोश्च विकल्पः सिद्ध्यति ॥ ७ ॥ दक्षिणग्रहणं? विस्प-ष्टार्थम् । तस्मिन्केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलानि कुमारस्याभ्यात्माग्राणि स्थापयति मन्त्रेण । वीप्सा बह्वर्था ॥ ८ ॥ अनेन मन्त्रेण लौहेन क्षुरेण तानि कुशपिञ्जूलानि निष्पीडयति । तेषु क्षुरं

१ नापितमित्यादिषोडशेसूत्रे । २ द्रप्संदधिघनेतरत् । ३ उन्दीक्लेदने । ४ पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।

स्थापयतीत्यर्थः । लोके क्षुरो लौह एव प्रसिद्धः । अतोऽत्र तस्यावाच्यत्वाल्लोहशब्दस्ताम्रे वर्तते । शास्त्रान्तरे विहितत्वाच्च । लोके लोहशब्दश्चायं रजतादिष्वपि वर्तते । अत्र तु ताम्रे । तथा दृष्टत्वात् ॥ ९ ॥ ततोऽनेन मन्त्रेण तेनैव क्षुरेण प्रच्छिनत्ति । प्रोऽनर्थकः । अनभिप्राय इत्यर्थः ।

लौहेन[1] क्षुरेण ॥ ९ ॥ प्रच्छिनत्ति 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासदिति' ॥ १० ॥ प्रच्छिद्य प्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति ॥ ११ ॥ येन धाता

अन्ये छिदार्थ इत्याहुः ॥ १० ॥ प्रच्छिद्य प्रच्छिद्येति वीप्साद्विर्वचनं? यो यत्र धर्म उपदिश्यते स सर्वेषु च्छेदेषु यथा स्यादिति । प्रागग्रान्कृत्वा, शमीपर्णैः सहैकीकृत्य, मात्रे प्रयच्छति ददाति । तानसावानडुहे गोमये निदधाति स्थापयति । नात्र प्रागग्रतानियमः ॥ ११ ॥ संख्यावचनं?

---

१ ताम्रमयेन ।

 मन्त्रान्तरप्रदर्शनार्थम् । मन्त्रमध्येऽपीतिकारो विद्यत इत्युक्तम् । कुशपिञ्जूलनिधानस्याभ्यात्म- 
 विधानार्थं भवितुं नार्हति । अभ्यासस्य त्रीणित्रीणीति वीप्सयैव सिद्धत्वात् ॥ १२ ॥ सर्वैस्त्रिभि·

बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय' इति द्वितीयम् । 'येन भूयश्च रात्र्यां ज्योक् च पश्याति सूर्यम् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय' इति तृतीयम् ॥ १२ ॥ सर्वैर्मन्त्रैश्चतुर्थम् ॥ १३ ॥ एवमुत्तरतस्त्रिः ॥ १४ ॥ क्षुरतेजो निमृजेत् । 'यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् ।

र्मन्त्रैश्चतुर्थवारं छिनत्ति ॥ १३ ॥ यथा दक्षिणे केशपक्षे एवमुत्तरेऽपि केशपक्षे कुर्यात्त्रिः । परि·
संख्येयम् । उत्तरे केशपक्षे त्रिरेव न चतुर्थमिति ॥ १४ ॥ ततः क्षुरधारां निमृजेच्छोधयेन्मन्त्रेण 

यत्क्षुरेणेति । निमार्जनमवमार्जनम् । न्यवौ विनिग्रहार्थीयाविति वचनात् ॥ १५ ॥ नापितं शिल्पिनं शिष्यात्प्रेष्येत्प्रैषेण । कुशलीकरणवचनं विपरीतलक्षणया वापने वर्तते । येन विहितोऽयं मुण्डयति हि श्रूयते ॥ १६ ॥ 'एकशिखस्त्रिशिखः पञ्चशिखो वा' इति बौधायनः । पूर्वशिखः परशिख इति कुलधर्माः । तेषु यो यस्य कुलधर्मस्तदनुरोधेन तस्य केशसंनिवेशान्कारयेत् । ततः स्विष्टकृदादि सकलं समापयेत् । वेषानित्यपि पाठे स एवार्थः ॥ १७ ॥ आवृता अमन्त्रकामित्यर्थः । कुतः । येनान्यत्र आवृतेत्युक्त्वा तूष्णीमित्याह । अपरया द्वारा नित्ययाऽऽवृता सदो द्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्तीति । नैतदेवम् । एवकारोऽत्रावधारणार्थः । 'आवृत्तन्त्रमेव भवति न मन्त्र' इति । तेनावृतेत्यस्य तूष्णीमित्ययमर्थ

शुन्धि शिरो मास्यायुः प्रमोषीरिति' ॥ १५ ॥ नापितं शिष्याच्छीतोष्णाभिरद्भिरबर्थं कुर्वाणोऽक्षुण्वन्कुशलीकुर्विति ॥ १६ ॥ यथाकुलधर्मं केशवेशान्कारयेत् ॥ १७ ॥ आवृतैव कुमार्यै ॥ १८ ॥ ॥ १७ ॥

१ शासु अनुशिष्टौ इत्यस्माल्लिङि रूपमिदम् ।

इति सिद्धम् । एवंचेद्दोषः । अमन्त्रकं होमः माप्नोति । इष्टमेव नं एतदिति केचिदाहुः । अन्ये होमो न भवतीत्याहुः । अमन्त्रकस्य होमस्य क्वचिदप्यदृष्टत्वात् । ननु तूष्णीं द्वितीये उभयत्रेत्यत्र दृष्ट इति शङ्का न कार्या । तत्रापि प्रजापतये स्वाहेति मन्त्रोऽस्त्येव ॥ १८ ॥ इति प्रथमे सप्तदशी कण्डिका ॥ १७ ॥ व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः ॥ १ ॥ तत्र विशेषमाह—तृतीयस्यापवादः । अत्र मातुरुपस्थोपवेशनं न भवति । अयुक्तत्वात् ॥ २ ॥

**एतेन गोदानम् ॥१॥ षोडशे वर्षे ॥२॥ केशशब्दे तु श्मश्रुशब्दान्कारयेत् ॥३॥ श्मश्रूणीहोन्दति ॥४॥ 'शुन्धि शिरो मुखं मास्यायुः प्रमोषीरिति'**

केशशब्दे त्विति जातावेकवचनम् । श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः । तेन त्रयः श्मश्रुशब्दाः तेषु 'अदितिः केशान्वपतु' 'यद्मा वपसि केशान्' 'दक्षिणे केशपक्षे' इति त्रिषु ते कार्याः । तन्त्रगतस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणम् । तेन दक्षिणे श्मश्रुपक्ष इति साधितं भवति ॥ ३ ॥ शिरउन्दनस्यापवादः ॥ ४ ॥ क्षुरनिमार्जनेऽयं विशेषः ॥ ५ ॥

१ अस्मदः षष्ठीबहुवचनमिदम् । २ इदं कर्मनामधेयम् । ३ क्लेदनस्य ।

शीतोष्णाभिरद्भिरबर्थं कुर्वाणोऽक्षुण्वन्कुशली केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति नापितशासनम् ॥ ६ ॥ तत आप्लुत्य । स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयमाणः । स्थित्वेत्युपवेशनप्रतिषेधः । एवमहःशेषं स्थित्वाऽस्तमिते आचार्यसमीपे वरं ददामीति वाचं विसृजेत् ॥ ७ ॥

॥ ५ ॥ केशश्मश्रुलोमनखान्युदक्संस्थानि संप्रेष्यति ॥ ६ ॥ आप्लुत्य वाग्यतः स्थित्वाऽहः शेषमाचार्यसकाशे वाचं विसृजेत । 'वरं ददामीति' ॥ ७॥ गोमिथुनं दक्षिणा ॥८॥ संवत्सरमादिशेत् ॥९॥ ॥१८॥

वरद्रव्यमाह—ननु भिक्षुरयं कथमस्य गोमिथुनसंभवः? । उच्यते । यथास्य प्रावरणादेः संभवस्तथैतस्यापि ॥ ८ ॥ एवं गोदानं कृत्वा संवत्सरं व्रतमादिशेद्वक्ष्यमाणेन विधिना आचरेत् । रात्रौ व्रतादेशनाऽनुपपत्तेरपरेद्युः कार्यम् ॥ ९ ॥ इति प्रथमेऽष्टादशी कण्डिका ॥ १८ ॥

---

१ प्रैषः । २ सायंकाले ।

जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत् । कुमारमिति वर्तते । तच्च कुमारीनिवृत्त्यर्थमित्युक्तम् ॥ १ ॥ गर्भप्रभृत्यष्टमे वोपनयेत् ॥ २ ॥ जन्मप्रभृति गर्भप्रभृति वा एकादशे वर्षे क्षत्रियमुपनयेत् ॥ ३ ॥ जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत् ॥ ४ ॥ षोडशवर्षपर्यन्तं ब्राह्मणस्योपनयनकालोऽतीतो न भवति ॥ ५ ॥ षोडशद्वाविंशचतुर्विंशपर्यन्तेष्वनुपनीताश्चेत्पतितसावित्रीका भवन्ति ।

**अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥ गर्भाष्टमे वा ॥ २ ॥ एकादशे क्षत्रियम् ॥ ३ ॥ द्वादशे वैश्यम् ॥ ४ ॥ आ षोडशाद्ब्राह्मणस्यानतीतः कालः ॥ ५ ॥ आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ६ ॥ नैनानुपनयेन्नाध्यापयेन्न याजयेन्नै-**

संज्ञायाः प्रयोजनं 'पतितसावित्रीक उद्दालकव्रतं चरेदिति'। अत उर्ध्वमितिवचनं? पूर्वसूत्रेष्वाकारा अभिविधाविति ज्ञापनार्थम् ॥ ६ ॥ अचीर्णप्रायश्चित्तानिति शेषः । उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वोपनीताः स्युः । तथापि नैवोत्तराणि कर्माणि पतितसा-

वित्रीकाणां कुर्यादिति सर्वेषां पाठः क्रियते ॥ ७ ॥ कुशलीकृतशिरसं वापितशिरसमित्यर्थः । अहतं[1] नवम् । अपुराणमनुपभुक्तमित्यर्थः । तेन वाससा संवीतम् । प्रावृतमित्यर्थः । ऐणेयेन[2] वाऽजिनेन चर्मणा प्रावृतं ब्राह्मणमानीय होमं कुर्यात् । एवमुत्तरत्रापि ज्ञेयम् । एतानि चर्माणि वाससा सह विकल्पन्ते । उभयेषां प्रावरणार्थत्वाद्वाशब्दाच्च ॥ ८ ॥ वासांसि वसीरन्नित्येवं सूत्रच्छेद इष्टः ।

**भिर्व्यववहरेयुः ॥ ७ ॥ अलंकृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥ ८ ॥ यदि वासांसि वसीरन्नक्तानि वसीरन्, काषायं ब्राह्मणो**

वासांसि वसीरन्[3] । परिदध्युरित्यर्थः । यदीत्युत्तरेण संबध्यते । तेन नियमेन परिधानं सिद्धम् । पक्षे शुक्लान्यपि सिद्ध्यन्ति । यदि रक्तानि वसीरन् । काषायं ब्राह्मणः । माञ्जिष्ठं क्षत्रियः । हारिद्रं वैश्यः । एवं रक्तानां वसनमनित्यम् । तथा च गौतमः । 'वासांसि क्षौमचीरकुतपाः

---

१ अच्छिद्रं सदशं धौतमहतं वास उच्यते । २ एणीशब्दाड्ढ्रिकारिको ढञ् । ३ वसआच्छादने आदादिकः आत्मनेपदी ।

सर्वेषां कार्पासं वाऽविकृतं काषायमप्येके वाल्कं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः' इति ॥ ९ ॥
उच्यन्त इति शेषः ॥ १० ॥ मौञ्जी नान्यस्य । ब्राह्मणस्य तु मौञ्जी वाऽन्या वा न नियमः ।
एवमुत्तरयोर्ज्ञेयम् ॥ ११ ॥ उच्यन्त इति शेषः ॥ १२ ॥ दण्डनियमो मेखलाभिस्तुल्यः ॥ १३ ॥

माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः ॥ ९ ॥ तेषां मेखलाः ॥ १० ॥ मौञ्जी ब्राह्मणस्य, धनुर्ज्या क्षत्रियस्य, आवी वैश्यस्य ॥ ११ ॥ तेषां दण्डाः ॥ १२ ॥ पालाशो ब्राह्मणस्य, औदुम्बरः क्षत्रियस्य, बैल्वो वैश्यस्य, केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, प्राणसंमितो वैश्यस्य ॥ १३ ॥ ॥ १९ ॥ सर्वे वा सर्वेषाम् ॥ १ ॥ समन्वारब्धे हुत्वोत्तर-

॥ इति प्रथमे एकोनविंशतितमा कण्डिका ॥ १९ ॥ सर्वे दण्डाः सर्वेषां भवन्ति पालाशादयः ॥ १ ॥
आज्यस्य बर्हिष्यासादनान्तं (कर्म) कृत्वा, समन्वारब्धे ब्रह्मचारिणीध्माधानाघारान्तं कृत्वा,
पूर्वोक्ताज्याहुतीर्हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते । ब्रह्मचारी तु तीर्थेन प्रविश्याचार्यस्य

दाक्षिणत उपविशेत् । तीर्थं नाम 'प्रणीतानां पश्चिमो देशः' । सर्वत्र तीर्थेनैव प्रविश्य कर्म कुर्यात् ॥ २ ॥ आचार्यस्य पुरस्तात्प्रत्यङ्मुखो ब्रह्मचारि अवतिष्ठते ॥ ३ ॥ अपामुभयोरञ्जली पूरयित्वा स्वस्य पूर्णेनाञ्जलिनाऽस्य पूर्णमञ्जलिमवक्षारयति 'तत्सवितुर्वृणीमह' इति मन्त्रेण । ब्रह्मचारिणोऽञ्जलावात्मनोऽञ्जलिमवसिञ्चतीत्यर्थः । ततो 'देवस्य त्वेति' मन्त्रेण तस्य पाणिं

तोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ॥ २ ॥ पुरस्तात्प्रत्यङ्मुख इतरः ॥ ३ ॥ अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो

साङ्गुष्ठं गृह्णीयात् । आचार्याञ्जलिमर्थादन्यः पूरयति । आसिच्येति वचनं कथं ? 'आचार्योऽवक्षारणं कुर्यान्न कुमार इत्येवमर्थम्' । इतरथा, पूर्णेनास्य पूर्णमवक्षारयतीत्युक्ते कस्याञ्जलिं कोऽवक्षारयतीति संदेहः स्यात् । आसिच्येति वचने तूच्यमाने समानकर्तृकत्वनिर्देशाद्यः पाणिं गृह्णाति सोऽवसि-

---

१ इकोऽसवर्णेति प्रकृतिभावो ह्रस्वश्च ।

श्वतीति ज्ञायते । तेनाचार्योऽवक्षारयतीति सिद्धम् । असाविसस्य स्थाने संबुद्ध्या ब्रह्म-
चारिनाम ब्रूयात् ॥ ४ ॥ सङ्ख्यावचनं ? प्रथमहस्तग्रहणदृष्टाञ्जलिपूरणादिधर्मप्राप्त्यर्थम् ॥ ५ ॥
८ ॥ ततो ब्रह्मचारिणमादित्यमीक्षयेन्मन्त्रेणाचार्यः । आचार्यग्रहणं ? ज्ञापनार्थम् । 'अन्यत्रेक्षणे

हस्ताभ्यां हस्तं गृह्णाम्यसाविति' तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ॥ ४ ॥ 'सविता ते हस्तमग्रभीदसाविति' द्वितीयम् । 'अग्निराचार्यस्तवासाविति' तृतीयम् ॥ ५ ॥ आदित्यमीक्षयेत् । 'देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृते'—त्याचार्यः ॥ ६ ॥ 'कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामीति'

ब्रह्मचारिणो मन्त्रो नाचार्यस्येति' । तेनादित्यमीक्षयेत् 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इत्यत्र ब्रह्मचारिणो मन्त्रः सिद्धः ॥ ६ ॥ जपेदिति शेषः । मन्त्रलिङ्गात् । प्रजापतये ब्रह्मचारी प्रदीयते । तेनाचार्यस्यायं मन्त्रः ॥ ७ ॥ अनेनार्धर्चेन एनं ब्रह्मचारिणं प्रद-

क्षिणमावर्तयेत् । एनमिति वचनं कथं? 'आवर्तयितुर्मन्त्रः स्यान्नावर्त्यमानो ब्रूयात्कुमार' इत्येवमर्थम् । अर्धर्चग्रहणम्? ऋङ्निवृत्त्यर्थम् । अन्यथा, 'ऋचं पादग्रहणे' ( आश्व० १।१।१७ ) इत्यृक् स्यात् ॥ ८ ॥ अधीत्युपरिभावे । ब्रह्मचारिणोंऽसयोरुपरि स्वस्य पाणी कृत्वा, तस्य हृदयदेशं स्पृशेदुत्तरेणार्धर्चेन ॥ ९ ॥ नन्वत्र परिसमूहनमनर्थकम् । संस्कृतत्वा-

**॥ ७ ॥ 'युवा सुवासाः परिवीत आगादि'—त्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत् ॥८॥ तस्याध्यंसौ[2] पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ॥९॥ अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात्तूष्णीं वै प्राजापत्यं प्राजा-**

दग्नेः । उच्यते । 'सायंप्रातः समिदाधाने पर्युक्षणपरिसमूहने यथा स्यातामिति' परिसमूहनवचनम् । अत्र तु परिसमूहनाद्यकृत्वैव, तस्मिन्नेवाग्नौ ब्रह्मचारी तूष्णीं समिधमादध्यात् । ब्रह्मचारिवचनम्[1] ? आचार्यनिवृत्त्यर्थम् । यस्मात् 'यत्प्राजापत्यं तत्तूष्णीं ब्रह्मचारी च प्राजापत्यः' इति श्रूयते । तस्मात्तूष्णीं समिधमादध्यात् ॥ १० ॥ इति प्रथमे

---

१ किमर्थम् । २ अत्र विनापि द्वित्वं अंसशब्दाद्द्वितीया । सौत्रत्वात् ।

विंशतितमा कण्डिका ॥ २० ॥ एके मन्त्रेण समिदाधानमिच्छन्ति । हशब्दोऽभिमतत्वज्ञापनार्थः । तेन पूर्वस्य श्रुत्याकृष्टत्वेऽप्युभयोस्तुल्यत्वं सिद्धम् ॥ १ ॥ ब्रह्मचारी समिधमाधायाग्निमुपस्पृश्य, मुखं निमार्ष्टि मन्त्रेण त्रिः । मन्त्रावृत्तिरुक्ता । सग्रहणं? समिधौ वा जपेद्वेसत्र

पत्यो ब्रह्मचारी भवतीति विज्ञायते ॥१०॥ ॥२०॥ मन्त्रेण हैके 'अग्नये समिधमाहार्षं बृहते जातवेदसे । तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहेति' ॥ १ ॥ स समिधमाधायाग्निमुपस्पृश्य, मुखं निमार्ष्टि त्रिस्तेजसा मा समनज्मीति ॥ २ ॥ तेजसा ह्येवात्मानं समनक्तीति विज्ञायते ॥ ३ ॥ 'मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु' ।

वक्ष्यमाणो विधिर्माभूत् । समिद्ग्रहणम्? उभयोरपि पक्षयोरुत्तरो विधिर्यथा स्यादिति । आधायग्रहणं? 'सायंप्रातः समिधमादध्यात्' इत्यत्राऽपि यथा स्यात् ॥ २ ॥ श्रुत्याकर्षः कथम्? अग्न्युपस्पर्शनमपि त्रिः स्यादिति ॥ ३ ॥ षड्भिरुपस्थाय, दक्षिणं जान्वाच्य, विधिवदुपसं-

गृह्याचार्यं ब्रूयादधीहीति प्रैषेण ॥ ४ ॥ तस्य ब्रह्मचारिणः परिहितेन वाससा । प्रावरणस्याऽनिसत्वात् । स्वस्य पाणिभ्यां च तस्य पाणी गृहीत्वा सावित्रीमन्वाह ॥ ५ ॥ स्वयं पादं

'मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु'। 'मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु'। 'यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं'। 'यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं'। 'यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम्'। इत्युपस्थाय जान्वाच्योपसंगृह्य, ब्रूयाद-'धीहि भोः सावित्रीं भो अनुब्रूहीति'॥ ४ ॥ तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः[2] सर्वाम् ॥ ५ ॥यथा-

पादमुक्त्वा तेन वाचयति । यदि ब्रह्मचारी पादं पादं वक्तुं न शक्नोति। ततस्तेन यथा-

---

१ धृत्वेत्यर्थः। २ वीप्सायां शस्।

शक्ति वाचयीत । एवमर्धर्चशः । एवं सर्वाम् ॥ ६ ॥ ब्रह्मचारिणो हृदयदेशसमीपे स्वस्य पाणिमूर्ध्वाङ्गुलिमुपदधाति स्थापयति मन्त्रेण ॥ ७ ॥ इति प्रथमे एकविंशतितमा कण्डिका ॥२१॥ ततो मेखलामाबध्य, दण्डं प्रदाय, ब्रह्मचर्यमादिशेत् ॥ १ ॥ इत्थमादिशेदित्याह—इदानीं

शक्ति वाचयीत ॥ ६ ॥ हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति । 'मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यामिति' ॥ ७ ॥ ॥ २१ ॥

मेखलामाबध्य, दण्डं प्रदाय, ब्रह्मचर्यमादिशेत्[1] ॥ १ ॥ ब्रह्मचार्यस्य-पोशान[2] कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति

ब्रह्मचार्यसि । अपोऽशान । मूत्रपुरीषादौ शास्त्रविहितमाचमनं कुर्वित्यर्थः । कर्म कुरु । यच्छास्त्रविहितं कर्म सन्ध्योपासनादि । दिवा मा स्वाप्सीरिति दिवाशयनप्रतिषेधः । आचार्याधीनो

१ उपदिशेत् । २ अशभोजने ।

नियतं भव । वेदमधीष्व वेदाध्ययनं कुरु ॥२॥ वेदस्य ब्रह्मचर्यं वेदब्रह्मचर्यम् । वेदग्रहणं कथं? वेदमात्रस्यायं कालनियमः स्यादिति । मन्त्रब्राह्मणयोर्वेदनामधेयम् । तेन महानाम्न्यादीनां व्रतानामूर्ध्वं द्वादशवर्षेभ्यस्त्रयः संवत्सराः स्युः । एवं च कृत्वोपनयनप्रभृति षोडशे वर्षे गोदानं सिद्धम् । वेदग्रहणादयमर्थो लब्ध एवमेके । अन्ये तु 'जन्मप्रभृति षोडशे वर्षे गोदानम् । महानाम्न्यादीनां च व्रतानां द्वादशवर्षेष्वन्तर्भावमिच्छन्ति । महानाम्न्यादीनामपि वेदैकदेशत्वादिति' । पूर्वस्मिन्पक्षे यदा संवत्सरं व्रतचर्या तदा सप्तदशे गोदानं स्यात् । तस्मादयमेव पक्षः श्रेयान् । वेदग्रहणं

॥ २ ॥ द्वादश वर्षाणि वेदब्रह्मचर्यम् ॥ ३ ॥ ग्रहणान्तं वा ॥ ४ ॥

कथम्? एकैकस्य वेदस्य द्वादश वर्षाणि ब्रह्मचर्यं स्यादिति । तेन द्वयोश्चतुर्विंशति त्रयाणां षट्त्रिंशत् । चतुर्णामष्टाचत्वारिंशत् ॥ ३ ॥ वेदग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं वा द्वादशभ्यः । एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति । विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति । प्राग्द्वादशभ्यो वेदमधीत्य यः स्नाति स विद्यास्नातकः । यस्तु द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽनधीतवेदः स्नाति स व्रतस्नातकः । यस्तु पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽधीतवेदः स्नाति स विद्याव्रतस्ना-

सू०

: ॥

तकः । ननु विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानमिति वक्ष्यति । अतः कथं व्रतस्नानस्य संभवः । उच्यते । विद्यान्त इति न विद्यासमाप्तौ स्नानं चोद्यते । किं तर्हि विद्याया अन्ते न मध्ये । तेन व्रतस्नातकोऽपि मध्यमुत्सृज्यान्तमारण्यकमधीत्य स्नायात् । रहस्ये चारण्यकं प्राधान्येन स्नाननिमित्तं चोद्यते 'वेदमनधीयन्त्स्नातको भवति इत्यादिना । ततः स्विष्टकृदादि कृत्यं समापयेत् ॥ ४ ॥ अहनि रात्रौ चाचार्यार्थमशनार्थं चान्नं याचते । तत्र भव-

सायंप्रातर्भिक्षेत ॥ ५ ॥ सायंप्रातः समिधमादध्यात् ॥ ६ ॥

अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा ॥ ७ ॥

'भवान्भिक्षां ददा त्विति' अनुप्रवचनीयमिति वा ॥ ८ ॥

त्पूर्वमित्यादि शास्त्रान्तरदृष्टो विधिर्द्रष्टव्यः ॥ ५ ॥ अग्निं परिसमूह्येत्याद्युपस्थानान्ता धर्मा भवन्तीत्युक्तम् । पुनः सायंप्रातर्ग्रहणं? पूर्वेणासंबन्धार्थम् । तेन भैक्षं वा पूर्वं भवति समिदाधानं वेति क्रमानियमः सिद्धः ॥ ६ ॥ अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः अनुप्रवचनीयम्? भवान्ददात्विति भैक्षमन्त्रात् ॥ ७ ॥ स्त्रीभिक्षा चेदुभयत्र मन्त्रे भवती ददात्विति ब्रूयात् ॥ ८ ॥

तल्लब्धमाचार्याय निवेद्य, तस्मिन्नहनि यावदुच्छिष्टं तावन्तं कालं तिष्ठेत् । आसनादि न कुर्यात् ॥ ९ ॥ ब्रह्मभ्य ओदनो ब्रह्मौदनः । ब्रह्मशब्दो ब्राह्मणवाचकः । तेन ब्राह्मणभोजनं विधास्यमानमत एव चरोर्भवति । अनुप्रवचननिमित्तमनुप्रवचनीयम् । पाकयज्ञविधानेन[1]

**तदाचार्याय वेदयीत तिष्ठेदहः शेषम् ॥ ९ ॥ अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाऽऽचार्याय वेदयीत[2] ॥ १० ॥ आचार्यः समन्वारब्धे जुहुयात् । 'सदसस्पतिमद्भुतमिति' ॥ ११ ॥ सावित्र्या द्वितीयम् ॥ १२ ॥**

ब्रह्मचारी अनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत 'शृतः स्थालीपाक' इति ॥ १० ॥ ततः समन्वारब्धे ब्रह्मचारिणि आचार्य इध्माधानाद्याघारान्तं कृत्वाऽनया जुहुयात् ॥ ११ ॥ सावित्री 'तत्सवितुर्वरेण्यम्' इत्येषा प्रसिद्धा । द्वितीयग्रहणमुत्तरार्थम् ॥ १२ ॥ अत्र

---

१ विधानं विधिः करणे तृतीया । २ कथयेत् ।

सावित्री अनूक्तेति कृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु यद्यदनूक्तं तेन तेन द्वितीयं जुहोति । एतदुक्तं भवति । 'महानाम्न्यादिव्रतेषु श्रावणान्ते अनुप्रवचनीयहोमः कार्यः । तत्र सावित्र्याः स्थाने 'महानाम्नीभ्यः स्वाहा' 'उपनिषदे स्वाहा' इत्येवं द्वितीयं जुहोति । अन्यत्समानमिति' । द्वितीयग्रहणं महानाम्न्यादिनामधेयेन होमार्थम् । इतरथा, मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः स्यात् । स च प्रदानार्थ

यद्यत्किंचात ऊर्ध्वमनूक्तं स्यात् ॥ १३ ॥ ऋषिभ्यस्तृतीयम् ॥ १४ ॥ सौविष्टकृतं चतुर्थम् ॥ १५ ॥ ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाच-

इति कृत्वानेका आहुतयः स्युः । ततश्चोत्तरासां द्वितीयत्वं न स्यात् । तस्माद्द्वितीयग्रहणमिति ॥ १३ ॥ तृतीयवचनम्? 'ऋषिभ्य इत्यस्य विधायकत्वं निवर्त्य मन्त्रत्वज्ञापनार्थम्' । तेन 'ऋषिभ्यः स्वाहेति' जुहोति ॥ १४ ॥ संख्यावचनं? नियमार्थम् । 'चतुर्थमेव न षष्ठमिति' तेनात्राज्यभागौ न भवतः ॥ १५ ॥ संस्थाजपान्तं कृत्वा, ब्राह्मणान्भोजयित्वा, वेदसमाप्तिं ॥ ४९ ॥

१ अनुउक्तमितिपदयोः संहितैषा ।

भवन्तो ब्रुवन्त्विति ब्रूयात् । ते च वेदसमाप्तिरस्त्विति ब्रूयुः ॥ १६ ॥ अत ऊर्ध्वमिति कथम्? । पूर्वेण संबन्धकरणार्थमिति प्रयोजनमुपरिष्टाद्वक्ष्यामः । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् ॥ १७ ॥ चरितव्रतायेतिवचनं? मेधाजननेन व्रतस्य संबन्धार्थम् । यत्रोपनयने

यीत ॥ १६ ॥ अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा ॥ १७ ॥ चरितव्रताय मेधाजननं करोति ॥ १८ ॥ अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति । 'सुश्रवः

मेधाजननमस्ति । तत्रैव व्रतचर्या । यत्र व्रतचर्या । तत्रैवानुप्रवचनीयम् । उपनीतपूर्वस्य मेधाजननाभावे त्रितयमपि निवर्तते ॥ १८ ॥ इदं मेधाजननम् । तिस्रो निन्दिता दिशः । दक्षिणा, प्राग्दक्षिणा[1], प्रत्यग्दक्षिणेति[2]। अन्याः सर्वा अनिन्दिताः। तस्यां दिश्येकमूलं पलाशं कुशस्तम्बं

---

1 आग्नेयी । २ नैर्ऋती ।

वा पलाशाभावे । प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं ब्रह्मचारिणं वाचयति 'सुश्रवः' इति मन्त्रम् । एकमूलमशाखमित्यर्थः । पुनः पलाशग्रहणम् ? अनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति ॥१९॥ व्रतादेशनं यदस्माभिर्व्याख्यातं संवत्सरावमं चारयित्वा ' व्रतमनुयुज्य ' इति ' संवत्सरमादिशेत् '

सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति ' ॥ १९ ॥ एतेन वापनादि परिदानान्तं व्रतादेशनं व्याख्यातम् ॥ २० ॥ इत्यनुपेतपूर्वस्य[1] ॥ २१ ॥ अथोपे-

इति च । तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कार्यमित्यर्थः । वापनादिग्रहणम् ? अलंकारनिवृत्त्यर्थम् । 'काय त्वा परिददामि' इत्येतत्परिदानम् । परिदानान्तवचनम् ? उपरितनतन्त्रनिवृत्त्यर्थम् ॥ २० ॥ इति एतदुपनयनविधानमनुपेतपूर्वस्य । उत्तरविवक्षयेदमारभ्यते ॥ २१ ॥

१ भूतपूर्वेत्यादिनिर्देशात्पूर्वशब्दस्य परनिपातः ।

अथ अनन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः ॥ २२ ॥ कृताकृतमिति कार्यं वा न कार्यमित्यर्थः ॥ २३ ॥ परिदानमनिरुक्तमिति न भवतीत्यर्थः ॥ २४ ॥ उदगयनादिरनिरुक्तः ॥ २५ ॥ पूर्वस्याः सावित्र्याः स्थाने एतां सावित्रीं प्रयुञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यात् ॥ २६ ॥ इति प्रथमे द्वाविंशतितमा कण्डिका ॥ २२ ॥ प्रमाणतः परिमाणतश्चान्यूनाङ्गाननतिरिक्ताङ्गांश्च

तपूर्वस्य ॥ २२ ॥ कृताकृतं केशवपनं मेधाजननं च ॥ २३ ॥ अनिरुक्तं परिदानम् ॥ २४ ॥ कालश्च ॥ २५ ॥ तत्सवितुर्वृणीमह इति सावित्रीम् ॥ २६ ॥ ॥ २२ ॥ ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥ यून ऋत्विजो वृणीत इत्येके

ऋत्विजः संभजते । ये मातृतः पितृतश्चेत्युक्तलक्षणयुक्ताश्च ते भवेयुः । तत्र प्रमाणतो नातिदीर्घा नातिह्रस्वाः । परिमाणतश्चतुरङ्गुलयः षडङ्गुलयो वा न भवन्ति ॥ १ ॥ अन्ये कर्मसमर्थानित्याहुः । पुनर्ऋत्विग्ग्रहणं? वरणसामान्यादनृत्विजामपि चमसाध्वर्युप्रभृतीनामेतद्गुणप्राप्तौ तन्नि-

१ नञा नञविशिष्टेनानञ् इति समासः ।

 

वृत्त्यर्थम् ॥ २ ॥ एवकारो नियमार्थः । कथं । 'ब्रह्मण एव प्रथमं वरणं स्यादिति' । एवं नियमं कुर्वता होत्रादीनामनियतः क्रमो भवतीत्येतत्साधितम् ॥ ३ ॥ अहीनैकाहैर्याजयन्तीतिवचनं ? शमितृनिवृत्त्यर्थम् । कथं वा प्राप्नुयात्? । सामान्यवरणप्रसङ्गात् । 'आपो मे होत्राशंसिन इति होत्रकान्' (गृ० १।२३।९) इत्यत्र होत्रकशब्दो मुख्यवर्जितेषु वर्तते । 'होत्रका उपह्वयध्वमिती

॥ २ ॥ ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युमथोद्गातारम् ॥ ३ ॥ सर्वान्वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥ सदस्यं सप्तदशं कौषीतकिनः समामनन्ति स कर्मणामुपद्रष्टा भवतीति तदुक्तमृग्भ्यां

तरान्' इत्यत्र मुख्यवर्जितेषु होत्रकशब्दस्य दर्शनात् । ततश्च यथा प्रतिप्रस्थात्रादिषु वर्तत एवं शामित्रादिष्वपि वर्तते होत्रकशब्द इति ॥ ४ ॥ सदसि भवः सदस्यः । सप्तदशग्रहणमृत्विक्सधर्मा भवतीति ज्ञापनार्थम् । तेनोपस्थानप्रसर्पणादिसामान्यविहितं सिद्धम् । अथवा नियमार्थम् । कथम्? । 'एक

१ दिगादिभ्यो यत् इति यत्प्रत्ययः ।

एव सदस्यः स्यादिति' । शाखान्तरेऽनेके सदस्या दृष्टास्तन्निवृत्त्यर्थम् । स च कर्मणामुपद्रष्टा भवतीत्येवं कौषीतकिन आचार्या मन्यन्ते । ऋग्भ्यां चायमर्थ उक्तः ॥ ५ ॥ एवकारोऽवधारणार्थः । 'होतारमेव न ब्रह्माणमिति' । एवं चेत्पूर्वेण विरोधः । न । यदा चतुर्णां वरणं ।

'यमृत्विजो बहुधा कल्पयन्त' इति ॥ ५ ॥ होतारमेव प्रथमं वृणीते ॥ ६ ॥ 'अग्निर्मे होता स मे होता होतारं त्वाऽमुं वृणे' इति होतारम् ॥ ७ ॥ 'चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वाऽमुं वृणे' इति ब्रह्माणम् ॥ ८ ॥ 'आदित्यो मेऽध्वर्युरित्यध्वर्युम्' । 'पर्जन्यो म

तदा ब्रह्मणः प्रथमं वरणम् । यदा सर्वेषां । तदा होतुः प्रथम वरणमिति ॥ ६ ॥ अनेन होतारं वृणीते । अमुमित्यस्य स्थाने होतुर्नाम वाच्यम् । पुनर्होतृग्रहणं? होतृवरणे आम्नातो मन्त्र उत्तरत्रानुवर्तते इति ज्ञापनार्थम् ॥ ७ ॥ कृत्स्नपाठोऽनुवृत्तिमार्गप्रदर्शनार्थः ॥ ८ ॥ सग्रहणं कथं?

सू० अ०१

सू० 'वरणानन्तरमेव जपः स्यात्सर्वेषां वरणे कृते माभूदिति'। वृतग्रहणं? ये ये वृतास्ते ते जपेयुरित्ये-
वमर्थम् ॥ ९ ॥ जपित्वेति वचनं? 'तन्मामवतु तन्मा विशतु इत्येतमपि जपं जपित्वेत्येवमर्थम्'।

१ ॥ उद्गातेत्युद्गातारम्'। 'आपो मे होत्राशंसिन' इति होत्रकान्।
'रश्मयो मे चमसाध्वर्यव' इति चमसाध्वर्यून्। 'आकाशो मे सदस्य'
इति सदस्यम्। स वृतो जपेत्। 'महन्मेऽवोचो भर्गो मेऽवोचो भगो
मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं
मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच' इति ॥ ९ ॥ जपित्वा-
'ऽग्निष्टे होता स ते होता होतारं ते मानुष' इति होता प्रतिजानीते
॥ १० ॥ चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ ११ ॥ एवमितरे यथादेशं

इहैव तर्हि कस्मान्न पठितः। अनित्यत्वात्। अनित्यत्वं तु वक्ष्यामः ॥ १० ॥ तेशब्दपाठः?
प्रतिवचनस्यानुवृत्तिमार्गप्रदर्शनार्थः ॥ ११ ॥ जपतीति शेषः। यदा अग्न्याधेये चतुर्णां वरणं ॥ ८२ ॥

भवति तदा याजयितारस्ते न भवन्ति । यत्तु सोमाङ्गं वरणं भवति तत्र याजयितारो भवन्ति । तेन सोमाङ्गवरण एवायं जपो नाग्न्याधेये । तेनायमनित्यः ॥ १२ ॥ याज्यलक्षणमाह—ऋत्विग्भिर्विवादेन सक्तमार्त्विज्यमकार्यम् ॥ १३ ॥ अल्पदक्षिणस्याहीनस्यार्त्विज्यमकार्यम् । ततो

'तन्मामवतु तन्मा विशतु' 'तेन भुक्षिषीयेति' च याजयिष्यन् ॥ १२ ॥ न्यस्तमार्त्विज्यमकार्यम् ॥ १३ ॥ अहीनस्य नीचदक्षिणस्य ॥ १४ ॥ व्याधितस्यातुरस्य ॥ १५ ॥ यक्ष्मगृहीतस्य ॥ १६ ॥ अनु-

ज्ञायते एकाहस्याल्पदक्षिणस्यापि कार्यमिति । विज्ञायते च 'तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापीति ॥ १४ ॥ व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगतः ॥ १५ ॥ यक्ष्मगृहीतः क्षयव्याधिगृहीतः ॥ १६ ॥ सदेशिनाऽभिशस्तस्यैवमेके । अन्ये तु श्राद्धे प्रतिषिद्धस्येत्याहुः

---

१ ग्रस्त इत्यर्थः । २ शय्या तल्पः ।

॥ १७ ॥ क्षिप्रयोनिर्नाम यस्य माता स्वभर्तरि नावतिष्ठते । अकार्यमिति सर्वत्र संबन्धनीयम् । इतिचैतेषामिति वचनम्? अन्येषामप्येवंप्रकाराणां न कार्यमित्येवमर्थम् ॥ १८ ॥ यः सोमं प्रथमं निवेदयतीदं त्वयास्मिन्कार्यमिति स सोमप्रवाकस्तमेवं पृच्छेत् ॥ १९ ॥ कल्याणे यज्ञे कार्यम् । कल्याणैर्ऋत्विग्भिः सह कार्यम् । दक्षिणा अपि कल्याण्यो यदि स्युः । तथा सति कार्यम् ।

**देश्याभिशस्तस्य ॥ १७ ॥ क्षिप्रयोनेरिति चैतेषाम् ॥ १८ ॥ सोमप्रवाकं परिपृच्छेत्को यज्ञः क ऋत्विजः का दक्षिणेति ॥ १९ ॥ कल्याणैः सह संप्रयोगः ॥ २० ॥ न मांसमश्नीयुर्न स्त्रियमुपेयुरा ऋतोरपवर्गात्**

नान्यथा ॥ २० ॥ क्रत्वादिप्रभृत्या[1] अपवर्गादेते नियमा भवन्ति । वरणप्रभृतीति कल्प्यमाने यदि मध्यमोपसदि वरणं भवति । तदा प्रागनियमः प्रसज्येत । तस्मात्क्रत्वादिप्रभृतीति युक्तम् । मध्यमोपसदि च शाखान्तरे वरणं दृष्टम् ॥ २१ ॥ क्रत्वन्ते स्वस्य दक्षिणाग्नौ 'एतेनाग्ने'

१ आङ् मर्यादायाम् । तद्योगे अपवर्गशब्दात्पञ्चमी ।

इत्येतया आज्याहुतिं जुहोति। नैमित्तिकत्वाच्छास्त्रान्तरदर्शनाच्च । मन्त्रलिङ्गाच्च । चक्रमेति हि भूतप्रत्ययः। तेन क्तवन्त इति सिद्धम्। यथार्थं प्रव्रजेदिति। यथार्थमाचरेत् । अनियमो भवतीत्यर्थः । हुत्वाऽनियमो भवतीति ब्रुव—'न्समासेऽपि क्रतौ होमपर्यन्तं नियमा भवन्तीति' ज्ञापयति। आज्याहुतिवचनं? तन्त्रनिवृत्त्यर्थमिष्यते न तु परिस्तरणविकल्पार्थम् ॥२२॥ एतयेति-

॥ २१ ॥ 'एतेनाग्ने ब्रह्मणा वावृधस्वेति' दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् ॥ २२ ॥ एवमनाहिताग्निर्गृह्य 'इमामग्ने शरणिं मीमृषो न' इत्येतयर्चा ॥ २३ ॥ ॥ २३ ॥ ऋत्विजो वृत्वा मधुपर्कमाहरेत्

वचनम्? एतया जुहुयादेवेत्येवमर्थम्। तेनात्रापि तन्त्रं न भवति। ऋचेतिवचनमकृतविवाहोऽप्यार्त्विज्यं कृतवानेतया लौकिकाग्नौ जुहुयादित्येवमर्थम् । मधुपर्कप्रसङ्गादत्र ऋत्विग्वरणमाम्नातम् ॥ २३ ॥ इति प्रथमे त्रयोविंशतितमा कण्डिका ॥ २३ ॥ दद्यादित्यर्थः ॥ १ ॥ उपस्थिताय स्नातकाय

कृतसमावर्तनाय। तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च ॥ २ ॥ उपस्थिताय ॥ ३ ॥ आचार्यादीनां पूर्वयोरसमासेन निर्देशस्त्वतुल्यत्वज्ञापनार्थः। तेन स्नातकाय तदहरेव देयः। यत्रैनं पूजयिष्यन्तो भवन्तीति वचनात्। विवाहार्थिने च। राज्ञे त्वहरहरभ्यागताय। आचार्यादीनां प्रति वत्सरोषितागतानां शास्त्रान्तरदर्शनाद्विशेषो लब्धः ॥ ४ ॥ अप्रसिद्धत्वा-

**॥ १ ॥ स्नातकायोपस्थिताय ॥ २ ॥ राज्ञे च ॥ ३ ॥ आचार्यश्वशुर-पितृव्यमातुलानां च ॥ ४ ॥ दधनि मध्वानीय ॥ ५ ॥ सर्पिर्वा मध्व-लाभे ॥ ६ ॥ विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां**

न्मधुपर्कस्वरूपमाह—आनयतिरत्र सेचनकर्मा। असिच्येत्यर्थः ॥ ५ ॥ इदं वचनं? 'मध्वला-भेऽयमेव प्रतिनिधिर्भवति। नान्यस्तैलादिरित्येवमर्थम्' ॥ ६ ॥ अल्पत्वाद्दातुः कर्म पूर्वमाह—विष्टर इत्यासनम्। पाद्यार्थमर्घ्यार्थमाचमनार्थं चोदकं तथोक्तम्। एतेषामिति वचनं? 'एतेषामेव त्रिर्निवेदनं यथा स्यात्। भोजनस्य माभूदिति'। भोजनं च देयमिति वक्ष्यामः। ऋत्विजां

१ सेचनार्थ.। कर्मणः क्रियावाचित्वात्।

मधुपर्कदाने द्वे गती संभवतः। पदार्थानुसमयः, काण्डानुसमय इति। तत्र पदार्थानुसमयो नाम 'सर्वेभ्यो वरणक्रमेण विष्टरं दत्वा, ततः पाद्यं, ततोऽर्घ्यमिति'। काण्डानुसमयो नाम 'एकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य, ततोऽन्यस्य सर्वं, ततोऽन्यस्येति'॥ ७॥ अथ ग्रहीतुः कर्माह—

त्रिस्त्रिरेकैकं वेदयन्ते ॥ ७ ॥ 'अहं वर्ष्म सजातानां विद्युतामिव सूर्यः। इदं तमधितिष्ठामि यो मा कश्चाभिदासती-' त्युदगग्रे विष्टर उपविशेदाक्रम्य वा ॥८॥ पादौ प्रक्षालापयीत दक्षिणमग्रे[2] ब्राह्मणाय प्रयच्छेत् ॥ ९ ॥ सव्यं शूद्राय ॥ १० ॥ प्रक्षालितपादोऽर्घ्यमञ्जलिना

पद्भ्यामाक्रम्य वा विष्टरौ। एतयोर्विकल्पः ॥ ८ ॥ पश्चात्सव्यं। कुतः? अग्रेवचनात् ॥ ९ ॥ अग्रे प्रयच्छेत्। पश्चाद्दक्षिणं। क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा। नास्ति तदा नियमः ॥ १० ॥ प्रक्षालितपादग्रहणम्? आनन्तर्यार्थम्। प्रक्षालनानन्तरमर्घ्यमेव

---

१ ददति। २ पादमितिशेषः।

गृह्णीयादिति । गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमित्युच्यते लोके ॥ ११ ॥ अथशब्दस्त्वानन्तर्यार्थः । अर्घ्यानन्तरमाचमनीयमेवेति । तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि । आचामतीत्युदकं पिबतीत्यर्थः । अत्र शौचार्थमाचमनं न भवति । कुतः । स्मृतेः 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टा भवन्ति' इति । उत्तरत्र विधानाच्च 'आचान्तो

**प्रतिगृह्य ॥ ११ ॥ अथाचमनीयेनान्वाचामति 'अमृतोपस्तरणमसीति' ॥ १२ ॥ मधुपर्कमाह्रियमाणमीक्षेत 'मित्रस्य त्वा चक्षुषा प्रतीक्ष' इति ॥ १३ ॥ 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो**

दकाय गां' ( गृ० १।२४।२३ ) इति । एवमेके । तदयुक्तम् । कुतः । सोमे अनुच्छिष्टविधाना-द्यत्राचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं भवतीति गम्यते । आचान्तोदकवचनमन्यार्थम् ॥१२॥ मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण ॥ १३ ॥ अनामिकेति केचिन्मध्यमामाहुः । कुतः । देशेनैव समाख्या न तु तस्या नाम विद्यते अङ्गुष्ठादिवत् । अन्ये तूपकनिष्ठिकामाहुः । कुतः ।

१ अस्य एवमेकेइत्यनेन संबन्धः ।

कनिष्ठिकया ह्यसौ व्यपदिश्यते न तु तस्या नामास्तीति । आगमाद्विशेषो ज्ञेयः । तृचेनावेक्ष्य, ततः सव्ये पाणौ कृत्वा, प्रदक्षिणमालोड्य, वसवस्त्वेति पुरस्तान्निमार्ष्टि । अङ्गुलिगतं लेपमपन-

हस्ताभ्यां प्रतिगृह्णामीति' तदञ्जलिना प्रतिगृह्य 'मधुवाता ऋतायत' इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य 'वसवस्त्वा गायत्रेण च्छन्दसा भक्षयन्त्विति' पुरस्तान्निमार्ष्टि ॥ १४ ॥ 'रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्त्विति' दक्षिणत 'आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्त्विति' पश्चाद् 'विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्त्वि'-त्युत्तरतो 'भूतेभ्यस्त्वेति' मध्यात्त्रिरुद्गृह्य ॥ १५ ॥ 'विराजो

यतीत्यर्थः ॥ १४ ॥ मन्त्रेण मध्यात्त्रिरुद्गृह्य निमार्ष्टि । ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थः । मन्त्रावृत्ति-

---

१ आचारादित्यर्थः ।

रुक्ता ॥ १५ ॥ ततो भूमौ निधाय पात्रम्—संख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रै-र्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थानि । एवं भाष्यकारो व्याचख्यौ । अन्ये त्वन्यथा । भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य विराजो दोहोऽसीति प्रथममुद्ग्राहं प्राश्नीयात् । विराजो दोहमशीयेति द्वितीयमुद्ग्राहम् । मयि दोह इति तृतीयमुद्ग्राहम् । तृतीयवचनं ? 'सर्वप्राशनपक्षे

दोहोऽसीति' प्रथमं प्राश्नीयाद् 'विराजो दोहमशीयेति' द्वितीयं 'मयि दोहः पद्यायै विराज' इति तृतीयम् ॥ १६॥ न सर्वम् ॥१७॥ न तृप्तिं गच्छेत् ॥ १८ ॥ ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेदलाभेऽप्सु ॥ १९ ॥

तृतीयेन प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थम्' । पद्यायै विराज इत्यत्र विराज इति षष्ठी । कुतः । पूर्वयोस्तथा दृष्टत्वात् । पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तत्सा मानाधिकरण्ये सत्यपि षष्ठ्येव युक्ता कल्पयितुम् ॥ १६ ॥ प्राश्नीयान्न सर्वम् ॥ १७ ॥ तृप्तिं च न गच्छेत् ॥ १८ ॥ ब्राम्हणायोच्छिष्टमुद्धृतादवशिष्टमुदङ्मुखो मधुपर्कं प्रयच्छेत् । ब्राह्मणाला-

भेऽप्सु निषिञ्चेत् ॥ १९ ॥ प्राश्नीयात् ॥ २० ॥ यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण ॥२१॥ द्वितीयग्रहणम्? आचमनीयप्राप्त्यर्थम्। इतरथा मन्त्रस्योत्तरेण संबन्धः स्यात् ॥२२॥ आचान्तग्रहणं? शौचार्थमाचमनं कृत्वा, कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थम्। उदकवचनमाचमनी-

सर्वं वा ॥ २० ॥ अथाचमनीयेनान्वाचामत्य-'मृतापिधानमसीति' ॥२१॥ 'सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति' द्वितीयम् ॥२२॥ आचान्तोदकाय गां वेदयन्ते ॥ २३ ॥ 'हतो मे पाप्मा पाप्मा मे हत' इति जपित्वोङ्कुरुतेति कारयिष्यन् ॥ २४ ॥ 'माता रुद्राणां दुहिता वसूना-

यनिवृत्त्यर्थम्। तेनाचमने उदकान्तरं भवति ॥ २३ ॥ इमं मन्त्रं जपित्वा ॐ कुरुतेति ब्रूयात्। यदि कारयिष्यन्मारयिष्यन्भवति। तदा च दाता आलभेत। तत्र देवताः प्रागुक्ताः ॥ २४ ॥

---

१ कृञ् हिंसायाम्। ततो णिजन्ताच्छतृ।

यद्युत्स्रक्ष्यन् भवति । तदा एतां जपित्वा ओंमुत्सृजतेति ब्रूयात् ॥ २५ ॥ मधुपर्काङ्गं भोजनममांसं न भवतीत्यर्थः । कुतः । मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात् । अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति । पशुकरणपक्षे तन्मांसेन भोजनम् । उत्सर्जनपक्षे मांसान्तरेण । अध्याया-

**मिति' जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् ॥ २५ ॥ नामांसो मधुपर्को भवति भवति ॥ २६ ॥ ॥ २४ ॥ इति गृह्यसूत्रे प्रथमोऽध्यायः॥ १ ॥**

न्तलक्षणार्थं[1] द्विर्वचनं । मङ्गलार्थं च ॥ २६ ॥ इति प्रथमे चतुर्विंशतितमा कण्डिका ॥ २४ ॥

इत्याश्वलायनगृह्यसूत्रविवरणे गार्ग्यनारायणीयायां वृत्तौ प्रथमोऽध्यायः ॥ १ ॥



१ सूचनार्थम् ।

॥ श्रीगणेशाय नमः ॥ कर्तव्यमिति शेषः । सर्पबलिश्चेत्यध्याहार्यम् । श्रवणेन युक्ता श्रावणी। यदा पुनः पौर्णमासी श्रवणेन युक्ता तदापि कर्तव्यमेव । पौर्णमासीविशेषलक्षणार्थत्वान्नक्षत्रस्य। श्रवणाकर्मेति कर्मनामधेयम् ॥ १ ॥ अक्षता नाम यवाः । तैः कृताः सक्तवः । दर्वी वैकङ्कती स्रुगाकृतिः । बलिर्यया दर्व्या ह्रियते सा बलिहरणी । एतदुभयं नवे शिक्ये निदधाति

॥ श्रीगणेशाय नमः ॥ ॥ अथ द्वितीयोऽध्यायः २ ॥ ॥ ॐ ॥

श्रावण्यां[1] पौर्णमास्यां श्रवणाकर्म ॥ १ ॥ अक्षतसक्तूनां नवं कलशं पूरयित्वा दर्वीं च बलिहरणीं नवे शिक्ये निदधाति ॥ २ ॥ अक्षतधानाः कृत्वा सर्पिषाऽर्धा अनक्ति ॥ ३ ॥ अस्तमिते स्थालीपाकं

सर्पबल्यर्थम् ॥ २ ॥ अथ श्रवणाकर्मोच्यते—यवैर्धानाः कृत्वा, असंस्कृतेन घृतेनानक्ति । अर्धा धानाः पात्रान्तरे कृत्वा अन्याश्चार्धा धाना नानक्ति । एतावदह्नि कर्तव्यम् ॥ ३ ॥ श्रपयित्वेतिवचनं? पुरोडाशस्यौपासने धर्मवच्छ्रपणार्थम् । स्थालीपाकस्य तु तन्त्रप्राप्त्यैवौपासने श्रपणं

१ नक्षत्रेण युक्तः काल इति अण् ।

सिध्यति। नन्वन्यस्यापि सिध्यति। नियमार्थं तर्हि। तेन धानासक्तुलाजादीनां लौकिकाग्नौ सिद्धानामेवोपादानं भवति। एतावांस्तु तेषां संस्कारः। आज्यपर्यग्निकरणवेलायां तैः सहाज्यस्य पर्यग्निकरणं भवेत्। यदा आज्यस्योपवनमात्रमेव क्रियते। तदा तेषां त्रिः प्रोक्षणं भवेत्। अवज्वलनं वा पूर्ववत्। एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालः पुरोडाशः। तमुद्रास्याज्ये

**श्रपयित्वैककपालं च पुरोडाश—'मग्ने नय सुपथा राये अस्मानिति' चतसृभिः प्रत्यृचं हुत्वा पाणिनैककपालम—'च्युताय भौमाय स्वाहेति' ॥ ४ ॥ अविप्लुतः स्यादाविःपृष्ठो वा ॥ ५ ॥ 'मा नो अग्नेऽवसृजो**

निमग्नं कुर्यात्। व्यक्तपृष्ठं वा कुर्यात्। चरुं चतसृभिः प्रत्यृचं हुत्वा, दक्षिणेन पाणिना एककपालं जुहुयान्मन्त्रेण। उपस्तरणाभिघारणे तु सव्येन करोति। दक्षिणस्याऽन्यत्र व्यापृतत्वात्। दक्षिणाङ्गपरिभाषा च द्वयोः प्राप्तयोर्नियामिका न तु प्रापिकेत्युक्तम्। अस्य सर्वहुतत्वादवदानधर्मो लुप्तः। सर्वहुतत्वं तु वक्ष्यामः ॥ ४ ॥ व्याख्यातमेतत् ॥ ५ ॥ एनं पुरोडाशम्।

---

१ संस्कृतं भक्षाः इत्यण्। तस्य द्विगोर्लुगनपत्ये इति लुक्।

एनमिति वचनम्? अखण्डितोऽयं हुत इति ज्ञापनार्थम्। यस्मिन्नाज्ये पुरोडाशः शायितस्तदाशयम्। तेनाभिजुहोति। स्रुवेण उपरि जुहोतीत्यर्थः ॥ ६ ॥ जुहुयादिति शेषः। हस्तद्वयसङ्घातोऽञ्जलिः। उपस्तरणावदानप्रत्यभिघारणान्यर्थादन्यः करोति ॥ ७ ॥ इतरा अनक्ता धानाः पुत्रादिभ्यो दद्यात्। ततो धानाभ्यश्च गृहीत्वा, स्विष्टकृतं हुत्वा, होमशेषं समापयेत् ॥ ८ ॥ अथ सर्पबलि-

अघाये'-त्येनमाशयेनाभिजुहोति ॥ ६ ॥ 'शन्नो भवन्तु वाजिनो हवेष्वि'-त्युक्त्वा धाना अञ्जलिना ॥ ७ ॥ अमात्येभ्य इतरा दद्यात् ॥ ८ ॥ कलशात्सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय 'सर्पदेवजनेभ्यःस्वाहेति' हुत्वा नमस्करोति।

रुच्यते—कलशश्च दर्वी च नवे शिक्ये स्थापिते। तत्र कलशाद्गृहीत्वा सक्तुभिर्दर्वीं पूरयित्वा, तां गृहीत्वा, गृहान्निष्क्रम्य गृहान्तिके अथ वाऽसमीपे देशे प्राच्यां दिशि शुचौ देशे अप आसिच्य, मन्त्रेण सक्तूञ्जुहोति। प्रक्षिपतीत्यर्थः। संहताभ्यां पाणिभ्यां ततो नमस्करोति मन्त्रेण। हुत्वेति वचना-

बलिं हरेदाप्रत्यवरोहणात्सायं प्रातश्च । आ चतुर्दश्या आ पौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहणं करोति । मन्त्रोपदेशो नियमार्थः । 'मन्त्र एव भवति नान्यो विधिरिति' । सक्तवस्तावन्न निवर्तन्ते । कलशपूरणस्यादृष्टार्थप्रसङ्गात् । दर्वी च न निवर्तते । दर्वी च बलिहरणीमित्यत्र 'बलिहरणीम्' (गृ० २।१।२) इति विशेषणस्येदमर्थत्वात् । शुचिर्देशश्च न निवर्तते । बलिहरणस्य भूमिसाध्यत्वेन प्रसिद्धत्वात् । अन्यत्सर्वं निवर्तते ॥ १४ ॥ श्रावणीं

**स्वाहेति' सायं प्रातर्बलिं हरेदा प्रत्यवरोहणात् ॥ १४ ॥ प्रसंख्याय हैके तावतो बलींस्तदहरेवोपहरन्ति ॥ १५ ॥ ॥ १ ॥ आश्वयुज्यामा-**

प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनेष्वहःसु यावन्तः क्षयवृद्धिभ्यां परिगणनया प्रातःसायंकालास्तावतो बलींस्तदहरेव दद्यादित्येके मन्यन्ते । हशब्दोऽभिमतत्वज्ञापनार्थः सर्वत्र ॥ १५ ॥ ॥ इति द्वितीये प्रथमा कण्डिका ॥ १ ॥ अश्वयुग्भ्यां युक्ता आश्वयुजी तस्यां । पौर्णमास्यामिति वर्तते । आश्वयुजी-

---

१ अश्विनीनक्षत्राभ्याम् ।

कर्मसंज्ञकं कर्म कुर्यात् । अयोगेऽपि पूर्ववत् ॥ १ ॥ निवेशनं गृहं तत्प्रत्यवरोहणोक्तविधिनालंकृत्य, सर्वे गृह्याः स्नान्ति । स्नानवचनं ? विशेषेण स्नानार्थम् । शौचार्थस्य स्मृतिप्राप्तत्वात् । शुचिवासोवचनं ? शुक्लवस्त्रप्राप्त्यर्थं । स्थालीपाकं जुहुयुरित्येतावतैव सिद्धे पशुपतये निरूप्येति वचनं ? 'पशुपतये त्वा जुष्टं निर्वपामि' इत्येवं निर्वापप्रोक्षणे कुर्यादित्येवमर्थम् । एवं ब्रुवता आदिष्टमन्त्रेषु

श्वयुजकिर्म ॥ १ ॥ निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरूप्य जुहुयुः 'पशुपतये, शिवाय, शंकराय, पृषात-काय, स्वाहेति' ॥ २ ॥ पृषातकमञ्जलिना जुहुया '-दूनं मे पूर्यतां पूर्णं

पाकयज्ञेषु निर्वापप्रोक्षणे तूष्णीं भवत इत्येतज्ज्ञापितं भवति । स्थालीपाकमिति द्वितीयानिर्देशेऽपि सर्वहुतत्वाशङ्का न कार्या । 'अथ दधिसक्तूञ्जुहोति' इत्यत्र हुत्वा दधिसक्तून्प्राश्येति शेषभावदर्शनात् । स्थालीपाकमिति । स्थालीपाकस्यैकदेशमित्यर्थः । जुहुयुरिति बहुवचनम् ? 'गृहिणा होमे क्रियमाणे पुत्रादयो गृह्याः समन्वारभेरन्नित्येवमर्थम्' ॥ २ ॥ 'पयस्याज्ये

अथ वात्र समानतन्त्रं कुर्यात्सौम्यं चरुम् । अस्य च नामधेयेन होमः । आग्रयणस्थालीपाक इत्यत्र च विशेषणसमासः । आग्रयणं चासौ स्थालीपाकश्चेति । तत्र स्थालीपाकग्रहणस्येदं प्रयोजनम् । अनाहिताग्नेः स्थालीपाक एव कार्यः । 'नाग्निहोत्री वै नानादयित्वा' इत्ययं पक्षः कार्य इति ॥ ५ ॥ इति द्वितीये द्वितीया कण्डिका ॥ २ ॥ मृगशीर्षेण युक्ता मार्गशीर्षी । पौर्णमास्यामिति वर्तते । सामीप्ये चेयं सप्तमी । यथा 'अथाग्नीषोमीयेण चरन्त्युत्तरवेद्यां' इति । तेनायमर्थः ।

**शालाग्नौ ॥५॥ ॥२॥ मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्याम् ॥१॥ पौर्ण-**

'मार्गशीर्ष्याः पौर्णमास्याः समीपे या चतुर्दशी तस्यां प्रत्यवरोहणं नाम कर्म कर्तव्यमिति' ॥ १ ॥ मार्गशीर्ष्यामिति वर्तते । अत्र त्वधिकरणे सप्तमी । तेन मार्गशीर्ष्यां पौर्णमास्यां वेति पूर्वेण सह विकल्पः । भाष्यकारास्त्वित्थं[1] विवृतवान् । मार्गशीर्षी पौर्णमासी यस्मिन्मासे सोऽयं मार्गशीर्षो मासः । 'सास्मिन् पौर्णमासीति संज्ञायाम्' (पा० ४, २, २१) इत्यण्प्रत्ययः । तस्मिन्मासे भवायां चतुर्दश्यां पौर्णमास्यां वेति विकल्प इत्यर्थः । नन्वेवं सति चतुर्दशीद्वित्वाद्विः

१ वक्ष्यमाणप्रकारेणेत्यर्थः ।

कर्म प्राप्नोति । न । सकृदेव कार्यं । 'सकृत्कृते कृतः शास्त्रार्थ' इति न्यायात् । चतुर्दश्यामित्येकवचनाच्च । पौर्णमास्या सह विकल्पाच्च । नन्वेवमपि शुक्ले कृष्णे वा स्यात् । न । पौर्णमासीसाहचर्या[1]च्छुक्ल एवेति ॥ २ ॥ पुनरिति वचनादाश्वयुजीकर्मण्यपीत्थमेवालंकरणमिति गम्यते । नवीकृत्य

**मास्यां वा ॥ २ ॥ निवेशनं पुनर्नवीकृत्य लेपनस्तरणोपस्तरणैरस्तमिते पायसस्य जुहुयु–'रपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा' । 'न वै श्वेतस्याभ्या-**

नवमिव कृत्वेत्यर्थः । तच्च एतैरित्याह । लेपनं कुड्यादीनाम् । स्तरणं च तेषामेवाच्छादनम् । उपस्तरणं भूमेः समीकरणम् । नवीकृत्येति वचनादपामार्गादीन्यप्युद्वास्यानि । एतावदहनि कर्तव्यम् । अथास्तमिते पायसस्यैकदेशं जुहुयुर्मन्त्राभ्याम् । 'तत्कालाश्चैव तद्गुणा' इति न्यायादुपलेपनाद्यस्त-

---

१ सहचरितासहचरितयोः सहचारितस्य ग्रहणमिति न्यायादित्यर्थः ।

मित एव कार्यम् । बहुवचनं पूर्ववत् ॥ ३ ॥ सौविष्टकृदिति स्विष्टकृदित्यर्थः सर्वत्र । अत्र कर्मणि यः स्विष्टकृत्स न कार्य इत्यर्थः । असत्यत्रग्रहणे प्रधानानन्तरमुच्यमानत्वात्प्रधानानन्तरं स्विष्टकृन्न भवतीत्यर्थः स्यात् । अन्ते च स्यादेव । ननु प्रधानानन्तरं स्विष्टकृतः प्राप्तिरेव नास्ति । तथाहि । एताभ्यो देवताभ्यो हुत्वा, सौविष्टकृतं हुत्वा, इत्यत्र सौविष्टकृतं हुत्वेत्येतदपार्थकम् । प्रधानानन्तरं स्विष्टकृतः प्रकृतितः प्राप्तत्वात् । तत्कुर्वञ्ज्ञापयति । 'अन्यत्र यान्यागन्तून्यङ्गानि विहितानि तत्र

गारेऽहिर्जघान किंचन । श्वेताय वैदार्वाय नमः स्वाहेति' ॥ ३ ॥ नात्र

तानि कृत्वा पश्चात्स्विष्टकृत्कार्य इति' । तर्हि प्रधानानन्तरं स्विष्टकृत्प्रतिषेधाशङ्कानिवृत्त्यर्थमत्रग्रहणं कुर्वञ्ज्ञापयति । अत्र प्रधानानन्तरं कर्मणोऽन्ते वा स्विष्टकृन्न भवतीति । तेनान्यत्र प्रधानानन्तरं कर्मणोऽन्ते वा स्विष्टकृदिति विकल्पः सिद्धः । अथवा सौविष्टकृतं हुत्वेत्येतत्क्रमार्थम् । असति तु तस्मिन्प्रधानानन्तरमेव प्राशनादि स्यात् । अत्र च प्रधानानन्तरं स्विष्टकृतः प्रकृतिप्राप्तत्वात्तस्य च प्रतिषेधे सति कर्मण्येव प्रतिषेधो भवति । कालान्तरे प्राप्त्यभावात् । एवं च

सत्यत्रग्रहणं कुर्वञ्ज्ञापयति। अन्यत्र कर्मान्ते वा स्विष्टकृद्भवतीति ॥ ४ ॥ अर्थध्यानस्य मुख्यत्वेऽपि शब्दध्यानमेव कार्यमित्येवमर्थं मनोग्रहणम्। मन्त्रमुक्त्वा मनसा हेमन्तशब्दं संबुद्ध्यन्तं ध्यायेन्मन्त्रेण समानाधिकरणत्वार्थं[1] ॥ ५ ॥ यस्मिंस्तरणे स्वयं शेते स स्वस्तरः। स स्वास्तीर्णो

सौविष्टकृत ॥४॥ 'अभयं नः प्राजापत्येभ्यो भूयादि–' त्यग्निमीक्षमाणो जपति 'शिवो नः सुमना भवेति' हेमन्तं मनसा ध्यायात् ॥ ५ ॥ पश्चादग्नेः स्वस्तरः स्वास्तीर्णस्तस्मिन्नुपविश्य, 'स्योना पृथिवी भवेति' जपित्वा, संविशेत्सामात्यः प्राक्शिरा उदङ्मुखः ॥ ६ ॥ यथावका-

भवति। स्वयमेव तमास्तृणीयादित्यर्थः। तस्मिन्ग्रहणममात्यानामपि तत्रैव प्रापणार्थम्। संविशेदिति। शयीत[2]त्यर्थः। अमात्याः पुत्रादयो गृह्याः। उदङ्मुखवचनं? दक्षिणामुखनिवृत्त्यर्थम् ॥६॥ अमात्या यथावकाशं प्राक्शिरस उदङ्मुखाः संविशेयुरित्यर्थः। उत्तरेण विकल्पार्थमिदम् ॥ ७ ॥

---

१ एकार्थप्रतिपादकत्वाय। २ स्वप्न : सवेश इत्यपि इत्यमरः।

यो यो यस्माद्यस्माद्वृद्धतरः स स गृहिणोऽनन्तरं संविशेत् । यथावकाशं वेति विकल्पः ॥ ८ ॥ स्योना पृथिवीत्यारभ्य स्वस्त्ययनपर्यन्तान्मन्त्रान्मन्त्रविदः सर्वे ब्रूयुर्गृह्याः ॥ ९ ॥ संहायेत्यु-त्थायेत्यर्थः । प्राङ्मुखास्त्रिर्ब्रूयुः ॥ १० ॥ एतामितिवचनं ? योगविभागार्थम् । इतरथा, त्रिदि-ङ्मुखास्त्रिर्ब्रूयुः । चतुर्थं चतुर्वारं त्रिदिङ्मुखाः सकृदित्ययमर्थः स्यात् । योगविभागे सति प्राङ्मु-

शामितरे ॥ ७ ॥ ज्यायाञ्ज्यायान्वानन्तरः ॥ ८ ॥ मन्त्रविदो मन्त्राञ्ज-पेयुः ॥ ९ ॥ संहाय 'अतो देवा अवन्तु न' इति त्रिः ॥ १० ॥ एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम् ॥ ११ ॥ संहाय सौर्याणि

खास्त्रिः । त्रिदिङ्मुखाः सकृदित्ययमर्थो लभ्यते । त्रिदिङ्मुखाश्च यथासङ्ख्येन त्रीन्पादान्ब्रूयुः । चतुर्थवचनं ? त्रिरधिकारानिवृत्त्यर्थम् । सर्वे प्रायश्चित्तादि समापयेयुः । ततो यथाशय्यं शेरते । उत्तरत्र संगतिविधानात् ॥ ११ ॥ संहाय सङ्गत्येत्यर्थः । इदानीं सङ्गतिविधानात् पूर्वं यथाशय्यं शेरत

१ बहुवचनेनेदं लब्धम् । २ त्रेः सुच् ।

इति गम्यते । समागम्य उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपेयुः । 'सूर्यो नो दिवः। उदुत्यं जातवेदसमिति नव । चित्रं देवानां । नमो मित्रस्य' इत्येतेषां सौर्यसंज्ञा कृता । स्वस्ति-शब्दवन्ति स्वस्त्ययनानि 'आ नो भद्राः । स्वस्ति नो मिमीतां । परावतो ये दिधिषन्त आप्य-मित्येतानि' । अन्नसंस्कारवचनं ? चरुशेषाद्ब्राह्मणभोजननिवृत्त्यर्थम् । तेनानुप्रवचने चरुशेषादिति

**स्वस्त्ययनानि च जपित्वान्नं संस्कृत्य, ब्राह्मणान्भोजयित्वा, स्वस्त्य-यनं वाचयीत ॥ १२ ॥ ॥ ३ ॥ हेमन्तशिशिरयोश्चतुर्णामपरप-**

सिद्धम् ॥ १२ ॥ इति द्वितीये तृतीया कण्डिका ॥ ३ ॥ हेमन्तशिशिरावृतू । अपरपक्षाः कृष्ण-पक्षाः । अष्टका इति कर्मनाम । एतदुक्तं भवति । 'मार्गशीर्षादिचतुर्षु मासेषु ये कृष्णपक्षाश्चत्वा-रस्तेषु याश्चतस्रोऽष्टम्यस्तास्वष्टकाः कार्या इति' । ऋतुद्वयमध्ये यदि मलमास आगच्छति तर्हि तस्मिन्मासे न कर्तव्यमित्येवमर्थं चतुर्ग्रहणम् । अपि च बहुवचनस्य त्रिष्वेव चरितार्थत्वाच्छास्त्रान्त-

रदर्शनाच्चोर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका इति तिस्र एवाष्टकाः स्युस्तन्निवृत्त्यर्थं चतुर्ग्रहणम् ॥ १ ॥ एकस्यामेवाष्टम्यामष्टकाः कार्याश्चतसृषु वेति विकल्पः ॥ २ ॥ सप्तम्यामित्यर्थः। पितृशब्देन पितृपितामहप्रपितामहा उच्यन्ते। 'अन्वष्टक्ये पितृभ्यो दद्याद्' इत्यस्यां चोदनायां पिण्डदानं दृष्टम्। अतश्चोदनासामान्यादिहापि परिगृह्यते। ब्राह्मणभोजनं च कार्यमिति वक्ष्यामः। तेन पूर्वेद्युः पितृभ्यः पिण्डान्भोजनं च दद्यादित्यर्थः। पिण्डदाने इतिकर्तव्यतापेक्षास्ति। इह च तस्या

**क्षाणामष्टमीष्वष्टकाः ॥ १ ॥ एकस्यां वा ॥ २ ॥ पूर्वेद्युः पितृभ्यो**

अनाम्नानात्प्रकरणान्तरविहितोऽपि पिण्डपितृयज्ञकल्पः परिगृह्यते। शक्यते चासौ ग्रहीतुम्। शास्त्रसंबन्धकरणात्। अपि चान्वष्टक्ये पिण्डपितृयज्ञकल्पो दृष्टः। स चोदनासामान्यादिहापि भवति। अत्रैव तर्हि पिण्डपितृयज्ञकल्पेनेति कस्मान्नोक्तम्?। स्त्रीभ्यश्चेत्यत्राधिकारार्थं तत्रोक्तम्। स च कल्पोऽत्राग्नौकरणे पाकयज्ञतन्त्रस्य बाधको भवति। एककार्यत्वात्। भोजनं तु पार्वणवद्भवति। भोजनेऽपि तन्त्रस्यापेक्षितत्वात्। तच्च भोजनं पैतृकमेवेति कृत्वा, पार्वणमेव तन्त्रं परिगृ-

१ अस्य शाखान्तरेणान्वयः।

त्वते । तस्य पैतृकत्वात् ॥ ३ ॥ तत्र विशेषमाह—पिण्डपितृयज्ञकल्पो भवतीत्युक्तम् । तत्र च नित्येऽग्नौ चरुश्रपणमस्ति । तस्य स्थाने एतानि त्रीणि नित्येऽग्नौ श्रपयेत् । 'ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः । ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य शृतो वा कृसरो भवेत्' इति ॥ ४ ॥ चतुःशरावपरिमितस्य वा धान्यस्य पेषणं कृत्वा अपूपाञ्श्रपयेत् । अपूपाः पिष्टमयाः । बहुसाधनसाध्यत्वादपूपानां स्त्रीकर्तृकत्वाच्च नित्येऽग्नौ श्रपणं न

**दद्यात् ॥ ३ ॥ ओदनं कृसरं पायसम् ॥ ४ ॥ चतुःशरावस्य वाऽपूपान् ॥ ५ ॥ 'उदीरतामवर उत्परास' इत्यष्टाभिर्हुत्वा, यावतीभिर्वा**

संभवतीति गृहसिद्धानामेवोपादानमिच्छन्ति । वाशब्दो विकल्पार्थः । पूर्वाणि वा त्रीणि इदं वैकं द्रव्यमिति । भोजने तु नायं द्रव्यानियमोऽपि तु होमे एव । 'अष्टका हि चतस्रः स्युः पूर्वाहानि तथैव च । द्रव्ये त्रयत्वाद्वैकत्वान्न यथासंख्यसंभवः ॥ प्रत्यष्टकं हि पूर्वेद्युस्त्रीणि द्रव्याण्यथापि वा । अपूपद्रव्यमेकं वा नान्या व्याख्यानकल्पना' ॥ ५ ॥ यावतीभिर्वाऽधिकाभिरेवंजातिय-

काभिः पितृलिङ्गकाभिः कामयीत कामयेत तावतीभिर्जुहुयात् । एतदुक्तं भवति । पिण्डपितृयज्ञविधानेनेध्माधानान्तं कुर्यात् । चरुश्रपणे विशेष उक्तः । ततो ब्राह्मणपच्छौचाद्याच्छादनप्रदानपर्यन्तं पार्वणवत्कृत्वा, ओदनादिभ्यस्त्रिभ्योऽन्नमुद्धृत्य, घृताक्तं कृत्वानुज्ञाप्य, अग्नौ करणमन्त्रयोः स्थाने 'उदीरतामवर उत्परास' इत्यष्टाभिश्चतुर्दशभिर्वा हुत्वा, मेक्षणमनुप्रहृत्य, ब्राह्मणेभ्योऽन्नदानादिशेषनिवेदनान्तं पार्वणवत्कृत्वा, भुक्तवत्सु पिण्डपितृयज्ञवन्निनयनादिपात्रोत्सर्गान्तं कृत्वा,

**कामयीत ॥ ६ ॥ अथ श्वोभूतेऽष्टकाः पशुना स्थालीपाकेन च**

ततः श्राद्धशेषं समापयेदिति ॥ ६ ॥ अथेत्यानन्तर्यार्थः । श्वोभूतेऽष्टम्यामित्यर्थः । या अष्टकाः कार्या इत्युक्तास्ताः श्वोभूते पशुना स्थालीपाकेन च कार्या इत्यर्थः । अथाष्टका इत्येतावत्युच्यमाने अथशब्दसंबन्धात्पूर्वेद्युश्चाष्टकाः कार्या इत्याशङ्का स्यात् । तस्माच्छ्वोभूतग्रहणम् । पश्वङ्गभूतस्य स्थालीपाकस्याविधेयत्वात्स्थालीपाकान्तरमित्यवगम्यते । चशब्दश्चायं वाशब्दस्य स्थाने द्रष्टव्यः । तेन पशुना वा स्थालीपाकेन वेत्यर्थः । शास्त्रान्तरे च स्पष्टं वचनमस्ति 'पशोरभावे स्थालीपाकः

---

१ शब्लोपः सौत्र. ।

प्रवर्तते' इति ॥७॥ अपिशब्दो विकल्पार्थः । एतदुक्तं भवति । पशुः कार्यस्तस्यासंभवे स्थालीपाकस्तस्याप्यसंभवेऽनडुहो यवसं प्रयच्छेदिति । शकटवहनसमर्थो बलीवर्दोऽनड्वान् ॥ ८ ॥ त्रयस्याप्यसंभवेऽग्निना कक्षं दहेत् ॥ ९ ॥ यवसदाने कक्षदहने चैवं मनसा ध्यायेदित्यर्थः ॥ १० ॥ इदमस्य प्रयोजनम् । चत्वारः पक्षा उक्तास्तत्र पूर्वालाभे उत्तरोत्तरः प्रवर्तत इति । एवमप्यष्टकाः

**॥ ७ ॥ अप्यनडुहो यवसमाहरेत् ॥ ८ ॥ अग्निना वा कक्षमुपोषेत्[2][3] ॥ ९ ॥ एषा मेऽष्टकेति ॥ १० ॥ न त्वेवानष्टकः स्यात् ॥ ११ ॥ तां हैके वैश्वदेवीं ब्रुवत, आग्नेयमेके, सौर्यमेके, प्राजापत्यामेके, रात्रि-**

कार्या : । न त्वेवानष्टकः स्यादित्यर्थः । अथवा । शास्त्रान्तरे यानि पक्षान्तराण्युक्तानि 'अपि वा अनूचानेभ्य उदकुम्भमाहरेत्' । 'अपि वा श्राद्धमन्त्रानधीयीतेति' । तथा वा कुर्यात् । नत्वेवानष्टकः स्यादित्यर्थ : ॥ ११ ॥ एतेऽष्टौ देवताविकल्पा : । तत्र यदा आग्नेय्यष्टका क्रियते । तदा पशुस्थालीपाकावदानानि त्रीण्यपि 'अग्नये स्वाहेति' जुहुयात् । केवलस्थालीपाकमप्यनेनैव जुहुयात् ।

---

१ गवादेर्भक्ष्यं तृणम् । २ शुष्कं तृणम् । ३ उषदाहे । तस्माल्लिङि रूपम् ।

एवमितरेष्वपि ज्ञेयम् । तत्रानाम्नानां पक्षाणामयुक्तत्वज्ञापनार्थमाद्ये हशब्दं पठितवान् । मन्त्रास्ताव-दष्टकार्थत्वेन गृह्यस्मृतिपारम्पर्येण स्मर्यन्ते । स्मृतिश्च प्रमाणम् । एवमष्टकार्थत्वेन प्रमाणावगतेषु मन्त्रेषु तान्परित्यज्याग्न्यादीनां नामधेयेन होम इत्येतदुक्तं वक्तुमयुक्तमिति हृदि कृत्वा हशब्दं पठितवान् । तस्मात्सर्वदा मन्त्रैरेव होमः कार्यः । न कदाचिदपि नामधेयेनेति सिद्धम् । एतमेव पक्षमुत्तरत्रापि समर्थयते । वैश्वदेवीं ब्रुवत इति बहुदेवत्यां ब्रुवत इति । अयमर्थः । या या मन्त्रेषु

**देवतामेके, नक्षत्रदेवतामेके, ऋतुदेवतामेके, पितृदेवतामेके, पशुदे-**

लिङ्गिनी सा सा सर्वात्र देवता भवति । नैवाग्न्यादय एकैकैव देवता भवतीत्यर्थः । बहुदेवत्यो हि वैश्वदेवशब्दः श्रूयते । 'यथा प्रशुक्रैतु देवी मनीषेति वैश्वदेवम्' इति । उक्तं च नैरुक्तैः । 'यत्त्व किंचिद्बहुदेवत्यं तद्वैश्वदेवानां स्थाने युज्यत' इति । प्रकारान्तरेणास्माभिर्भाष्यकारमतमेवानु-सृतमिति निरवद्यम् । अपि चैवं व्याख्या । आग्नेयीमेके । तेषामयमभिप्रायः । 'अष्टकार्थत्वेन मन्त्राणां स्मरणात्सर्वदा मन्त्रैरेव होमः कार्यस्तथाप्याग्नेयी भवति । अग्निरेव सर्वेषु मन्त्रेषूद्देश्यो

1 उक्त वचन मात्रे त्त्तः ।

भवतीत्यर्थः। यानि तेषु देवतान्तरवाचीनि पदानि सन्ति तानि कथंचिद्गौण्या लक्षणया वा योगेन वाग्निवाचीनि भवन्ति। यथा प्रयाजानामाग्नेयत्वे समिदादिशब्दास्तस्यैव कथंचिद्वाचकाः। एवं मन्त्रा अपीति'। एवमुत्तरेष्वपि पक्षेषु योज्यम्। एवं देवताविप्रतिपत्तौ सत्यां हशब्दं प्रयुक्तवान्[1]। बहुदेवत्वे त्वयमेव पक्षो युक्तः। लक्षणाद्याश्रयणे कारणाभावादिति ज्ञापयितुम्। प्रयाजेषु

**वतामेके ॥ १२ ॥ पशुकल्पेन पशुं संज्ञप्य, प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य, जुहुयाद्। 'वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहिताः पराके मेदसः कुल्या उपैनांत्स्रवन्तु सत्या एता आशिषः**

तु कारणं निरुक्तादिज्ञेयम् ॥ १२ ॥ पशुकल्पेनेतिवचनं ? प्रोक्षणप्रतिषेधः पाशुकस्यैव प्रोक्षणस्य भवति न पश्वङ्गभूतस्थालीपाकप्रोक्षणस्येत्येवमर्थम्। संज्ञप्येत्यनुवादः। उत्खिद्येतिवचनम् ? उत्खिद्य सर्वदाऽनयैव वपां जुहुयादित्येवमर्थम्। तेनाग्न्यादिनामधेयेन होम इत्याद्याः पक्षा निरस्ता भवन्ति

---

१ अस्य हशब्दं प्रयुक्तवानिति पूर्वतनेन संबन्धः।

१८ ॥ सन्तु सर्वाः स्वाहेति' ॥ १३ ॥ अथावदानानां स्थालीपाकस्य च 'अग्ने नय सुपथा राये अस्मानिति' हुत्वा । 'ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवा अभया शरन्नः । संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा' । 'शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु सर्वतः स्वाहा' । 'आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापम् । भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माऽधिगुप्तः स्वाराक्षराणि स्वाहा' । 'विश्व आदित्या वसवश्च देवा

पाकस्यावदानानां च स्थालीपाकान्तरस्य च एते सप्त होममन्त्रा भवन्तीति॥ १४ ॥ अष्टमीग्रहणं सर्वदा त्रिष्वपीयमाहुतिरष्टमी भवतीत्येवमर्थम्। तेन मन्त्रैरेव होमो न कदाचिन्नामधेयेनेति सिद्धम्। अपिच। यदा पश्वङ्गभूतस्थालीपाकः पृथग् हूयते तदा स्विष्टकृदपि पृथक्कार्य इत्येतत्प्रदर्शितं भवति। सर्वत्र च पृथग्घोमे स्विष्टकृदपि पृथक्कार्यः। पृथग्घोमे हि अवदानानां सप्त स्थालीपाकस्य च सप्त। ततः

रुद्रो गोप्तारो मरुतः सदन्तु। ऊर्जं प्रजाममृतं पिबमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा'। 'प्रजापते न त्वदेतान्यन्यः' ॥ १४ ॥

सौविष्टकृत्यष्टमी ॥ १५ ॥ ब्राह्मणान्भोजयेदित्युक्तम् ॥ १६ ॥

सौविष्टकृती पञ्चदशी[1] स्यात्। सहपक्षेत्त्वष्टमी भवति। एवं च पृथग्घोमनिवृत्त्यर्थमष्टमीग्रहणं वेदितव्यम् ॥१५॥ ब्राह्मणान्भोजयित्वा, स्वस्त्ययनं वाचयीतेति यदुक्तं तदिहापि कार्यमित्यर्थः। एतदुक्तं भवति। 'होमं समाप्य, ब्राह्मणपच्छौचाद्याच्छादनान्तं कृत्वा, भोजनार्थादन्नादुद्धृत्य, घृताक्तं कृत्वा, पाणौ होमं

---

१ पूरणेर्थे तस्य पूरणे डट् इति डट् तस्य टिड्ढाणेति ङीप्। पञ्चदशानां पूरणी इत्यर्थः।

कृत्वा, भुक्तवत्स्वनाचान्तेषु पिण्डान्दत्वा, स्वस्त्ययनं वाचयित्वा, श्राद्धशेषं समापयेदिति'। अथवा। ब्राह्मणान्भोजयेदिदमनन्तरे कर्मणीत्युक्तम्। यच्चोक्तं पूर्वेद्युः कर्म तत्र च भोजयेदित्युक्तं द्रष्टव्यमित्यर्थः। इतिशब्दोऽन्नभोजनपरामर्शी। इदमष्टम्यां भोजनं श्राद्धमित्युपदेशः शास्त्रान्तरे च दृश्यते। तस्माच्छ्राद्धमिति सिद्धम् ॥ १६ ॥ इति द्वितीये चतुर्थी कण्डिका ॥ ४ ॥ अपरस्मिन्नहनि नवम्यामन्वष्टक्यं नाम कर्म कार्यमित्यर्थः ॥ १ ॥ योऽष्टम्यां पशुः कृतस्तस्यैव मांसं

**॥ ५ ॥ अपरेद्युरन्वष्टक्यम् ॥ १ ॥ तस्यैव मांसस्य प्रकल्प्य, दक्षिणाप्रवणेऽग्निमुपसमाधाय, परिश्रित्यो,-त्तरतः परिश्रितस्य द्वारं कृत्वा,**

ब्राह्मणभोजनार्थं प्रकल्प्य संस्कृत्येत्यर्थः। भोजनार्थत्वं शास्त्रान्तरादवगतम्। दक्षिणाप्रवण इति प्राक्प्रवणनिवृत्त्यर्थम्। उपसमाधायेति व्याख्यातम्। अग्नितिरस्करण्यादिभिः परिश्रित्योत्तरतो द्वारं करोति। पुनः परिश्रितस्येतिवचनं? परिश्रयणस्यानित्यत्वज्ञापनार्थम्। अत्रापि पिण्डपितृयज्ञकल्पोऽस्ति। तत्र विशेषमाह। उभौ परिस्तीर्येत्यस्मिन्काले समूलं बर्हिर्गृहीत्वा, अपसलैरप्रदक्षिणमविधून्वन्नकम्पयंस्त्रिः परिस्तृणीयात्। आसादयेदभिधार्य स्थालीपाकमित्य-

स्मिन्काले एतानि पञ्चासादयेत्। एषां नित्ये श्रपणं कार्यं। गृह्यकर्माणि सर्वत्र चरूणां नित्येऽग्नावेव श्रपणं कार्यं न तु लौकिके। अन्यत्र प्रतिषेधात्। श्रपयित्वैककपालंचेत्यत्र श्रपयित्वेतिवचनस्य चरुवर्जितानां धानादीनां नित्याग्निश्रपणनिषेधपरत्वेनापि संभवात्। 'सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः। मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तवः' ॥ उल्लेखनकाले द्वे लेखे लिखेत्। उभे च सकृदाच्छिन्नैरवस्तृणीयात् ॥ २ ॥ इदं कर्म पिण्डपितृयज्ञविधानेन कार्यमित्यर्थः।

**समूलं बर्हिस्त्रिरपसलैरविधून्वन्परिस्तीर्य, हवींष्यासादयेदोदनं कृसरं पायसं दधिमन्थान्मधुमन्थांश्च ॥ २ ॥ पिण्डपितृयज्ञे कल्पेन ॥ ३ ॥ हुत्वा, मधुमन्थवर्जं पितृभ्यो दद्यात् ॥ ४ ॥ स्त्रीभ्यश्च सुरा चाचाम-**

'अग्निप्रणयनं पात्रं सोमायेत्यादिमन्त्रकौ। उपस्थानं प्रवहणं निनयाद्यातिदिश्यते' ॥ ३ ॥ इध्माधानान्तं कृत्वा, ब्राह्मणपच्छौचाद्याच्छादनान्तं कृत्वा, ओदनादिभ्यश्चतुर्भ्योऽन्नमुद्धृत्य, मधुमन्थवर्जं घृताक्तमनुज्ञाप्या,—ग्नावाहुतिद्वयं हुत्वा, मेक्षणमनुप्रहृत्य, शेषनिवेदनान्तं कृत्वा, पितृभ्यः पिण्डान्निपृणीयादित्यर्थः। पिण्डदाने मधुमन्था अपि ग्राह्याः ॥ ४ ॥ मात्रे पितामह्यै प्रपितामह्यै च

पिण्डान्निपृणीयात् । तत्र चौदनादिपञ्चभ्यः सुरा चाचामं चाधिकं भवतीत्यर्थः । पित्रादित्रयाणामेव पिण्डपितृयज्ञस्य दृष्टत्वात्तद्विधानं स्त्रीणां न प्राप्नोतीति कृत्वा, पिण्डपितृयज्ञकल्पेनेत्येतदत्रानुवर्तनीयम् । 'ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः । गौडी माध्वी च पैष्टी च सुरा तु त्रिविधा स्मृता' ॥ अधिकवचनं ? पश्चानामबाधनार्थम् ॥ ५ ॥ द्वयोर्लेखयोरुभयेषां पिण्डनिपरण-

मित्यधिकम् ॥ ५ ॥ कर्षूष्वेके द्वयोः षट्सु वा ॥ ६ ॥ पूर्वासु पितृभ्यो

मुक्तम् । कर्ष्वो नामावटाः । कर्ष्वौ च कर्ष्वश्च कर्ष्वः । तास्वेके इच्छन्ति । यदा द्वे कर्ष्वौ तदा आयते भवतः । यदा षट् तदा परिमण्डलाः । द्वयोरितिवचनात्कर्ष्वावित्येकशेषो लब्धः ॥ ६ ॥ पूर्वा च लेखा पूर्वा च कर्षूः पूर्वाश्च कर्ष्वः । ताः पूर्वाः । एतदुक्तं भवति । 'द्विलेखाद्विकर्षूषट्कर्षूपक्षेषु पूर्वस्यां लेखायां पूर्वस्यां कर्ष्वां पूर्वासु कर्षूषु पितृभ्यो निपृणीयादिति' ॥ ७ ॥

१ सरूपाणामित्येकशेषः ।

पूर्ववदेकशेषः। अत्र किंचिद्वक्तव्यमस्ति। द्वे लेखे इत्युक्तम्। पितृषु च पृथक्पृथङ् नवावरा अयुजो वा ब्राह्मणा भवन्ति। प्रकृतौ समर्थनिगमेषु यजुर्निगदेषु विकृतावूह उक्तः। तेन स्त्रीपात्रेषु तिलावपने तिलोसीति मन्त्रे पितृशब्दस्योहो न कार्यः। प्रकृतावसमर्थत्वात्। पार्वणं हि तस्य प्रकृतिः। तत्र च पित्रादयस्त्रयोऽभिधातुमभिप्रेताः। न च पितृशब्दस्त्रीन्वक्तुं समर्थः। अथोच्यते। 'तत्रापि पितृपात्रमेवास्य प्रकृतिः। उत्तरे विकृती। पितृपात्रे च पितृशब्दः समर्थः। विभ

दद्यात् ॥ ७ ॥ अपरासु स्त्रीभ्यः ॥ ८ ॥

क्तिमात्रं त्वसमर्थम्। तेनोत्तरयोः पात्रयोः पितृशब्दस्य स्थाने पितामहप्रपितामहशब्दौ बहुवचनान्तौ वक्तव्याविति'। एतदयुक्तम्। समानप्रकरणे प्रकृतिविकृतिभावो नास्तीति ज्ञापितमेतद्भाष्यकारेण 'राध्यापदेनेति तु प्रणयेत्' इत्यत्र। तेन त्रिष्वपि पितृशब्द एव प्रयोज्य इति सिद्धम्। यथा तत्र कथंचिद्गौण्या लक्षणया वान्यथा वा त्रीनाह तथैवात्रापि मातृरभिदध्यात्। तेनोहो न कार्यः। अथ तत्रोत्तरयोः पात्रयोरूहोऽभ्युपगम्यते। तर्हि 'शुन्धन्तां पितरः' इत्यत्र त्रयाणां वचनमपार्थकं

---

१ एकपर्यायः समानशब्दः।

स्यात्। तस्मात्पितृशब्द एव सर्वदा प्रयोज्य इति सिद्धम्। 'शुन्धन्तां पितरः' इत्यत्र तु विभक्तिमात्रमसमर्थम्। प्रकृतिस्तु समर्थैव। तेन तस्या ऊहः कार्यः। 'शुन्धतां मातरः शुन्धतां पितामह्यः शुन्धन्तां प्रपितामह्य इत्येतत्तेऽसौ ये च त्वा' इत्यत्र यदि द्वे मातरौ स्यातां पितामह्यौ प्रपितामह्यौ वा तदा असावित्यत्र द्वयोरपि नामनी ब्रूयात्। यदा बह्व्यस्तदा बह्वीनामपि नामानि ब्रूयात्। तेशब्दस्य स्थाने द्वे मातरौ चेद्वामित्यूहः। बह्व्यश्चेद्व इत्यूहः। येशब्दस्य केचिदूहेन स्त्रीलिङ्गं कुर्वन्ति तद्विचार्यम्। एतत्ते तत ये च त्वामत्रान्वित्यस्यायमर्थः। हे तत एतत्पिण्डरूपमन्नं तुभ्यं ये चान्येऽत्र त्वामनु यन्ति तेभ्यश्चेत्यर्थः। अनुयायिनश्च यदि स्त्रिय एव स्युः। तदोहो युज्यते। यदि पुमांस एव पुमांसश्च स्त्रियश्च वा तदा न युज्यते। 'पुमान्स्त्रिया' इति पुंस एकशेषात्। आचार्येणाप्युक्तम्। 'पुंवन्मिथुने' इति (श्रौ०)। 'अनुयायिनश्च पुमांसश्च स्त्रियश्चेति प्रतिभाति' इति बौधायनवचनात्। इत्थं हि तेन पिण्डदाने पठितो मन्त्रः। 'एतत्ते ततासौ ये ते मातामहा ये त आचार्या ये ते सखायो ये ते गुरवो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्चैतत्ताभ्यश्च स्वधा नम' इति। तेनोहो न कार्यः। आपस्तम्बेन तु 'एतत्ते मातरसौ

याश्च त्वामत्रानु' इति मन्त्रः पठित इति कृत्वा केचिदूहं कुर्वन्ति। तच्चिन्त्यम्। स्त्रीद्वित्वे युवामत्रानु बहुत्वे युष्मानत्रान्विति। अत्र पितरः अमीमदन्त पितर इत्यत्र च पितृशब्दस्योहो न कार्यः। प्रकृतावसमर्थत्वात्। पिण्डपितृयज्ञो हि तयोः प्रकृतिः। तत्र च त्रयोऽभिधातुमभिप्रेताः। तस्मादनूहः। उभयपिण्डानां च सकृदेवानुमन्त्रणं कार्यं। शक्यत्वात्। न पृथक्। असावभ्यङ्क्ष्वासाङ्क्ष्वेत्यत्र च स्त्रीद्वित्वे बहुत्वे चासौशब्दस्योहः। अभ्यञ्जाथाम्, अभ्यङ्ग्ध्वम्, अञ्जाथाम्, अङ्ग्ध्वमिति च यथार्थम्। स्त्रीणां पृथग्वासो दद्यात्। असंसर्गित्वात्। एतद्वः पितर इत्यत्रोहो न कर्तव्यः। असमर्थत्वादेव। मन्त्रावृत्तिरस्त्येव। पितृपिण्डान्स्त्रीपिण्डांश्च सकृदेवोपतिष्ठते शक्यत्वात्। न पृथक्। अनूहश्च पूर्ववत्। 'मनोन्वाहुवामह' इत्यादेश्चानूहः पूर्ववत्। तस्मादृचं नोहेदिति प्रतिषेधाच्च। प्रवाहणं चोभयपिण्डानां युगपदेव। शक्यत्वात्। अनूहश्च पूर्ववत्। ऋक्त्वाच्च। 'वीरं मे दत्त पितरः' इति पितॄणां मध्यमपिण्डमादायानेनैव स्त्रीणामपि मध्यममाददीत। अनूहश्च पूर्ववत्। आधत्त पितर इति पिण्डद्वयं प्राशयेत्। अनूहश्च पूर्ववत्। ऋक्त्वाच्च। यत्र त्वृचि ऊहमिच्छति तत्र विदधाति 'आत्मनि मन्त्रान्संनमयेदिति। इति नम्रे' इति च।

एवं निनयनवर्जं पितृशब्दस्योहो नास्तीत्युक्तम् । तत्र यद्युच्यते । 'पितृशब्दो बहुवचनान्तः पित्रादींस्त्रीनेव वक्ति । साहचर्यात् । यथा मित्राविति वरुणाविति चोक्ते मित्रावरुणौ प्रतीयेते । साहचर्यात् । तद्वदत्रापि । मातॄस्तु वक्तुं न शक्नोति । तत्साहचर्यस्य क्वचिदप्यप्रतीतत्वात् । तस्मादूहः कार्य इति' । तत्र ब्रूमः । असमर्थत्वादूहो नास्तीत्युक्तमेव । केवलमभिधानं संपादनीयम् । सपिण्डीकरणेन हि प्रेतत्वं निवर्त्य पितृत्वं नाम संस्कारविशेषः शास्त्रगम्यः प्राप्यते । तच्च

## एतेन माघ्यावर्षं प्रोष्ठपद्या अपरपक्षे ॥ ९ ॥

मातृष्वप्यविशिष्टमिति मातॄरपि अभिधत्ते पितृशब्दः । एवं च कृत्वा एकोद्दिष्टे शास्त्रान्तरदृष्टः पितृशब्दप्रतिषेधोऽप्युपपन्नः । ऊहवादिनोऽतिप्रसङ्गश्चास्ति । मात्रादयस्त्रयोऽपि शब्दाः प्रसज्यन्ते । तेनाप्येवं नेष्यते । पुनरपि बहुविद्भिर्विचार्य कार्यमित्यलमतिविस्तरेण ॥ ८ ॥ एतेनेति पूर्वेद्युःप्रभृति कृत्स्नकर्मातिदेशः । एतदुक्तं भवति । प्रौष्ठपद्याः समीपे योऽपरपक्षस्तत्राष्टम्यां माघ्यावर्षं नाम कर्म कर्तव्यम् । तच्चैतेनाष्टकाकर्मणा व्याख्यातमिति । अत्रापि त्रिष्वहःसु कार्यमित्यर्थः ॥ ९ ॥

१ अस्य पूर्वेण उच्यतेइत्यनेन सबन्धः ।

अपरपक्ष इत्यत्रापि संबध्यते[1] । मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च । तच्च पूर्वपक्षनिवृत्त्यर्थम् । एवमित्यकृत्स्नोपदेशार्थम् । तेनान्वष्टक्यमिहातिदिश्यते । अनन्तरत्वात्[2] । पितृभ्य इति मातृनिवृत्त्यर्थम् । प्रतिष्ठापयेत् । कुर्यादित्यर्थः । एतदुक्तं भवति । 'प्रतिमासमपरपक्षे अयुग्मासु तिथिषु अन्वष्टक्यवत्पितृभ्य एव श्राद्धं कुर्यादिति' । समानकालत्वात्समानकार्यत्वाच्च पार्वणस्यास्य विकल्पः । एवं वा सूत्रच्छेदः । 'मासि मासि चैवं पितृभ्यः' प्रतिमासमपरपक्षेऽन्वष्टक्यवत्पितृभ्य

**मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत् ॥ १० ॥ नवावरान्भोजयेत् ॥ ११ ॥ अयुजो वा ॥ १२ ॥ युग्मान्वृद्धिपूर्तेषु**

एवं कुर्यादित्यर्थः । 'अयुक्षु प्रतिष्ठापयेत्' । श्राद्धकर्मणि सर्वमयुग्मासु संख्यासु प्रतिष्ठापयेत् । गन्धमाल्यादि सकृद्देयं त्रिः पञ्चकृत्वो वेत्यादि ॥ १० ॥ नवमसङ्गः प्रकृतं निवर्तयति । तेनान्वष्टक्ये नवावरान्भोजयेन्नियमेन ॥ ११ ॥ अशक्तौ प्रागप्ययुजो भोजयेत्सप्त पञ्च त्रीनेकं वा । सप्तपक्षे एकस्यैक इतरयोस्त्रयस्त्रयः । पञ्चपक्षे एकस्य त्रय इतरयोरेकैकः । इदं चान्वष्टक्य एव ॥ १२ ॥

१ देहलीदीपकन्यायेनेतिभावः । २ अनन्तरातिदेशेनैवमित्यस्याकाङ्क्षाविरहे ततःपरतरस्यातिदेशे प्रमाणाभावादितिभावः ।

'पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चाग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषयः' इत्येके। अन्ये 'षोडश संस्काराः श्रवणाकर्मादयश्च श्रौतानि च' इत्याहुः। 'अनिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं कर्म नारभेत्' इति स्मृतेः। वापीकूपतडागारामाद्युद्यापनादिपूर्तश्राद्धस्य विषयः। उभयत्र युग्मान्भोजयेत् ॥ १३ ॥ पूर्वेद्युरष्टम्यां काम्य एकोद्दिष्ट इति चतुर्ष्वयं विधिः। मासि मासि चेत्यत्रान्वष्टक्यवत्। पार्वणे तु वक्ष्यति। एवमष्टविधेष्वपि श्राद्धेषु ब्राह्मणपरिमाण-

॥ १३ ॥ अयुग्मानितरेषु ॥ १४ ॥ प्रदक्षिणमुपचारो यवैस्तिलार्थः ॥ १५ ॥ ॥ ५ ॥ रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभि-

मुक्तम् ॥ १४ ॥ वृद्धिपूर्तेष्विति शेषः। अत्र प्रदक्षिणमिति वचनादितरश्राद्धेषु प्रसव्यमुपचार इति गम्यते। तिलकार्ये यवान्कुर्यात्। यज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदम् ॥ १५ ॥ इति द्वितीये पञ्चमी कण्डिका ॥ ५ ॥ इतिकारोऽध्याहार्यः। त्रयाणां वर्णानामिदं समानं भवति। रथो नाम बहुयुगो मण्डलाकृतिः। यदा रथमारोहति गमनार्थं ततः पूर्वपक्षे चक्रे पाणिभ्यां नाना अभिमृशेन्मन्त्रेण। नानाग्रहणं? युगपदेव दक्षिणेन दक्षिणं सव्येन सव्यमभिमृशेन्न

पर्यायेणेसेवमर्थम् । दूरदेशगमने त्वाद्य एवारोहणेऽयं विधिर्नत्वर्थमात्मेष्वारोहणेषु ॥ १ ॥ अभिमृशेदिति वर्तते । पाणिभ्यां युगपच्चक्रनाभी अभिमृशेन्मन्त्रेण ॥ २ ॥ दक्षिणः पादः पूर्वो ययोस्तौ तथोक्तौ । एवंभूताभ्यामारोहेन्मन्त्रेण ॥ ३ ॥ रश्मयः प्रग्रहास्तान्स्पृशेत् । अथ यद्यश्वा अरश्मिकाः

मृशेत् । 'अहं ते पूर्वौ पादावालभे बृहद्रथन्तरे ते चक्रे' ॥ १ ॥ 'वामदेव्यमक्ष' इत्यक्षाधिष्ठाने ॥ २ ॥ दक्षिणपूर्वाभ्यामारोहेत् । 'वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येनेति' ॥ ३ ॥ रश्मीन्संमृशेदरश्मिकान्वा दण्डेन । 'ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वस्तेजसा संगृह्णामीति' ॥ ४ ॥ अभिप्रवर्तमानेषु जपेत् । 'सहस्रसनिं

स्युस्तानेव दण्डेन स्पृशेत् । मन्त्रस्तूभयत्र समान एव । बहुवचनाद्बहुयुगो रथोऽत्राभिप्रेत इति गम्यते ॥ ४ ॥ चशब्दोऽध्याहार्यः । सारथिना नोदिता अश्वा यदेष्टां दिशमभिगच्छन्ति तदा

---

१ किरणप्रग्रहौ रश्मी ।

'सहस्रसानि वनस्पत' इत्यृचं जपेत्। एतावद्रथारोहणम् ॥ ५ ॥ अभिमृशेदिति शेषः। अन्यान्यपि शकटप्रभृतीनि वानस्पत्यान्यारोक्ष्यन्नेतया तान्यभिमृशेत्। एतयेत्यस्मिन्नसति अन्यान्यपीत्याद्युत्तरसूत्रस्यैव शेषः स्यात्। तस्माद्योगविभागार्थमेतयेति वचनम् ॥ ६ ॥ यद्यदङ्गमस्यामृचि दृष्टं तत्तदभिमृशेत्। गावौ। अक्षं ईषां युगं चेत्यर्थः इदं। चाभिमर्शनं शकटादिषु। न रथे।

वाजमभिवर्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया' इति ॥ ५ ॥ एतयाऽन्यान्यपि वानस्पत्यानि ॥ ६ ॥ 'स्थिरौ गावौ भवतां वीळु रक्ष' इति रथाङ्गमभिमृशेत् ॥ ७ ॥ 'सुत्रामाणं पृथिवीं द्याम-नेहसमिति' नावम् ॥ ८ ॥ नवरथेन यशस्विनं वृक्षं ह्रदं वा विदा-

गावाविति लिङ्गात्। न हि रथस्य गोयुक्तत्वं द्विगोयुक्तत्वं च संभवति। तस्य बहुयुगत्वादश्वयुक्तत्वाच्च ॥ ७ ॥ आरोहेदिति शेषः। आरुहेमेति मन्त्रलिङ्गात्। यदा यदा च नावमारोहत्युदकतरणार्थं। तदा तदा एतयारोहेत् ॥ ८ ॥ नवरथेन यदा गच्छति तदायं विशेषः। वानस्पत्य-

जपान्तं कृत्वेदमपि कुर्यात् । नवोऽनुपभुक्तः । यशस्वी यशसा युक्तः । अविदासी अशोष्यः । आम्रजम्बादिशाखा आहरेत् ॥ ९ ॥ अन्यद्वा कुटुम्बोपयोगि द्रव्यमाहरेत् । आहृत्य ततः ॥ १० ॥ गृहसमीपमागच्छेदित्यर्थः॥ ११ ॥जपित्वा नवरथादवरोहेत् ॥ १२ ॥ एतत्सूक्तं गृहं प्रतिपद्यमानो

सिनं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥ अन्यद्वा कौटुम्बम् ॥१०॥ संसदमुपयायात् ॥ ११ ॥ 'अस्माकमुत्तमं कृधी'—त्यादित्यमीक्षमाणो जपित्वावरोहेत् ॥ १२ ॥ 'ऋषभं मा समानाना-मि'—त्यभिक्रामन् ॥ १३ ॥ 'वयमद्येन्द्रस्य प्रेष्ठा' इत्यस्तं यात्या-दित्ये ॥ १४ ॥ 'तद्वो दिवो दुहितरो विभातीरिति' व्युष्टायाम् ॥१५॥

जपेत् ॥ १३ ॥ जपेदिति शेषः । तस्मिन्नेवाहनि ॥ १४ ॥ जपेत् । त्रीण्येतानि प्रतीकानि मन्त्र-संज्ञकानि । तस्मादुपांशु स्युः । एतावान्नवरथे विशेषः ॥ १५ ॥ इति द्वितीये षष्ठी कण्डिका

॥ ६ ॥ उच्यत इति शेषः । उक्तोऽर्थः । अतःशब्दो हेत्वर्थः । यस्माद्गृहनिमित्ते समृद्धिवृद्धी भवतस्तस्माद्वास्तुपरीक्षोच्यत इति । यद्येवं काम्यकर्माण्यनर्थकानि । न । एतदेवं न्यायविदः परिहरन्ति 'तच्चैव हि कारणं शब्दश्चेति' ॥ १ ॥ एवंलक्षणयुक्ते देशे वास्तु कार्यमित्याह—भूमशब्दो भूमिवाचकः । यथा । यवं न वृष्टिर्व्युनत्ति भूमेति । यत्र विवादो नास्ति तदविवादिष्णु ॥ २ ॥

॥ ६ ॥ अथातो वास्तुपरिक्षा ॥ १ ॥ अनूषरमविवादिष्णु भूम ॥ २ ॥ ओषधिवनस्पतिवत् ॥ ३ ॥ यस्मिन्कुशवीरिणं प्रभूतम् ॥ ४ ॥ कण्टकिक्षीरिणस्तु समूलान्परिखायोद्वासयेदपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि ॥ ५ ॥ यत्र सर्वत आपो मध्यं समेत्य प्रद-

मतुपो वकारश्छान्दसः[1] । एवंविधं यद्भूम तत्र वास्तु कार्यम् ॥ ३ ॥ तत्र कार्यम् ॥ ४ ॥ समूलान्परिखायोद्वासयेदिति वर्तते । अपामार्गादीनां पुंलिङ्गत्वादेतानिति वक्तव्ये एतानीति नपुंसकवचनमन्यान्यप्येवंप्रकाराणि वास्तुविद्यायां निषिद्धान्युद्वास्यानीत्येवमर्थम् ॥ ५ ॥ यस्मिन्देशे आपः

१ छन्दोवत्सूत्राणि इतिन्यायात् । क्वचित्पुस्तके मकार एवोपलभ्यते ।

सर्वाभ्यो दिग्भ्य आगत्य, मध्यं प्राप्य, ततः प्रदक्षिणं शयनीयं परीत्य, प्राङ्मुख्यो गच्छेयुः । अप्र-
वदत्यः । नलोपः[1] छान्दसः । अशब्दवत्य इत्यर्थः । एतल्लक्षणयुक्तं वास्तु विद्यावृत्तधनधान्यादिभिः
सर्वैः समृद्धं भवति । एवं ब्रुवता एतत्प्रदर्शितं भवति । सर्वत उच्छ्रितां मध्यतो निम्नामीषच्च
प्राक्प्रवणां भूमिं कृत्वा गृहं कुर्यात् । तत्र प्राच्यां दिशि गृहिणः शयनीयं गृहं कुर्यात् । शयनी

क्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धम् ॥ ६ ॥
समवस्रवे भक्तशरणं[2] कारयेत् ॥ ७ ॥ बह्वन्नं भवति ॥ ८ ॥ दक्षिणा-

यगृहस्योत्तरतोऽपां शनैः प्रदक्षिणं निर्गमनार्थं स्पन्दनिकां कुर्यादिति ॥ ६ ॥ येन पथा आपो निर्ग
च्छन्ति स देशः समवस्रवः । प्राच्यां दिशीत्यर्थः । तत्र महानसं कारयेच्छयनीयस्योत्तरतः । ननु-
शास्त्रान्तरे प्राग्दक्षिणस्यां दिशि भक्तशरणं दृष्टमतः कथं प्राच्यां दिशीत्याशङ्क्य प्रकृतस्य स्तुति-
माह ॥ ७ ॥ ऋद्धिमद्भवतीत्यर्थः । तस्मादत्रैव कार्यम् ॥ ८ ॥ यत्र गृही स्वैरमास्ते स्वजनैरागन्तु-

---

१ वदधातोर्भौवादिकत्वेन शप्श्यनोरिति नुमि तकारात्पूर्वं नकारेण भवितव्यमित्याशङ्कायामाह । २ शरणगृहरक्षित्रोः ।

भिश्च सह सा सभा। तां दक्षिणाप्रवणे कुर्यादुदीच्यां दिशीत्यर्थः। तत्र कृताऽद्यूता द्यूतवर्जिता भवति। दोषाश्च सन्तीत्याह ॥ ९ ॥ अत्र कृता चेद्युवान एव सन्तः प्रमायुक्ता भवन्ति। अल्पायुषो म्रियन्त इत्यर्थः। कलहप्रियाश्च कितवाश्च भवन्ति। ननु द्यूतवर्जितत्वात्कथं कितवा इति। उच्यते। कितवा इति दम्भिन इत्यर्थः। तस्मात्तत्र न कार्या। शास्त्रान्तरेऽविहितत्वादनूद्य प्रति-

**प्रवणे सभां मापयेत्साऽद्यूता ह भवति ॥ ९ ॥ युवानस्तस्यां कितवाः कलहिनः प्रमायुक्ता भवन्ति ॥ १० ॥ यत्र सर्वत आपः प्रस्यन्देरन्सा स्वस्त्ययन्यद्यूता च ॥ ११ ॥ ॥ ७ ॥ अथैतैर्वास्तु परीक्षेत ॥ १ ॥**

षिद्धवान् ॥ १० ॥ क्व तर्हि कार्येत्याह—यस्मिन्देशे सर्वाभ्यो दिग्भ्य आप आगच्छन्ति। तत्र कार्या सभा। गृहमध्य इत्यर्थः। सा शुभकर्यद्यूता च भवति ॥ ११ ॥ इति द्वितीये सप्तमी कण्डिका ॥ ७ ॥ पूर्वलक्षणासंभवे कथमुत्तरेषां बलीयस्त्वं स्यादित्येवमर्थोऽथशब्दः। अथ विशिष्टान्येतानीति। वास्तुग्रहणं सभाधिकारनिवृत्त्यर्थम् ॥ १ ॥ गर्तो नामावटः। तैरेव तत उद्धृ-

तैरेव ॥ २ ॥ पूरिते गर्तादधिके पांसुराशौ प्रशस्तं वास्तु भवति। तेन समे वृत्तिमद्भवति। तस्मान्न्यूने गर्हितं कुत्सितं भवति। तस्मात्तत्र न कार्यम् ॥ ३ ॥ अस्तमिते तमेव गर्तमद्भिः पूरयित्वा तं राशिं परिवासयेत्। ततो व्युष्टायां निरीक्षेत ॥ ४ ॥ पूर्वेण तुल्यम् ॥ ५ ॥ सिकतोत्तरं सिक-

जानुमात्रं गर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् ॥ २ ॥ अधिके प्रशस्तं समे वार्तं न्यूने गर्हितम् ॥ ३ ॥ अस्तमिते पांसुपूर्णं परिवासयेत् ॥ ४ ॥ सोदके प्रशस्तमार्द्रे वार्तं शुष्के गर्हितम् ॥ ५ ॥ श्वेतं मधुरास्वादं सिकतोत्तरं ब्राह्मणस्य ॥ ६ ॥ लोहितं क्षत्रियस्य ॥ ७ ॥ पीतं वैश्यस्य ॥ ८ ॥ तत्सहस्रसीतं[1] कृत्वा यथादिक्समचतुरस्रं माप-

ताबहुलमित्यर्थः ॥ ६ ॥ मधुरास्वादं सिकतोत्तरमिति वर्तते ॥ ७ ॥ अत्रापि द्वयं वर्तते। श्वेतं लोहितं पीतमिति त्रयो वर्णाः। त्रयाणां वर्णानां विशेषाः। अन्यत्सर्वं समानम् ॥ ८ ॥ एवं परी-

---

१ सीता लाङ्गलपद्धतिः।

क्षितं वास्तु बहुसीतं कुर्यात्। बहुशः सीतया कर्षेदित्यर्थः। ततः सर्वासु दिक्षु समचतुरस्रं स्थण्डिलं कुर्यात्। चतुरस्रं चतुःष्कोणं मापयेत्कुर्यात्। सहस्रशदोऽत्र बहुवाची ॥ ९ ॥ प्रागायत चतुरस्रं वा कुर्यात्। आयतं दीर्घम्। तत्रैवं क्रमः। परिव्याध इति चैतानीत्यन्तां बाह्यवास्तुपरिक्षां कृत्वा तत आन्तरीं परीक्षामथैतैर्वास्तु परीक्षेतेत्यादि आयतं चतुरस्रं वेत्यन्तां कृत्वा यत्र सर्वत्र

येत् ॥ ९ ॥ आयतं चतुरस्रं वा ॥ १० ॥ तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रिः परिव्रजन्प्रोक्षति ॥ ११ ॥ अविच्छिन्नया चोदकधारया। 'आपो हि ष्ठा मयोभुव' इति तृचेन ॥ १२ ॥

आपो मध्यं समेत्येत्यादि विज्ञेयम्। ततो वक्ष्यमाणं प्रोक्षणं कुर्यात् ॥ १० ॥ 'शन्न इन्द्राग्नी' इति सूक्तं शन्तातीयमिति प्रसिद्धम्। तेन सूक्तेन त्रिः परिव्रजन्प्रोक्षति। सर्वत्र मन्त्रान्ते कर्मारम्भः। सिद्धं हि करणं भवति नासिद्धम्। परशुना छिनत्तीति परशुवत्। मन्त्रावृत्तिरुक्ता। 'मन्त्रान्ते व्रजनारम्भः प्राचीमारभ्य पर्येति' इति ॥ ११ ॥ त्रिः प्रदक्षिणं परिव्रजति। अत्रापि

धारावृत्तिस्तृचावृत्तिश्च । व्रजनगुणत्वात् ॥१२॥ यावन्तस्तत्र वंशाः संभवन्ति तत्र द्वयोर्द्वयोर्वंशयोरन्तरेषु कुड्यादिभिः पृथक्कृत्यापवरकादि शरणानि कारयेत् । शरणान्यवान्तरगृहाणि ॥ १३ ॥ सर्वासां स्थूणानां गर्तेषु अवकां शीपालं च अवदध्यात् । एवं कृते नास्याग्निर्दाहुको भवतीति

वंशान्तरेषु शरणानि कारयेत् ॥ १३ ॥ गर्तेष्ववकां शीपालमित्यवधापयेन्नास्याग्निर्दाहुको भवतीति विज्ञायते ॥ १४ ॥ मध्यमस्थूणाया गर्तेऽवधाय प्रागग्रोदगग्रान्कुशानास्तीर्य व्रीहियवमतीरप आसेचयेत् । 'अच्युताय भौमाय स्वाहेति' ॥ १५ ॥ अथैनामुच्छ्रियमाणामनुमन्त्रयेतेहैव तिष्ठ निमिता तिल्विलास्तामिरावतीं मध्ये पोषस्य तिष्ठन्तीम् । आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो

श्रूयते ॥ १४ ॥ अस्या गर्तेऽयं विशेषः । अवकां शीपालं चावधाय, कुशानास्तीर्य, पश्चादासिञ्चेन्मन्त्रेण । अवधायवचनम्? अवकाशीपालयोरवधानप्राप्त्यर्थम् ॥१५॥ मध्यमस्थूणां गर्ते आधीयमा-

नामनुमन्त्रयेत मन्त्राभ्याम् ॥ १६ ॥ इति द्वितीये अष्टमी काण्डिका ॥ ८ ॥ अनुमन्त्रयेतेति वर्तते ॥ १ ॥ अनेन मध्यमस्थूणाया उपर्याधीयमानं वंशमनुमन्त्रयेत । अन्ये तु प्रतिवंशमावृत्तिमिच्छन्ति

जायतां सह । आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति ॥ १६ ॥ ॥ ८ ॥ वंशमाधीयमानम् ॥ १ ॥ 'ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधाना' इति ॥ २ ॥ सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् । 'पृथिव्या अधि संभवेति' ॥ ३ ॥ 'अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनिराम-पबाधतामिति' वा ॥ ४ ॥ अथास्मिन्नप आसेचयेत् । 'एतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु मोदमानः । इरां वहन्तो घृतमुक्षमाणा

॥ २ ॥ चतस्रः शिलाः स्थापयित्वा, तासु दूर्वा निधाय, ततो मणिकं प्रतिष्ठापयेन्मन्त्रेण । मणिको नाम जलधारणार्थो भाण्डविशेषः ॥ ३ ॥ अनया वा प्रतिष्ठापयेत् ॥ ४ ॥ अथ मणिके अपो


॥ ७८ ॥

निषिञ्चति पूरणार्थं मन्त्रेण ॥ ५ ॥ एतद्वास्तु शान्तं करोति ॥ ६ ॥ कथम्? इत्यमिसाह—अप्सु हिरण्यमवधाय ताभिः प्रोक्षति ॥७॥ उक्तार्थे द्वे सूत्रे ॥८॥ श्रपयित्वेति वचनम्? अस्मात्स्थालीपा-

मित्रेण साकं सह संविशन्त्विति' ॥ ५ ॥ अथैनच्छमयति ॥ ६ ॥ व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षति ॥ ७ ॥ अविच्छिन्नया चोदकधारया 'आपो हि ष्ठा मयोभुव' इति तृचेन ॥ ८ ॥ मध्येऽगारस्य स्थालीपाकं श्रपयित्वा 'वास्तोष्पते प्रतिजानीह्यस्मानिति' चतसृभिः प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणान्भोजयित्वा 'शिवं वास्तु शिवं वास्त्विति' वाच-

कात्प्रागस्मिन्गृहे पाकान्तरं न श्रपयितव्यमित्येवमर्थम्। भुक्तवतो ब्राह्मणान् 'शिवं वास्तु शिवं वास्त्विति भवन्तो ब्रुवन्त्विति' वाचयीत। ते च तं 'शिवं वास्तु शिवं वास्त्विति' प्रत्यूचुः। उक्तार्थ-

मन्यत् ॥ ९ ॥ इति द्वितीये नवमी कण्डिका ॥ ९ ॥ यदुक्तं गृहप्रपदनं प्रपद्येत गृहानहं सुमनस इत्यादि तदिदानीमिहापि कार्यमित्यर्थः । अन्ये तु प्राहुः । यदुक्तं मणिकप्रतिष्ठापनादि शिवं वास्तिवत्यन्तं तद्गृहप्रपदनसंज्ञं भवति । किं सिद्धं भवति? मणिकस्थापनात्प्रागेव बीजानि संस्थापयित्वा, तूष्णीं प्रविशेदिति । अपि च शास्त्रान्तरेण संस्कृतं विशीर्णं वा पुराणं गृहं संस्कृत्य, प्रविशतो मणिकप्रतिष्ठापनादि सिध्यति ॥ १ ॥ गृहानिति बहुवचनमाप इतिवत् । बीजवतः प्रपद्येतेयीत ॥ १ ॥

॥ १ ॥ उक्तं गृहप्रपदनम् ॥ १ ॥ बीजवतो गृहान्प्रपद्येत ॥ २ ॥ क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फाल्गुनीभी रोहिण्या वा

सेतावतैव सिद्धे गृहानिति वचनं? यत्र गृहे प्रविशति शास्त्रान्तरसंस्कृतं विशीर्णं वा संस्कृत्य, तत्रापि एवं प्रविशेदिति । मणिकादिबीजवत्प्रपदनान्तं तत्रापि कुर्यादित्यर्थः । तेन पूर्वव्याख्यापि साध्वी ॥ २ ॥ फाल्गुनीभिरित्यत्रापि उत्तराभिरित्येवं संबध्यते । तेन त्रीणि नक्षत्राणि । नित्यकर्मणां द्रव्यसाध्यत्वाद्द्रव्यार्थं क्षेत्रं प्रकर्षयेत् । णिच्प्रयोगः स्वयं कृषिनिवृत्त्यर्थः । तथा चानापदि गौतमः ‘कृषिवाणिज्ये वा स्वयं कृते’ इति । मनुरपि । ( अ० ४।४ ) ‘ ऋतामृताभ्यां जीवेत मृतेन

प्रमृतेन वा' इति । ( मनु० अ० ४।८ ) 'प्रमृतं कर्षणं स्मृतम्' इति । अक्षसूक्ते चेयमेव वृत्तिरुक्ता 'अक्षैर्मा दीव्य कृषिमित्कृषस्व' इति । प्रतिग्रहादयश्चापत्कल्पाः । त्रिषु नक्षत्रेषु कृषिं मारभेत । ॥ २ ॥ इदं च मारम्भदिवसे कुर्यादित्याह—क्षेत्रस्यानु वा तं देशं गत्वा, तत्रोपलेपनादि कृत्वा,

॥ ३ ॥ क्षेत्रस्यानु वा तं 'क्षेत्रस्य पतिना वयमिति' प्रत्यृचं जुहुयाज्जपेद्वा ॥ ४ ॥ गाः प्रतिष्ठमाना अनुमन्त्रयेत 'मयोभूर्वातो अभिवातूस्रा' इति द्वाभ्याम् ॥ ५ ॥ आयतीः । 'यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः' । 'उप मैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः । दुहाना अक्षितं पयो मयि गोष्ठे

जुहुयात् । जपेद्वेदं सूक्तं तत्रस्थ एव । पादग्रहणेऽपि सामर्थ्यात्सूक्तग्रहणम् । प्रत्यृचमिति व्याख्यातम् ॥ ४ ॥ भक्षणार्थमरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेताहरहरात्मीया अन्या वा । न नियमः ॥ ५ ॥ भक्षयित्वा ग्रामं प्रत्यागच्छन्तीर्गा अनुमन्त्रयेताहरहर्यासामित्यृग्भ्यां सूक्तशेषेण च ॥ ६ ॥

आयतीनामनुमन्त्रणे 'आ गावो अग्मन्' इत्येतत्सूक्तमेके इच्छन्ति । पूर्वासामनेन बाधः ॥ ७ ॥ आसां गवां अगुरुगवीनां सङ्घानुपतिष्ठेताहरहर्भूताः स्थेति । गुरोर्गावस्तासु तिष्ठन्ति चेन्नोपतिष्ठेत । सर्वत्र स्थित्वैवोपस्थेयं । नोपविश्य । तथाचोक्तम् । 'उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम्' इति । शं मयि जानीध्वमिति सकृदेव वक्तव्यम् । अध्यायपरिसमाप्तिलक्षणार्थं हि द्विर्वचनम् ॥ ८ ॥ इति द्वितीये दशमी कण्डिका ॥ १० ॥ इत्याश्वलायनगृह्यसूत्रविवरणे गार्ग्यनारायणीयायां वृत्तौ द्वितीयोऽध्यायः ॥ २ ॥

निविशध्वं'। 'यथा भवाम्युत्तमो या देवेषु तन्वामैरयन्तेति' च सूक्तशेषम् ॥ ६ ॥ आगावीयमेके ॥ ७ ॥ गणानासामुपतिष्ठेतागुरुगवीनां 'भूताः स्थ प्रशस्ताः शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम्' ॥ ८ ॥ ॥ १० ॥



॥ श्रीगणेशाय नमः ॥ उक्तोऽर्थः । अतःशब्दो हेत्वर्थः । यस्मादेतैर्महतो निश्रेयसस्यावाप्तिस्तस्मात्पञ्चयज्ञा नाम यज्ञा वक्ष्यन्त इत्यर्थः ॥ १ ॥ इमे त इत्याह ॥२॥ तेषां स्वरूपमाह—वैश्वदेवे त्रयो यज्ञा उक्तास्तत्र यदग्नौ जुहोति दशाहुतीः स देवयज्ञः । यद्बलिं करोति 'अथ बलिहरणम्'

॥ श्रीगणेशाय नमः ॥ ॥ अथ तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॐ ॥ अथातः पञ्चयज्ञाः ॥ १ ॥ देवयज्ञो १ भूतयज्ञः २ पितृयज्ञो ३ ब्रह्मयज्ञो ४ मनुष्ययज्ञ ५ इति ॥ २ ॥ तद्यदग्नौ जुहोति स देवयज्ञो, यद्बलिं करोति स भूतयज्ञो, यत्पितृभ्यो ददाति स पितृयज्ञो, यत्स्वाध्यायमधीयते स ब्रह्मयज्ञो,

( गृ० १।२।३ ) इति स भूतयज्ञः । यत्पितृभ्यो ददाति 'स्वधा पितृभ्यः' ( गृ० १।२।११ ) इति स पितृयज्ञः । यत्स्वाध्यायमधीते 'अथ स्वाध्यायविधिः' ( गृ० ३।२।१ ) इत्यनेन विधानेन स ब्रह्मयज्ञः । यन्मनुष्येभ्यो ददाति 'ततोऽतिथीन्भोजयेत्' इति स्मृतिविधानेन स मनुष्ययज्ञः ।

अपूर्वाणां विधाने सति तद्यदग्नौ जुहोतीति सिद्धवदुपदेशो नोपपद्येत । अग्नौ जुहुयादित्येवावक्ष्यत् । अथ शास्त्रान्तरसिद्धानामनुवाद इतिचेत् । तर्ह्यथ स्वाध्यायविधिरिति ब्रह्मयज्ञविधानमपार्थकं स्यात् । तस्यापि तत्र सिद्धत्वात् । अथ इष्टतन्त्रपरिग्रहार्थो ब्रह्मयज्ञस्योपदेश इतिचेत् । न तद्युक्तम् । तन्त्रभेदस्यासिद्धत्वात् । पञ्चयज्ञानां हि तैत्तिरीयारण्यकं मूलम् । 'पञ्च वा एते महायज्ञाः' इत्यादि । तन्मूलत्वे च सति कथं तन्त्रभेदसंभवः । तस्माद्वैश्वदेवादय एव पञ्चयज्ञा इति सिद्धम् । मनुनाप्येव-

**यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति ॥ ३ ॥ तानेतान्यज्ञानहरहः**

मेवोक्तं पितृयज्ञवर्जम् । पितृयज्ञं त्वन्यथोक्तवान् । 'एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिके । न चैवाशयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्' ( मनु० ३।८२–८३ ) इति ॥ ३ ॥ अस्येदं प्रयोजनम् । भोजनार्थात्पाकात्प्रवृत्तिर्वैश्वदेवस्येत्युक्तम् । 'यस्याग्नौ न क्रियते न तद्भोक्तव्यमिति' निषेधात् । अत एव चान्नसंस्कारार्थम् । तत्र यदा परान्नं भुङ्क्ते उपवसति वा । तदा संस्कार्यस्य पाकस्याभावात्संस्कारस्य

१ आद्यशब्देन तण्डुलादिपरिग्रहः ।

कर्मणोऽप्यभावः स्यात्तन्निवृत्त्यर्थमिदम् । तेन पञ्चयज्ञार्थं सर्वथा पक्तव्यमेवेति सिद्धम् । अनेनाभ्युपायेन वैश्वदेवमपूर्वार्थमपीति साधितं भवति । अपि च सर्वथा पाकासंभवे पुष्पैः फलैरद्भिर्वा कुर्यादित्येवमर्थं च । उक्तंच 'आपन्नमपि दातव्यम् । आकाष्ठमपि जुहुयात् । आऋचमपि ब्रह्मयज्ञं कुर्यात्' इति । 'न चेदुत्पद्यतेऽन्नं तु अद्भिरेनान्समापयेत्' इति च । अकरणे प्रायश्चितार्थं च । उक्तं च बौधायनेन । 'एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि न विधीयते । मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥ द्व्यहं वापि त्र्यहं वापि प्रमादादकृतेषु तु । तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥

## कुर्वीत ॥ ४ ॥ ॥ १ ॥ अथ स्वाध्यायविधिः ॥ १ ॥ प्राग्वोदग्वा

दशाहं द्वादशाहं वा विनिवृत्तेषु सर्वतः । चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमतश्चरुः ॥' इति । केचिदाशौचदिवसेष्वपि वैश्वदेवं कार्यमित्येवमर्थमिति व्याचख्युः । तदयुक्तम् । 'पञ्चयज्ञविधानं तु न कुर्यान्मृतजन्मनोः' इति निषेधात् ॥ ४ ॥ इति तृतीये प्रथमा कण्डिका ॥ १ ॥ उक्तोऽर्थः । विधिग्रहणं ? विधिरेव वक्ष्यते न क्रम इत्येवमर्थम् । तेन वैश्वदेवस्य पुरस्तादुपरिष्टाद्वाऽध्येतव्यं न क्रमानियम इति सिद्धम् ॥ १ ॥ वाशब्दद्वयम् ? अन्यस्यां वाऽनिन्दितायां दिशि कार्यमित्येवमर्थम् ।

बहिरसंभवे ग्रामेऽध्येतव्यमित्येवमर्थं च । तथाच श्रुतिः–'ग्रामे मनसा स्वाध्यायमधीयीत' इति । आप्लुत्येति । स्नात्वेत्यर्थः । आ इतिवचनम्? अपोऽवगाह्य स्नायादित्येवमर्थम् । शुचौ देशे इति वचनं? 'शुचौ देशे यत्र क्वाप्यधीयीत न तीरनियम' इत्येवमर्थम् । यज्ञोपवीतिग्रहणं? नियमेनात्र यज्ञोपवीती स्यादित्येवमर्थम् । तेन दहनकर्मणि प्राचीनावीतित्वं सिद्धम् । आचम्येति वचनं? कर्माङ्गाचमनविधानार्थम् । अक्लिन्नवासा इति । अनार्द्रवासा भवेदित्यर्थः । ततः प्राक्कूलानां दर्भाणां महदुपस्ती-

**ग्रामान्निष्क्रम्याप आप्लुत्य, शुचौ देशे यज्ञोपवीत्याचम्या,-क्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां, तेषु प्राङ्मुख उपविश्यो,-पस्थं**

र्य, तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा, दक्षिणोत्तरौ पाणी पवित्रवन्तौ संधायेति । महदिति । बह्वित्यर्थः । प्राक्कूलानाम् । प्रागग्राणामित्यर्थः । प्राङ्मुख इति वचनं? नियमेनात्र प्राङ्मुखः स्यादित्येवमर्थम् । तेनान्यत्र क्वचिदुदङ्मुखतापि सिद्धा । दक्षिणोत्तरेणोपस्थं कुर्यात् । अपैतृकत्वात् । दक्षिण उत्तरो ययोः पाण्योस्तौ दक्षिणोत्तरौ पाणी । पवित्रे व्याख्याते । सव्यं पाणि

प्रागङ्गुलिमुत्तानं विधाय, तस्मिन्प्रागग्रे पवित्रे निधाय, दक्षिणं पाणिं न्यञ्चं प्रागङ्गुलिं तेन संदध्यादित्यर्थः । विज्ञायते श्रूयत इत्यर्थः । श्रुत्याकर्षः? सर्वमिदं गृह्यशास्त्रं श्रुतिमूलमिति दर्शयितुम् । "द्यावापृथिव्योः सन्धिमीक्षमाण इति । नोर्ध्वमधस्तिर्यग्वेक्षेतेत्यर्थः । संमील्य वाक्षिणी ।

कृत्वा, दक्षिणोत्तरौ पाणी संधाय, पवित्रवन्तौ विज्ञायते अपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति । द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम्

अन्येन वा येन प्रकारेणात्मानं समाहितमनसं मन्येत तथा युक्तोऽधीयीत । न संधीक्षणसंमीलननियमः । स्वाध्यायवचनं? सावित्र्या अपि स्वाध्यायधर्मसिद्ध्यर्थम । तेन 'सावित्रीमन्वाह' ( गृ० ३।२।४ ) इति सावित्र्या अनुवचने सत्यपि सामिधेनीधर्मः, ऐकश्रुत्यं, ऋगन्ते च प्रणवो न

 

भवतीति सिद्धम् ॥ २ ॥ प्रणवमादौ सकृदुक्त्वा ततस्तिस्रो व्याहृतीः समस्ता ब्रूयात् । प्रतिव्याहृति प्रणवशङ्का नैव कार्या । सकृत्कृतेनैव प्रणवेन ॐपूर्वत्वासिद्धेः । यथा 'अध्वर्युमुखाः' इत्यत्र एकेनैवाध्वर्युणा सर्वेऽध्वर्युमुखा भवन्ति । तद्वदत्रापि । पृथक्कल्पनायां प्रमाणाभावाच्च । ननु ततसृणां सूत्रे व्याहृतिसंज्ञा कृता । सत्यं कृता । होमे तु सा । न सर्वत्र । तेनात्र तिसृणामिति सिद्धम् । 'भूर्भुवः स्वरित्येता वाव व्याहृतयः' इति श्रुतिः । अपि च तैत्तिरीयश्रुतिरेषां मूलमि-

॥ २ ॥ ॐपूर्वा व्याहृतीः ॥ ३ ॥ सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयम् ॥ ४ ॥ ॥ २ ॥ अथ

त्युक्तम् । तत्र चैवं श्रूयते । 'ॐमिति प्रतिपद्य भूर्भुवः सुवरित्याह । सावित्रीं गायत्रीं त्रिरन्वाह । पच्छोऽर्धर्चशोऽनवानम् । स्वाध्यायमधीयीत । नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति । तस्माद्यदुक्तं तत्सम्यक् ॥ ३ ॥ सर्वामिति । अनवानमित्यर्थः । तृतीयवचनम् ? उपकरणेऽपि पच्छोऽर्धर्चशोऽनवानमित्येवं त्रिर्ब्रूयादित्येवमर्थम् ॥ ४ ॥ इति तृतीये द्वितीया कण्डिका ॥ २ ॥ अथशब्दः पूर्वेण संबन्धार्थः । तेन प्रणवादित्रयं स्वाध्यायस्याङ्गमिति सिद्धम् । स्वाध्यायवचनं ? 'ऋगादिरेव

 

स्वाध्यायो न प्रणवादित्रयमित्येवमर्थम्[1] । तेन ऋचमपि ब्रह्मयज्ञं कुर्यादित्यस्मिन्पक्षे सावित्रीपर्यन्तमुक्त्वा ऋचमधीयीत । ततो नम इत्येतया परिदध्यात् । तेन प्रणवादित्रयस्य परिधानीयायाश्च नित्यत्वं साधितं भवति । अधीयीतेति वचनम्[2] ? अन्वाहाधिकारनिवृत्त्यर्थम् । तेनानुप्रवचनधर्मो न भवति । सूत्राण्येव कल्पा इत्युच्यन्ते । नन्वनित्यानां सूत्राणां नित्यश्रुत्या उपदेशो न घटते । नन्वनित्यस्य पशोः

**स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानीति ॥ १ ॥ यदृचोऽधीते**

पशुना यजेतेति विधिर्न घटते । अथ तत्राकृतेर्नित्यत्वादुपपद्यते इति चेत् । तदत्राप्यविशिष्टम् । सर्वकल्पेषु कल्पत्वं नामानुवृत्तं नित्यमस्ति । गाथा नाम ऋग्विशेषा इन्द्रगाथादयः । 'यदिन्द्रो दाशराज्ञे' इति इन्द्रगाथाः पञ्चर्चः । नाराशंस्यश्च ऋच एव 'इदं जना उपश्रुतम्' इत्यादयः । ऋक्त्वादेव सिद्धे पुनर्वचनं ? फलविशेषसिद्ध्यर्थम् । इतिहासं महाभारतमाहुः । यत्र सृष्टिस्थित्युत्पत्तिप्रलयाः कथ्यन्ते । तत्पुराणम् । अनित्यचोद्यं पूर्ववत् ॥ १ ॥ इह हि द्रव्योत्सर्गनिमित्तं फलं दृष्टम् ।

---

१ अस्य वाक्यस्योत्तरवाक्येनान्वयः । २ शङ्का ।

अतः स्वाध्यायमात्रेणापि फलमस्तीति श्रुतिमुपन्यस्यति ॥ २ ॥ ब्रह्मयज्ञाध्ययनेन देवतास्तृप्यन्तीत्युक्तम् । पितरश्च तृप्यन्तीत्याह–स्वधेति पितॄणामन्नमुच्यते । पयसो नद्यः स्वधाभूताः पितॄनुप-

पयआहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिः ॥ २ ॥ यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा उपक्षरन्ति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्वः कुल्या यदथर्वाङ्गिरसः सोमस्य कुल्या यद्ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः ॥ ३ ॥ स यावन्मन्येत तावदधीत्यैतया परिदधाति । ' नमो ब्रह्मणे नमो

तिष्ठन्तीत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ॥ ३ ॥ ऋगादिदशकमध्येतव्यमित्युक्तम् । तत्र नियमेन दशा-

नामध्ययने प्राप्त इदमुच्यते । स यावत्कालमेकाग्रमानसमात्मानं मन्येत तावत्कालमेवाधीयीत । न दशाप्यध्येतव्या इति नियमः । सर्वथा समाहितमनसैवाध्येतव्यम् । नेयत्तानियम इत्यर्थः । एतयेतिवचनं ? सदैतया परिदध्यादित्येवमर्थम् । तेनास्यापि नित्यत्वं सिद्धम् । एषापि त्रिर्वाच्या ।

अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति' ॥ ४ ॥ ॥ ३ ॥ देवतास्तर्पयति 'प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि च्छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि सांख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्स-

प्रथमायां दृष्टत्वाच्छ्रुतिदर्शनाच्च ॥ ४ ॥ इति तृतीये तृतीया कण्डिका ॥ ३ ॥ परिधानानन्तरमेता देवतास्तर्पयत्युदकेन । तर्पणे तस्य प्रसिद्धत्वात् । प्रजापतिरित्यारभ्य एकान्नत्रिंशद्वाक्येषु तृप्यतु

तृप्यतां तृप्यन्त्विति यथार्थमुक्त्वा तर्पयेत्। एवमन्तानीति पृथङ्मन्त्र एव ॥ १ ॥ अनन्तरं शत- 

र्चिप्रभृतीन्द्वादशर्षींस्तर्पयति। प्रत्यृषि वाक्यभेदः पूर्ववत्। ऋषिग्रहणं? निवीतिप्राप्त्यर्थम्। 'यज्ञो-

रसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवम-न्तानि' ॥ १ ॥ अथ ऋषयः 'शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता' इति ॥ २ ॥ प्राचीनावीती ॥ ३ ॥ सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेयाः गर्गीवाचक्नवी वडवाप्रातीथेयी सुलभामैत्रेयी कहोळं कौषीतकं महाकौषीतकं पैङ्ग्यं महापैङ्ग्यं

पवीतशौचे च' (श्रौ० १।१।१०) इत्यनेन निवर्तितत्वात्। तीर्थविशेषस्तु स्मृतित एव सिद्धः ॥ २ ॥ प्राचीनावीती भूत्वा वक्ष्यमाणांस्तर्पयति। अयमपि प्रतिप्रसव एव ॥ ३ ॥ त्रयोविंशति- 

वाक्यानि । तत्र कहोळादिषु अर्थात्तर्पयामिशब्दः कार्यः । सर्वत्र प्रतिवाक्यं तर्पणं कुर्यात् । एकमन्त्राणि कर्माणीति न्यायात् ॥ ४ ॥ पितरं पितामहं च तर्पयित्वा गृहानेत्य यद्ददात्यतिथिभोजनभिक्षादानादि सा ब्रह्मयज्ञस्य दक्षिणा भवति । यद्ददातीति सिद्धवदुपदेशान्नापूर्वं विधीयत इति

सुयज्ञं सांख्यायनमैतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति ॥ ४ ॥ प्रतिपुरुषं पितॄंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥ ५ ॥ अथापि विज्ञायते स यदि तिष्ठन्व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवतीति ॥ ६ ॥

गम्यते । अपूर्वविधौ तु गृहानेत्य दद्यादित्यवक्ष्यत् । सदक्षिणत्वं ब्रुवता सोमयागसाम्यं प्रदर्शितं प्रशंसार्थम् । 'क्रतुना तेनास्येष्टं' इत्यादि प्रशंसा श्रूयते । 'प्रतिपुरुष'वचनं ? पृथक्पृथक् तर्पयेदित्येवमर्थम् ॥ ५ ॥ पूर्वोक्तोपवेशनासंभवेऽप्येवं वा ब्रह्मयज्ञं कुर्यादिति श्रुतिमेवाह—स्पष्टोऽर्थः ॥ ६ ॥

'न शयानोऽधीयीत नाष्टम्यां' इत्यादिनिषेधो नित्यस्वाध्यायस्यैव न ब्रह्मयज्ञस्येति श्रुतिमेवाह—तस्य ब्रह्मयज्ञस्य द्वावेवानध्यायौ । यदात्माऽशुचिः सूतकेन मृतकेन वा मलादिना वा । यदा च देशोऽशुचिरमेध्यादिना तत्रोभयत्रैवेत्यर्थः । कालस्त्वस्य श्रुतौ श्रूयते । 'मध्यन्दिने प्रबलमधीयीत य एवं विद्वान्महारात्र उषस्युदिते च' इति ॥ ७ ॥ इति तृतीये चतुर्थी कण्डिका ॥ ४ ॥ अध्ययनमध्याय[1]स्तस्योपाकरणं प्रारम्भो येन कर्म[2]णा तदध्यायोपाकरणम् । उक्तोऽर्थः । अतःशब्दो हेत्वर्थः । यस्माद्ब्रह्मयज्ञो नित्योऽतोऽध्यायोपाकरणं ब्रूम इति ॥ १ ॥

**विज्ञायते तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः ॥ ७ ॥ ॥ ४ ॥**

**अथातोऽध्यायोपाकरणम् ॥ १ ॥ ओषधीनां प्रादुर्भावे श्रवणेन श्राव-**

तस्य कालमाह—ओषधीनां प्रादुर्भावे सति श्रावणमासस्य श्रवणेन कर्तव्यम् । ओषधीनां प्रादुर्भाव इति वचनं?यदा श्रावणे प्रादुर्भावो न स्यात्तदा भाद्रपदे श्रवणेन कर्तव्यमित्येवमर्थम् । वृष्ट्यपकर्षे कर्मापकर्षशङ्का नैवास्ति । यदा भाद्रपदादुत्कर्षो भवति । तदापि कर्मोत्कर्षशङ्का नैव

१ भावे घञ् । २ करणे ल्युट् । बहुव्रीहिर्वा ।

कार्या। वार्षिकमिति समाख्याबलात्। वर्षासु क्रियत इति वार्षिकम्। श्रावणभाद्रपदमासौ हि न वर्षाऋतुः। श्रावणे प्रादुर्भावाभावे कर्माकरणशङ्काप्यनेनैव निरस्ता। श्रवणेनेति। श्रवणेन युक्ते काले इत्यर्थः। 'नक्षत्रेण युक्तः कालः' इत्यनेनाण्। 'लुबविशेषे' इति तस्य लुप्। 'नक्षत्रे च लुपि' इति सप्तम्यर्थे तृतीया। नक्षत्रशब्देषु सर्वत्रैवं योज्यम्॥ २॥ अत्रापि श्रावणस्येति संबध्यते। मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च। श्रावणमासस्य पञ्चमी यदा हस्तेन युज्यते तदा वेत्यर्थः। इति कालत्रयमुक्तम्॥ ३॥ आज्यभागवचनं नित्यार्थम्। द्रव्यानादेशादेवाज्ये सिद्धे सति आज्याहुतिवचनम्[1] उत्सर्जनेऽप्येतान्वाज्येनैव जुहुयान्नान्नेनेत्येवमर्थम्। परिस्तरणविक-

णस्य॥ २॥ पञ्चम्यां हस्तेन वा॥ ३॥ आज्यभागौ हुत्वा-ऽऽज्याहुतीर्जुहुयात्। 'सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यश्चेति'

१ कालाद्वञितिठञितिरूपम्।

लपस्यासंभवात् ॥ ४ ॥ दधिमिश्रान्सक्तूनित्यर्थः ॥५॥ मन्त्रानाह—एकाग्रहणं ? कुषुम्भकादिवत्त्र्यृचनिवृत्त्यर्थम् ॥ ६ ॥ एते नव त्र्यृचाः ॥ ७ ॥ एकाग्रहणं ? त्र्यृचानन्तरमियमेवैका न

॥ ४ ॥ अथ दधिसक्तूञ्जुहोति ॥ ५॥ 'अग्निमीळे पुरोहितमित्येका' ॥ ६ ॥ 'कुषुम्भकस्तदब्रवीत्' 'आवदंस्त्वं शकुने भद्रमावद' 'गृणाना जमदग्निना' 'धामंते विश्वं भुवनमधिश्रितं' 'गन्ता नो यज्ञं यज्ञियाः सुशमि' 'योनः स्वो अरणः' 'प्रतिचक्ष्व विचक्ष्व' 'आग्ने याहि मरुत्सखा' 'यत्ते राजञ्छृतं हविरिति' त्र्यृचाः ॥ ७ ॥ 'समानीव आकूतिरित्येका' ॥ ८ ॥ 'तच्छंयोरावृणीमहे' इत्येका

वक्ष्यमाणेत्येवमर्थम् ॥ ८ ॥ अत्र चैकाग्रहणं? त्र्यृचानन्तरमियमेवैका न पूर्वेत्येवमर्थम् । एवमनयोर्विकल्पः । शाकलसमाम्नायस्य बाष्कलसमाम्नायस्य चेदमेव सूत्रं गृह्यं चेत्यध्येतृप्रसिद्धम् । तत्र

१ भक्ष्येण मिश्रीकरणमिति समास. ।

शाकलानां 'समानीव आकूतिः' इत्येषा भवति । संहितान्यत्वात् । बाष्कलानां तु 'तच्छंयोरा-
वृणीमहे' इत्येषा भवति । संहितान्यत्वादित्येवं विनिवेशो युक्तः॥ ९ ॥ अध्यापयितव्यैरित्यर्थः ।
अध्याप्यैरन्वारब्ध इत्येतावतैव सिद्धे अध्येष्यमाण इति वचनम्? अध्याप्याभावेऽप्यध्येष्यमाणः
स्वयमेव कुर्यादित्येवमर्थम् । 'वर्षासु च्छन्दांस्युपाकृत्याधीयीरन्' इति श्रुतेः । पञ्चम्यां हस्तेन

॥ १ ॥ अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो
हुत्वा, सौविष्टकृतं हुत्वा, दधिसक्तून्प्राश्य, ततोमार्जनम्

वाऽध्येष्यमाणोऽध्याप्यैरन्वारब्ध आज्यभागौ हुत्वाऽज्याहुतीर्जुहुयादित्येवं वक्तव्ये सति एताभ्यो
देवताभ्यो हुत्वेति वचनं? सावित्र्यादिनवानामग्निमीळआदिविंशतीनां च देवताग्रहणेन ग्रहणार्थम् ।
क । एताभ्यो देवताभ्योऽन्नेन हुत्वा । एता एव देवता इत्यत्र च । स्विष्टकृद्वचनं व्याख्यातं प्राक् ।
दधिसक्तुवचनमाज्यनिवृत्त्यर्थम् । 'परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते' तन्मार्जनम् । प्राशनादि

१ एषु मन्त्रेषु छन्दोभ्यऋषिभ्य इति एको मन्त्रः ।

वेदारम्भणान्तं शिष्याणां[1]मपि कार्यम् ॥ १० ॥ पश्चादग्नेः प्रागग्रेषु दर्भेषूपविशन्ति । ततः शरावादावुदकमासिच्य, तत्र दर्भान्निदध्यात् । ततो ब्रह्माञ्जलिकृतो जपेत् । स्वयं शिष्यैः सह । सन्ति चेत्ते । जपतिचोदनायां गृह्यकर्मण्यनियमुपांशुत्वमिति ज्ञापयिष्यामः । तस्मादुच्चैरेव जपेत् । अध्यापनविरोधाच्च ॥ ११ ॥ पूर्वमोङ्कारं । ततस्तिस्रो व्याहृतीः समस्ताः । ततः सावित्रीम् । एवमेतत्त्रितयं त्रिरभ्यस्य, वेदादिमग्निमीळ इत्यारभ्य सूक्तमनुवाकं वारभेत । चशब्दः ? प्रणवव्याहृती-

॥ १० ॥ अ[2]परेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान्कृत्वा ब्रह्माञ्जलिकृतो जपेत् ॥ ११ ॥ ॐपूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत् ॥ १२ ॥ तथोत्सर्गे ॥ १३ ॥ ष[3]ण्मासा-

नामप्यभ्यासार्थः । अथ सर्वप्रायश्चित्तादि समापयेत् ॥ १२ ॥ अत्र एतेनेत्यभावान्न कृत्स्नकर्मातिदेशः । किन्तु वेदारम्भणमात्रमतिदिश्यते । एताभ्यो देवताभ्योऽन्नेन हुत्वेति च प्रधानहोमः[4] । तेन प्राशनमार्जने उत्सर्जने न भवत इति सिद्धम् ॥१३॥ इदं वचनम् ? उपाकृत्य नियमेन षण्मासान-

---

१ कर्तरि षष्ठीयम् । कृत्यानां कर्तरि वेतिसूत्रात् । २ तयबन्तम् । तद्योगे एनपा द्वितीयेतिद्वितीया । ३ कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । ४ अस्यातिदिश्यते इत्यनेन सबन्धः ।

धीयीत नोपरमेदित्येवमर्थम् ॥ १४ ॥ ब्रह्मचारिधर्मैरित्यर्थः । स्वाध्यायकाले ये विहिता धर्मा मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयस्तैर्युक्तोऽधीयीत । समावृत्तस्य[1] मेखलादयस्तु न भवन्ति । अस्वाध्यायधर्मत्वात् ॥ १५ ॥ ब्रह्मचारिण इत्यर्थः । अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम् । इतरथा समावृत्तानामेवेति शङ्का स्यात् ॥ १६ ॥ समावृत्तो जायां गच्छेदित्येक

नधीयीत ॥ १४ ॥ समावृत्तो ब्रह्मचारिकल्पेन ॥ १५ ॥ यथान्याय-मितरे ॥ १६ ॥ जायोपेयेत्येके ॥ १७ ॥ प्राजापत्यं तत् ॥ १८ ॥

आहुः ॥ १७ ॥ ऋतावेव गच्छेन्नानृतावित्याह—तद्गमनं प्रजापतित्वसिद्ध्यर्थं कार्यम् । प्रजोत्पत्त्यर्थमित्यर्थः । तदर्थं कार्यं । नानृतावित्यर्थः । ऋतुगमनं सर्वथा कार्यमिति तेषामभिप्रायः । अगमने दोषश्रवणात् । 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' ( मनु० टी० ३।४५ पराशरः ) इति ॥ १८ ॥ एतदुपाकरणमित्यर्थः । आचक्षत इति

---

१ कृतसमावर्तनस्य । समावर्तनं नाम संस्कारविशेष. ।

ब्रुवन्वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति। अन्वर्थसंज्ञेयमिति दर्शितं प्राक् ॥ १९ ॥ मध्यमाष्टकाग्रहणं? षण्मासान्तोपलक्षणार्थम्। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः। शास्त्रान्तरे चैवं दृश्यते। 'एताभ्यो देवताभ्यो हुत्वा सावित्र्यादिभ्य आज्यम्' इत्युक्तम्। अग्निमीळ इत्यादिभ्योऽन्नेन हुत्वा स्थालीपाकग्रहणमकृत्वाऽन्नेनेति यत्नेन ब्रुवन् गृहसिद्धमन्नं ग्राह्यमिति दर्शयति। ततः स्विष्टकृत्। ततो वेदारम्भणम्। ततो होमशेषं समाप्यापोऽवगाहन्त इत्यर्थः॥२०॥

वार्षिकमित्येतदाचक्षते ॥ १९ ॥ मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति ॥ २० ॥ एता एव तद्देवतास्तर्पयन्ति ॥ २१ ॥ आचार्यानृषीन्पितॄंश्च ॥ २२ ॥

स्नात्वा सावित्र्याद्या नव अग्निमीळ इत्याद्याश्च विंशति तर्पयन्तीत्यर्थः। ऋग्देवता आदिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकान्नत्रिंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः ॥ २१ ॥ यच्च ब्रह्मयज्ञाङ्गं तर्पणमुक्तं तदेतदङ्गत्वेनेदानीमपि कार्यमित्यर्थः। चशब्दो देवतातर्पणसमुच्चयार्थः। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयतीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम्। क्रमश्च तन्त्रोक्त एव

॥२२॥ अस्येयं संज्ञा । ततः षण्मासान्षडङ्गान्यधीयीत । षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मा ग्रहणाध्ययन एवेत्याहुरेके । अन्ये त्वविशेषेणेत्याहुः ॥२३॥ इति तृतीये पञ्चमी कण्डिका ॥५॥ त्रेतायां या इष्टयः 'पशवश्च आयुष्कामेष्ट्याम्' इत्याद्याः 'वायव्यं श्वेतमालभेत भूतिकामः' इत्याद्याश्च तेषां स्थाने काम्याः पाकयज्ञाः कार्या इत्यर्थः । काम्यसोमस्थाने सोमो न कार्यः । सोमतन्त्रस्य गृह्येऽविधानात् ॥१॥ तत्र द्रव्यमाह—त्रेतायां ये पुरोडाशास्तेषां स्थाने चरवः कार्याः । पशुस्थाने तु पशुरेव

**एतदुत्सर्जनम् ॥२३॥ ॥५॥ अथ काम्यानां स्थाने काम्याः ॥१॥ चरवः ॥२॥ तानेव कामानाप्नोति ॥३॥ अथ व्याधितस्यातुरस्य यक्ष्म[1]गृहीतस्य**

कार्यः । समानजातीयस्यैव हि बाधो भवति । औपधिसाम्यात् । न पशोः । उक्तं च बौधायनेन 'येऽमुत्र पुरोडाशास्त इह चरवः' इति । नामधेयेन होम इत्युक्तम् ॥२॥ अन्ये पाकयज्ञा आहिताग्नेरनाहिताग्नेश्च साधारणा इत्युक्तम् । काम्यास्त्वनाहिताग्नेरेव भवन्तीत्येवमर्थमिदं वचनम् ॥३॥ नैमित्तिकान्याह—व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगः । यक्ष्मगृहीतः क्षयव्याधिगृहीतः । त्रिषु निमित्तेषु

---

१ क्षय. शोषश्च यक्ष्मा चेत्यमर. ।

षडाहुतिर्नाम चरुः कार्यः । षडाहुतिरिति कर्मनामधेयम् । चरुग्रहणम्? आमाज्यनिवृत्त्यर्थम् ॥४॥ मत्यृचं पञ्चाहुतीर्हुत्वा स्विष्टकृतं षष्ठं कुर्यात् । अत्र हीनपादग्रहणमेव कथं न कृतम् । षष्ठं एतेनेति च न वक्तव्यं भवति । उच्यते । एतेनेत्यन्यसूक्तानिवृत्त्यर्थम् । क । शौनकेनोक्तं 'रक्षोघ्नः षडाहुतिः' इति तत्राप्यनेनैव सूक्तेन होतव्यमित्येवमर्थम् । ऐतरेयिभिस्तु 'ब्रह्मणाग्निः' इत्यनेन षडाहु

वा षडाहुति श्चरुः ॥४॥ 'मुञ्चामि त्वा हविषा जीवनायकमित्येतेन' ॥५॥ स्वप्नममनोज्ञं दृष्ट्वा 'अद्या नो देव सवितरिति' द्वाभ्यां 'यश्च गोषु दुःस्वप्नमिति' पञ्चभिरादित्यमुपतिष्ठेत ॥ ६ ॥ 'यो मे राजन्युज्यो

तिराम्नातः । तच्च सूक्तं रक्षोहालिङ्गम् । तस्मात्तत्रामुयात्तन्निवृत्त्यर्थमेतेनेति वचनम् । मत्यृचमेव पञ्च हुत्वा स्विष्टकृतं षष्ठं कुर्यात् । सूक्तमेवावर्त्य षडाहुतयो मा भूवन्नित्येवमर्थं पादग्रहणम् ॥ ५ ॥ अशुभं स्वप्नं दृष्ट्वा द्वाभ्यां पञ्चभिश्चोपतिष्ठेत ॥ ६ ॥ अनयैव वा पूर्वाभिर्वा सप्तभिरिति विकल्पः

१ अमनोज्ञं दुष्टमित्यर्थः ।

॥ ७ ॥ अमनोज्ञं दृष्ट्वा अप्रियं प्रत्यक्षेण दृष्ट्वेत्यर्थः । षट्सु निमित्तेष्वेतां जपेत् ॥ ८ ॥ अगमनीयां गत्वेति । स्वभार्यां रजस्वलां गत्वा । षष्ठ्यादिषु वा प्रतिषिद्धरात्रिषु गत्वा । अयाज्यः । न्यस्तमा-

वा सखा वेति' वा ॥ ७ ॥ क्षुत्वा, जृम्भित्वाऽमनोज्ञं दृष्ट्वा, पापकं गन्धमाघ्रायाक्षिस्पन्दने, कर्णध्वनने, च 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू' इति जपेत् ॥ ८ ॥ अगमनीयां गत्वाऽयाज्यं याजयित्वाऽभोज्यं भुक्त्वाऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं चोपहत्य, 'पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा' । 'इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पताम् । वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो

त्विज्यमिति निषिद्धः । अभोज्यं लशुनादि गणिकान्नादि च । अप्रतिग्राह्यं शस्त्रविषमित्यादि । अप्र-

१ टुक्षु शब्दे । २ जृम्भीगात्रविनामे ।

तिग्राह्यपुरुषद्रव्यं वा। अग्निचयनस्थं यूपं स्पृष्ट्वा च। तेषु पञ्चसु निमित्तेषु द्वाभ्यामेताभ्यां जुहुयात्। आज्याहुतिवचनं? तन्त्रनिवृत्त्यर्थमिष्यते ॥ ९ ॥ आदध्यादिति शेषः ॥ १० ॥ जपपक्षे स्वाहाकारं त्यजेत्। प्रदानाभावात् ॥ ११ ॥ इति तृतीये षष्ठी कण्डिका ॥ ६ ॥ अभ्याधितं स्वपन्तं सन्तं यद्यभ्यस्तमियाद्रविस्ततो वाग्यतोऽनुपविशंश्च रात्रिशेषं स्थित्वा तत उदिते पञ्चभिरुपतिष्ठेत ॥ १ ॥

हृद्यन्तरममृतस्य केतुः स्वाहे'–त्याज्याहुतीर्जुहुयात् ॥ ९ ॥ समिधौ वा ॥ १० ॥ जपेद्वा ॥ ११ ॥ ॥ ६ ॥ अभ्याधितं चेत्स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन्रात्रिशेषं भूत्वा 'येन सूर्य ज्योतिषा बाधसे तम' इति पञ्चभिरादित्यमुपतिष्ठेत ॥ १ ॥ अभ्युदियाच्चेदकर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तरापराभिश्चतसृभि-

अभ्याधितं स्वपन्तं सन्तं विहितकर्मणा अश्रान्तमकर्मश्रान्तमभ्युदियाच्चेत्। विहितकर्मणा श्रान्ते तु न भवति प्रायश्चित्तम्। अनभिरूपेणाविहितेन कर्मणा नृत्यादिना कर्मणा श्रान्तमभ्युदियाच्चेद्वाग्यतोऽनुपविशंश्चाहःशेषं स्थित्वाऽपरेद्युरुदित आदित्ये 'यस्य ते विश्वा' इति चतसृभिरुपति- ॥ ११ ॥

ष्ठेत ॥ २ ॥ अथ नित्यकर्मोच्यते—यज्ञोपवीतीति व्याख्यातम् । नित्योदकः स्मृत्युक्तोदककर्मेत्यर्थः । अतो मार्जनादि कार्यम् । सन्ध्यामुपासीत वाग्यतः । एतावत्सन्ध्याद्वये समानम् ॥ ३ ॥ प्रतिसन्ध्यामित्थमुपासीतेत्याह—सायंकाले उत्तरापरां दिशमभिमुखः । वायव्यभिमुख इत्यर्थः । तत्रापि नाञ्जसाभिमुखः । अपि त्वन्वष्टमदेशमभिमुखः । प्रतीच्यां दिशि य उत्तरो भागस्तदभि-

रूपस्थानम् ॥ २ ॥ यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः ॥ ३ ॥ सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मण्डल आनक्षत्रदर्शनात् ॥ ४ ॥ एवं प्रातः ॥ ५ ॥ प्राङ्मुखस्तिष्ठन्ना-

मुख इत्यर्थः । सावित्रीं जपेत् । इतः कालादारभ्य आ इतः कालात् ॥ ४ ॥ एवमेव प्रातःकाल उपासीत ॥ ५ ॥ तत्र विशेषमाह प्राङ्मुख इति वायव्यभिमुखत्वानिवृत्त्यर्थम् । तिष्ठन्नित्युपवेशननिवृत्त्यर्थम् । अतो ज्ञायतेऽविशेष उपवेशनं भवतीति । पूर्वावधिस्तु अर्धास्तमितेषु नक्षत्रेषु । कुतः

१ दिङ्नामान्यन्तराले इति बहुव्रीहिः । २ आङ् मर्यादायाम् ।

पूर्वस्माद्विपरीतत्वात् । उत्तरावधिस्तत्रैवोक्तः ॥ ६ ॥ कपोतो रक्तपादः शुक्लवर्णोऽरण्यवासी । स यद्यगारमुपहन्यात् । निषीदेत् । तस्मिन्पदं कुर्यादित्यर्थः । अगारसमीपं वागच्छेत् । ततोऽनेन जुहुयात् । जपेद्वेदं सूक्तम् । प्रत्यृचं व्याख्यातम् ॥ ७ ॥ अर्थार्थं गच्छन्नेनं प्रत्यृचं जुहुयात् । जपेद्वे-

मण्डलदर्शनात् ॥ ६ ॥ कपोतश्चेदगारमुपहन्यादनुपतेद्वा 'देवाः कपोत' इति प्रत्यृचं जुहुयाज्जपेद्वा ॥ ७ ॥ 'वयमु त्वा पथस्पते' इत्यर्थचर्यां चरिष्यन् ॥ ८ ॥ 'संपूषन्विदुषा' इति नष्टमधिजिगमिषन्मूळ्हो वा ॥ ९ ॥ 'संपूषन्नध्वने' इति महान्तमध्वानमेष्यन्प्रातिभयं[१] वा ॥ १० ॥ ॥ ७ ॥ अथैतान्युपकल्पयीत समावर्त्यमाने मणिं

दम् । अत्र पादग्रहणेऽपि सामर्थ्यात्सूक्तग्रहणम् ॥ ८ ॥ नष्टं वस्तु लब्धुमिच्छन्प्रज्ञाहीनो वा जुहुयाज्जपेद्वेदम् ॥ ९ ॥ महान्तमध्वानं गमिष्यन्नल्पमपि प्रतिभयं भयानकमध्वानमेष्यन्ननेन जुहुयाज्जपेद्वेदम् ॥ १० ॥ इति तृतीये सप्तमी कण्डिका ॥ ७ ॥ उक्तोऽर्थः । उपकल्पयीतेतिशब्दोऽयं

१ भयंकर प्रतिभयम् ।

छान्दसः । समावर्तनं नाम संस्कारः । तेन संस्क्रियमाण इत्यर्थः । अर्थादेवोपकल्पने सिद्धे उपकल्पनवचनम्? अत्रात्मने चाचार्याय च एतान्येकादश द्रव्याण्युपकल्पयेदिति विधानार्थम् ॥ १ ॥ यद्युभयोर्न लभेत । तदाचार्यायैव केवलायोपकल्पयेत् ॥ २ ॥ यज्ञियस्य वृक्षस्य या अप-

कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्याय च ॥ १ ॥ यद्युभयोर्न विन्देताचार्यायैव ॥ २ ॥ समिधं त्वाहरेदपराजितायां दिशि यज्ञियस्य वृक्षस्य ॥ ३ ॥ आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा ब्रह्मवर्चसकाम उपवा-

राजिता दिक् ततो गृहीत्वा आहरेत् । यज्ञियस्येति वचनं? होमार्थेयं समिदिति ज्ञापयितुम् । तेन तिष्ठन्समिधमादध्यादित्यत्र इमामादध्यादिति सिद्धम् ॥ ३ ॥ उपवातां

---

१ दद्यात् । २ ब्रह्महस्तिभ्यां वर्चस इति अच् प्रत्ययः ।

शुष्कामित्यर्थः ॥ ४ ॥ आर्द्रशुष्कामित्यर्थः । एको भाग आर्द्रः । अपरो भागः शुष्कः ॥ ५ ॥ आहृतां समिधमुपरि निदध्यात् । न भूमौ । ततो ब्राह्मणेभ्यो गां दक्षिणां दद्यात् । कर्माङ्गत्वेन भोजनं च देयम् । ततो गोदानोक्तं कर्मेहापि कुर्यात् । कर्मग्रहणं[1] कर्मैव कुर्यान्नाप्लुत्य वाग्यत इत्यादिनियमाः कार्या इत्येवमर्थम् । इदं कर्म स्वयमेव करोति । समावर्त्तमाने इत्यधिकारा-



**ताम् ॥ ४ ॥ उभयीमुभयकामः ॥ ५ ॥ उपरि समिधं कृत्वा, गामन्नं च ब्राह्मणेभ्यः प्रदाय, गौदानिकं कर्म कुर्वीत ॥ ६ ॥ आत्मनि मन्त्रान्त्संनमयेत् ॥ ७ ॥ एकक्लीतकेन ॥ ८ ॥ शीतोष्णाभिरद्भिः स्नात्वा**

दूहदर्शनाच्च ॥ ६ ॥ मन्त्रानात्मवाचकान्कुर्यादित्यर्थः । ऊह्यानि ब्रूमः । 'ओषधे त्रायस्व मां । स्वधिते मा माहिंसीः । वपतेदं ममायुष्मान् । यथासं ते न म आयुष' इत्युभयत्र । 'शिरो मुखं मा म आयुः प्रमोषीः' इति ॥ ७ ॥ उन्मर्दनं कुर्वीतेति शेषः । करञ्ज[1]बीजस्य यत्रैकं बीजं तदेकक्लीतकम् । तत्पेषयित्वा तेनोन्मर्दनं कारयेत् ॥ ८ ॥ प्रतिवस्त्रं[2] मन्त्रावृत्तिः । द्विवचनस्य देवतापर-

१ करजश्चकरञ्जकः । २ वीप्सायामव्ययीभावोज्यम् ।

त्वात्। सव्यं पूर्वमाञ्जयित्वा ततो दक्षिणमाञ्जयीत। 'सव्यं मनुष्या अञ्जते प्रथमं' इति श्रुतेः। प्रतिचक्षुर्मन्त्रावृत्तिः ॥ ९ ॥ अनेन कुण्डले आबध्नीत। सुवर्णकुण्डले इत्यर्थः। अत्र दक्षिणं पूर्वं पश्चात्सव्यम्। मन्त्रावृत्तिरुक्ता ॥ १० ॥ पश्चाद्गात्राणि। कुतः। अग्रेवचनात्। अनुलेपनं कुङ्कु-

'युवं वस्त्राणि पीवसा वसाथे' इत्यहते वाससी आच्छाद्य 'अश्मनस्तेजोऽसि चक्षुर्मे पाहीति' चक्षुषी आञ्जयीत ॥ ९ ॥ 'अश्मनस्तेजोऽसि श्रोत्रं मे पाहीति' कुण्डले आबध्नीत ॥ १० ॥ अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेद्, बाहू राजन्य, उदरं वैश्य, उपस्थं स्त्र्यूरू सरणजीविनः ॥ ११ ॥ 'अनार्ताऽस्यनार्तोऽहं

मादि। बाहू राजन्योऽग्रेऽनुलिम्पेत्। उदरं वैश्योऽग्रेऽनुलिम्पेत्। उपस्थं स्त्री अग्रेऽनुलिम्पेत्। ऊरू सरणजीविनोऽग्रेऽनुलिम्पेरन्। अयं विधिः सार्वत्रिकः। कुतः। स्त्रीविधानात् ॥ ११ ॥ माले-

 

त्युक्तां स्रजमपि न बन्धीत ॥ १२ ॥ यद्यज्ञानान्मालेति ब्रूयुस्ततः स्रगित्यभिधाप्य बध्नीत ॥ १३ ॥ 'उपानहौ चर्ममय्यौ ते आतिष्ठेत्' इत्युपानहावास्थाय। सकृन्मन्त्रः। द्विवचनात्। ततश्छत्रमादत्ते ॥ १४ ॥ आदत्ते ॥१५॥ आयुष्यमिति सूक्तग्रहणम्? आयुष्यमित्येतावान्मन्त्र इति शङ्कानिवृत्त्यर्थम्।

:४ ॥

भूयासमिति' स्रजमपि बध्नीत न मालोक्ताम् ॥ १२ ॥ मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत ॥ १३ ॥ 'देवानां प्रतिष्ठे स्थः सर्वतो मा पातमि'–त्युपानहावास्थाय 'दिवश्छद्मासीति' छत्रमादत्ते ॥१४॥ 'वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहीति' वैणवं दण्डम् ॥१५॥ 'आयुष्यमिति' सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा, तिष्ठन्त्समिधो-

कुतः शङ्का। वाक्यस्य परिपूर्णत्वात्। आयुष्यमिति। आयुष्करमित्यर्थः। तेन 'नेजमेष' इत्यस्य खिलत्वेऽपि सूक्तग्रहणं सिद्धम्। मणिः सुवर्णमयः। उष्णीषं कृत्वा। अहतेन वाससा

शिरो वेष्टयेत्यर्थः। तिष्ठन्ग्रहणम्? अन्यत्रासीनस्य कर्माणि भवन्तीति ज्ञापनार्थम् ॥१६॥ इति तृतीयेऽष्टमी कण्डिका ॥ ८ ॥ स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतमिति द्वादशाध्येवमेवोक्त्वा

ऽभ्यादध्यात् ॥ १६ ॥ ॥ ८ ॥ 'स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी। इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम्'। 'यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानूकाशस्य[1] सप्रतीकाशस्य सदेवमनुष्यस्य[2] सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मानि व्रतं तन्मे

ततो यदग्न इत्यादि यथासूत्रमित्येवमुपदिशन्ति। तत उपानहौ विसृज्य, समिदाधानं कार्यम्।

---

१ इकः काशे इत्यणोर्दीर्घः। २ वेदेति क्वचित् पुस्तके पाठः।

तथाच गौतमः । 'सोपानत्क आसनाभिवादननमस्कारान्वर्जयेत्' इति ॥ १ ॥ अत्र खिलस्यापि ग्रहणं भवति । अथैतस्य समाम्नायस्येत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात् । 'समाम्नायस्य विताने' इति । कुत एतत् । सूत्रे खिलानां पाठात् । इह च प्रतीकग्रहणात् । तस्माद्दशभिर्होम इति सिद्धम् । प्रत्यृचमिति व्याख्यातम् । आदध्यादिति प्रकृते पुनरादध्यादिति वचनं ? पूर्वस्याधिकारानिवृत्त्यर्थम् । तेनोपविश्यादध्यात् । न तिष्ठन् । स्विष्टकृदादिहोमशेषं समापयेत् ॥२॥ यत्रा-

**सर्वव्रतमिदमहमग्ने सर्वव्रतो भवामि स्वाहेति'॥ १ ॥ 'ममाग्ने वर्च' इति प्रत्यृचं समिधोऽभ्यादध्यात् ॥ २ ॥ यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रीं वसेत् ॥ ३ ॥ विद्यान्ते गुरुमर्थेन निमन्त्र्य कृत्वाऽनुज्ञा-**

त्मानं मधुपर्केण पूजयन्ति तत्रैतां रात्रिं वसेद्वसतिं कुर्यात् । कुत एतत् । स्नातकायोपस्थितायेति वचनान्मधुपर्केण पूजनमिति लब्धम् ॥ ३ ॥ अस्य कालमाह—विद्यान्ते गुरुमर्थेन निमन्त्रयते । 'कमर्थमहं ते करवाणि' इति । गुरुर्यमर्थमाह तं कृत्वा स्नानं करोति । अथवाऽनुज्ञातः स्नायात् । स्नानं समावर्तनमित्यर्थः । विद्यान्त इति व्याख्यातं प्राक्

॥ ४ ॥ उपदेशादेव व्रतत्वे सिद्धे इदं वचनं ? नक्तं न स्नायामीत्येवं संकल्पयेदित्येवमर्थम् ॥ ५ ॥ द्रुतगमनप्रतिषेधः ॥ ६ ॥ अन्यांश्च प्राणसंशयान्नाभ्यापद्येत । यस्मादित्थं श्रूयत इत्यर्थः । वर्षति न धावेदित्यादिप्रतिषेधोऽस्य प्राणसंशयाभ्यापादनप्रतिषेधत्वज्ञापनार्थः । अर्थसंशयाभ्यापादने

तस्य वा स्नानम् ॥ ४ ॥ तस्यैतानि व्रतानि भवन्ति ॥ ५ ॥ 'न नक्तं स्नायाद्' 'न नग्नः स्नायाद्' 'न नग्नः शयीत' 'न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनाद्' 'वर्षति न धावेत्' ॥ ६ ॥ 'न वृक्षमारोहेद्' 'न कूपमवरोहेद्' 'न बाहुभ्यां नदीं तरेद्' 'न संशयमभ्यापद्येत' ॥ ७ ॥ महद्धै भूतं स्नातको भवतीति विज्ञायते ॥ ८ ॥ ॥ ९ ॥ गुरवे प्रस्र-

न दोषः ॥ ७ ॥ स्नातको हि महद्भूतमिति च श्रूयते । कथं पुनः स्नातकस्य महत्त्वम् ? । उच्यते । 'देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च । गृहस्थः सेव्यते यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी ॥' इति स्मृतेः ॥ ८ ॥ इति तृतीये नवमी कण्डिका ॥ ९ ॥ समावृत्तः सन्निवत्स्यमाणः शिष्यः गुरोर्नाम

प्रब्रूयाद्देवदत्तेति । गुरवे इति चतुर्थी षष्ठ्यर्थे । यथास्यै इति ॥ १ ॥ तत एवं प्रब्रुवीत । इदंशब्द-
स्य स्थान आश्रमं निर्दिशेत् । देवदत्त गार्हस्थ्यं वत्स्यामो भो इति । वत्स्याव इति द्विवचनपाठे-
ऽर्थोऽनुपपन्नः ॥ २ ॥ नाम्न उर्ध्वमुच्चैर्ब्रूयात् । गुरुनाम तूपांश्वेव । ब्रूयादित्यर्थः ॥३॥ ततः प्राणा-
पानयोरुरुव्यचा इत्येतं मन्त्रमुपांशु ब्रूयाच्छिष्य इत्यर्थः । ननु उत्तरत्र वक्ष्यत्यतो वृद्धो जपतीति

क्ष्यमाणो नाम प्रब्रुवीत ॥ १ ॥ इदं वत्स्यामो भो इति ॥ २ ॥
उच्चैरूर्ध्वं नाम्नः ॥ ३ ॥ प्राणापानयोरुपांशु ॥ ४ ॥ 'आ मन्द्रैरिन्द्र
हरिभिरिति' च ॥ ५ ॥ अतो वृद्धो जपति 'प्राणापानयोरुरुव्यचा-

तस्मादाचार्यस्योपांशु दृष्टत्वादस्याप्युपांश्वेव भविष्यत्यत उपांश्विति न वाच्यम् । उच्यते ।
जपचोदनायामुपांशुत्वमनित्यमिति ज्ञापनार्थमिदम् । तेन वेदारम्भणे उच्चैःप्रयोगः सिद्धः । अथ
वा उच्चैरित्यधिकारनिवृत्त्यर्थमिदम् । वेदारम्भणे तूच्चैष्ट्वे कारणमन्यदप्युक्तमेव ॥ ४ ॥ एतं चोपांशु
ब्रूयाच्छिष्यः ॥ ५ ॥ अतो वृद्ध आचार्यो जपत्येतौ मन्त्रौ । अतो वृद्धो जपतीति वचनात्पूर्वं शि- ॥ ९६ ॥

ष्योप्येतौ मन्त्रौ जपतीति ज्ञायते । ऋचं चेत्यामन्द्रैरित्येतामित्यर्थः ॥ ६ ॥ अतिसृजेदिति शेषः । समाप्येति वचनम्? आचार्य एवोंप्रागिति मन्त्रं जपेदित्येवमर्थम्। जपित्वा 'महित्रीणामवोऽस्त्विति'

स्तया प्रपद्ये देवाय सवित्रे परिददामी'—त्यृचं च ॥ ६ ॥ समाप्योम्प्राक्स्वस्तीति जपित्वा महित्रीणामित्यनुमन्त्र्य ॥ ७ ॥ एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते ॥ ८ ॥ वयसाममनोज्ञा वाचः श्रुत्वा 'कनिक्रदज्जनुषं प्रब्रुवाण' इति सूक्ते जपे—'देवीं वाचमजनयन्त देवा' इति च ॥ ९ ॥ 'स्तुहि श्रुतं गर्तसदं युवानमिति' मृगस्य ॥ १० ॥ यस्या दिशो बिभीयाद्यस्माद्वा तां दिशमुल्मुकमुभयतःप्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्या—'भयं मित्रावरुणा मह्य-

सूक्तेन शिष्यमनुमन्त्र्य वत्स्यथेत्यतिसृजेत् ॥ ७ ॥ प्रशंसेयं श्रुतिमूलत्वदर्शनार्था ॥ ८ ॥ वयांसि पक्षिणः । अमनोज्ञा अप्रियाः ॥ ९ ॥ मृगस्यामनोज्ञा वाचः श्रुत्वैतां जपेत् ॥ १० ॥ यस्या

दिशो बिभीयाद्यस्माद्वा बिभीयात्पुरुषाद्व्याघ्रादन्यतो वा तां दिशं मत्युभयतःप्रदीप्तमुल्मुकं मत्य- कृ० अ० ३
स्येदभयमित्यनेन । मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखं न्यञ्चं कुर्यात्संसृष्टमित्यनेन । 'मन्थं

मस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्य मा प्रज्ञातारं मा प्रतिष्ठां नुदन्तं मिथो भिन्दानामुभयं तु मृत्युमिति' 'संसृष्टं धनमुभयं समाकृतमिति' मन्थं न्यञ्चं करोति ॥ ११ ॥ ॥ १० ॥ सर्वतोभयादनज्ञातादष्टा- वाज्याहुतीर्जुहुयात् 'पृथिवी वृता साग्निना वृता तया वृतया वर्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'अन्तरिक्षं वृतं तद्वायुना वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'द्यौर्वृता सादित्येन

न्यञ्चमेव कुर्यान्न मत्यस्येदित्येवमर्थं' पुनर्मन्थग्रहणम् ॥ ११ ॥ इति तृतीये दशमी कण्डिका ॥१०॥
यदि सर्वतो दिग्भ्यो भयमुत्पद्यते । न च ज्ञायतेऽस्मात्पुरुषादिति । तत्सर्वतोभयमज्ञातम् । तस्मा- ॥ ९७ ॥

द्यादि बिभीयात्ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात्पृथिवी वृतेत्याद्यैः। अष्टौ वचनम् ? आज्यभाग-स्विष्टकृन्निवृत्त्यर्थम् । आज्याहुतिवचनं ? परिस्तरणाविकल्पार्थम् ॥ १ ॥ स्वस्त्यात्रेयमिति

वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा'। 'सर्वं वृतं तद्ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा' इति ॥ १ ॥ अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति 'यत

स्वस्तिनोमिमीतामिति सूक्तं सखिलम्। ततः सर्वप्रायश्चित्तादि समापयेत्। एवमतिसृष्टस्य न

कुतश्चिद्भयं भवतीत्युक्तम् । तत्र यद्यमनोज्ञा वाचः शृणुयात्, भयं चोत्पद्यते, तत एवं कुर्यादिति सर्वमिदमतिस्पष्टविषयम् ॥ २ ॥ इति तृतीये एकादशी कण्डिका ॥ ११ ॥

संग्रामे समुपोळ्हे समुपास्थिते राजानं संनाहयेत्पुरोहितो वक्ष्यमाणविधिना ॥ १ ॥ जपेदिति शेषः।

इन्द्र भयामह' इति च सूक्तशेषम् ॥ २ ॥ ॥ ११ ॥ संग्रामे समुपोळ्हे राजानं सन्नाहयेत् ॥ १ ॥ 'आत्वाहार्षमन्तरेधीति' पश्चाद्रथस्यावस्थाय ॥ २ ॥ 'जीमूतस्येव भवति प्रतीकमिति' कवचं प्रयच्छेत् ॥ ३ ॥ उत्तरया धनुः ॥ ४ ॥ उत्तरां वाचयेत् ॥ ५ ॥ स्वयं चतुर्थीं जपेत् ॥ ६ ॥ पञ्चम्येषुधिं प्रयच्छेत् ॥७॥ अभिप्रवर्तमाने

अत्र ऋषभं मा समानानामित्यत्र च पादग्रहणे सूक्तग्रहणं भवतीति ज्ञापितं च प्राक् ॥ २ ॥ अस्य सूक्तस्याद्यया कवचं प्रयच्छेद्राज्ञे ॥ ३ ॥ प्रयच्छेदिति शेषः ॥ ४ ॥ राजानं वाचयेत् ॥ ५ ॥ स्पष्टम् ॥ ६ ॥ इषवो यत्र धीयन्ते स इषुधिः ॥ ७ ॥ यथेष्टां दिशमभिप्रवर्तमाने रथे षष्ठी

जपेत् । एवंविधो मन्त्रो मन्त्रसंज्ञः ॥ ८ ॥ अनुमन्त्रयेतेति शेषः ॥ ९ ॥ इषूनवेक्षमाणं राजानमष्टमीं वाचयेत् ॥ १० ॥ ज्याघातपरित्राणं तलमुच्यते । तलं नह्यमानं राजानं एतां वाचयेत् ॥ ११ ॥ सारथिना सारयमाणं राजानं रथे उपारुह्य अभीवर्तेनेति सूक्तं वाचयेत् । प्रयो वामित्यृचौ च

षष्ठीम् ॥ ८ ॥ सप्तम्याश्वान् ॥ ९ ॥ अष्टमीमिषूनवेक्षमाणं वाचयति ॥ १० ॥ 'अहिरिव भोगैः पर्येति बाहुमिति' तलं नह्यमानम् ॥ ११ ॥ अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति 'प्रयो वां मित्रावरुणेति' च द्वे ॥ १२ ॥ अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः ॥ १३ ॥ 'प्रधारयन्तु मधुनो घृतस्ये'-त्येतत्सौपर्णम् ॥ १४ ॥ सर्वा दिशोऽनुपरियायात् ॥ १५ ॥ आदित्यमौशनसं वावस्थाय प्रयो-

॥ १२ ॥ एनं राजानमन्वीक्षेत एतैः सूक्तैः । 'आशुःशिशान' इति सूक्तमप्रतिरथम् । 'शास इत्थेति' सूक्तं शासः ॥ १३ ॥ सौपर्णसूक्तानां बहुत्वाद्विशेषमाह—एतत्सूक्तं सौपर्णं भवति । नान्यत् ॥ १४ ॥ अथ राजा सर्वा दिशो रथेनानुक्रमेण गच्छेत् ॥ १५ ॥ यस्यां दिश्यादित्यस्तां

दिशमास्थायाहनि चेत्। रात्रौ चेद्यस्यां दिशि शुक्रस्तां दिशं परिगृह्य योधयेद्राजा। न मत्यादित्यं युध्येत। नापि प्रतिशुक्रमित्यर्थः ॥ १६ ॥ राजा ॥ १७ ॥ राजा ॥ १८ ॥ पुरोहितः॥ १९॥ अथवा राज्ञे पुरोधा आचक्षीतैकस्मिन्काले 'इयमृक् तवेति'। यथा आत्वाहार्षमिति सूक्तं पश्चा-

धयेत् ॥ १६ ॥ उपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत् ॥ १७ ॥ 'अवसृष्टा परापते'—तीषून्विसर्जयेत् ॥ १८ ॥ 'यत्र बाणाः संपतन्तीति' युध्यमानेषु जपेत् ॥ १९ ॥ सांशिष्याद्वा सांशिष्याद्वा ॥ २० ॥ ॥ १२ ॥ इत्याश्वलायनगृह्यसूत्रे तृतीयोऽध्यायः ॥ ३ ॥

द्रथस्यावस्थाय ब्रूहि जीमूतस्येति कवचं गृहाणेत्येवमादि। अध्यायान्तलक्षणं द्विर्वचनार्थः ॥ २० ॥ इति तृतीये द्वादशी कण्डिका ॥ १२ ॥ इत्याश्वलायनगृह्यसूत्रविवरणे गार्ग्यनारायणीयायां वृत्तौ तृतीयोऽध्यायः ॥ ३ ॥

१ बोधनम्। २ अर्थःप्रयोजनम्।

॥ श्रीगणेशाय नमः ॥ आहिताग्निश्चेद्व्याधिरुपतपेत्पीडयेत् । तथा सति आहिताग्निरग्निभिः सह ग्रामान्निष्क्रम्य प्राच्यामुदीच्यामपराजितायां वा दिशि उदवस्येत् । गत्वा तत्रैव तावत्तिष्ठेत् । यावदगदो भवति ॥ १ ॥ अग्नयो ग्रामकामा इति ब्रह्मवादिनः प्रवदन्ति । तस्मादुदवस्येत् ॥ २ ॥

॥ श्रीगणेशाय नमः ॥ अथ चतुर्थोऽध्यायः ॥४॥ ॥ ॐ ॥

आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्याम्पराजितायां वा दिश्युदवस्येत् ॥ १ ॥ ग्रामकामा अग्नय इत्युदाहरन्ति ॥ २ ॥ आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदं कुर्युरिति ह विज्ञायते ॥ ३ ॥ अगदः सोमेन

ग्रामकामत्वे सत्यपि किमित्युदवस्येदित्याशङ्क्याह—ग्राममागन्तुमिच्छन्तोऽग्नय एनमाहिताग्निमाशंसन्ते अयमगदो भवेदिति । आशंसमानाश्चैनमगदमरोगं कुर्युः । एवं ह श्रूयते । सर्वत्र श्रुत्याकर्षो गृह्यकर्म समुत्पन्नश्रुतिमूलमिति दर्शनार्थः ॥ ३ ॥ अगदः । अरोगः । सोमादिभिरिष्ट्वा ग्रामं प्रवि-

---

१ केचित्प्रथमान्तं पठन्ति । तदसत् । कर्तुर्व्याधेरुत्तरत्रविद्यमानत्वात् । २ अत्र द्वितीयान्तपाठेन भवितव्यम् । टीकाया तथैव व्याख्यानात् । अथवोपपूर्वस्य तपेः पीडाप्राप्तिरर्थः । ३ बहुव्रीहिरयम् । ४ ज्ञापनार्थः ।

शेत् । अथ कः सोमः कार्यः ? । अग्निष्टोमः । कुतः । सर्वसोमानां प्रकृतित्वात् । उक्तं च । 'स एव होतुः प्रकृतिभाव' इति । कः पशुः कार्यः ? । ऐन्द्राग्नः । निरूढानां प्रकृतित्वात् । इष्टीनां पौर्णमासातिदेशोऽस्ति । सर्वत्र देवतागमे नित्यानामपाय इति ब्रुवतानागमेऽनपाय इत्यपि दर्शितं भवति । तेनेष्टौ पशौ च प्रकृता एव देवता इति सिद्धम् । तर्हीष्टौ तिस्रः प्रसज्येरन् । अग्नीषो-

**पशुनेष्ट्येष्ट्वावस्येत् ॥ ४ ॥ अनिष्ट्वा वा ॥ ५ ॥ संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा ॥ ६ ॥ दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ॥ ७ ॥ यावानुद्बाहुकः**

मयोः स्थान इन्द्राग्नी इति ब्रुवताग्नेः स्थिरत्वं दर्शितम् । तेनाग्निरेव केवलो भवति । नान्ये द्वे । अत्र पूर्वालाभ उत्तरोत्तरं कर्मेत्युपदिशन्ति ॥४॥ ग्रामं प्रविशेत् ॥ ५ ॥ अगदे सत्युक्तम् । अथ संस्थिते मृते सत्युच्यते । भूम्येकदेशं खानयेत् । आग्नेय्यां नैर्ऋत्यां वा ॥ ६ ॥ खातं दक्षिणाप्रवणं खानयेत् । आग्नेयीप्रवणं वा ॥ ७ ॥ यावत्परिमाण ऊर्ध्वबाहुकः पुरुषस्तावत्परिमाणं दीर्घं भवति खातम्

१ खनिमित्यर्थः ।

॥८॥ पञ्चारत्निमात्रं व्याम भवति । तिर्यग्वा तावन्मात्रं भवेत् ॥९॥ द्वादशाङ्गुलो वितस्तिः । ताव-न्मात्रमधस्तः कुर्यात् ॥ १० ॥ खातलक्षणमुक्त्वा तस्य देशमाह—श्मशानग्रहणेनात्र श्मशानद्वयं गृह्यते । कुतः । उत्तरत्र विशेषणाद्दहनस्य लक्षणं श्मशानस्येति । दहनदेशश्च श्मशानं । संचित्य यत्रास्थीनि निधीयन्ते तच्च श्मशानम् । तद्द्वयं सर्वत आकाशं भवेत् । अभित आकाशमिति ब्रुवता

पुरुषस्तावदायामं ॥ ८ ॥ व्याममात्रं तिर्यक् ॥[1] ९ ॥ वितस्त्यवाक् ॥ १० ॥ अभित आकाशं श्मशानं ॥ ११ ॥ बहुलौषधिकं ॥ १२ ॥ कण्टकिक्षीरिणास्त्विवति यथोक्तं पुरस्तात् ॥ १३ ॥ यत्र सर्वत आपः

मध्ये तदनाकाशं भवेदिति ज्ञाप्यते ॥ ११ ॥ तदुभयं बहुलौषधिकं भवेत् ॥ १२ ॥ कण्टकिक्षीरि-णास्त्विवति यथोक्तं वास्तुपरीक्षायां तथेहापि कुर्यात् । कण्टक्यादीनि षडुद्वासयेत् । उभयश्मशा-नेपीत्यर्थः ॥ १३ ॥ यस्मिन्देशे सर्वत्र आपो गच्छन्ति । एतदादहनश्मशानस्य लक्षणं । नास्थि-

---

१ निष्कनिष्ठेन मुष्टिना युतो हस्तोऽरत्निः ।

निधानस्य श्मशानस्य। पूर्वाणि तूभयस्येत्युक्तम्। सर्वतो निम्नो मध्यत उच्छ्रितो यो देशः पूर्वोक्तलक्षणयुक्तश्च भवेत्तत्र खानयेदित्यर्थः॥ १४॥ केशश्मश्रुलोमनखानीति यदुक्तं पुरस्तात्सूत्रस्य[1] षष्ठाध्याये दीक्षितमरणे। तदिहापि कुर्यादित्यर्थः। तत्रैवमुक्तम्। 'संस्थिते तीर्थेन निष्क्रुष्यावभृथे प्रेतालंकारान्कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति'। नलदमभियुक्ते[2]

**प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य॥ १४॥ केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात्॥ १५॥ द्विगुल्फं बर्हिराज्यं च॥ १६॥**

भ्यो विज्ञेयम्। निष्पुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्ति अहतस्य वाससः पाशतः पादमात्रमविच्छिद्य प्रोर्णुवन्ति प्राग्दशेनाविःपादम्। मूलं पाशः। अग्रं दशा। प्राक्शिरसं प्रेतं शाययित्वा प्रेतं प्रोर्णुयुः। वासोऽग्रं पादतो यथा भवेदित्यर्थः। अवच्छेदं प्रेतस्य पुत्रा अमात्याः कुर्वीरन्निति। संगृह्णीयुरित्यर्थः॥ १५॥ द्विगुल्फं प्रभूतं बर्हिराज्यं च। उपकल्पयेदिति शेषः[3]॥ १६॥

---

१ श्रौतसूत्रस्येत्यर्थः। २ शिष्टेभ्यः। ३ वाक्यैकदेश।

अत्र प्रेतकर्मणि दधनि सर्पिरानयन्ति। एतत्पृषदाज्यं[1] भवति । तच्च बहु कल्पयेत्। आसेचनवन्ति पृषदाज्यस्येत्यत्रैतद्गृह्णीयात्। अत्रग्रहणं? प्रेतकर्मणि सर्वत्रैतदेव पृषदाज्यं भवतीत्येवमर्थम्। तेन निष्पुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्तीत्यत्रापि अस्यैव पृषदाज्यस्य ग्रहणं सिद्धम्। आनयन्तीति बहुवचनं? कर्तुरनियमार्थम्। पित्र्यमिति पितृकर्मसंबन्धि एतत् पित्र्यं[2] पृषदाज्यमित्यर्थः। एवं ब्रुवता प्रेतकर्मापि पितृकर्मेत्युक्तं भवति । तेनास्मिन्कर्मणि प्राग्दक्षिणाभिमुखत्वं[3] कर्मणां

**दधन्यत्र सर्पिरानयन्त्येतत्पित्र्यं पृषदाज्यम् ॥ १७॥ ॥ १ ॥ अथैतां**

कर्तॄणां च सिद्धम्। प्राचीनावीतित्वं च भगवता बौधायनेनाप्युक्तम्। किमु खलु प्राचीनावीतिना पितृमेधः कार्यो यज्ञोपवीतिना वेति । प्राचीनावीतिनेत्येव ब्रूयात्। 'पितॄणां वा एष मेधो देवानां वा अन्ये मेधा भवन्ति' 'निवीतिनस्त्वेवैनं वहेयुः' इति । आग्नेयीं दिशं प्रस्तुत्य 'एषा हि पितॄणां प्राची दिगिति विज्ञायते' इति चोक्तम् ॥१७॥ इति चतुर्थे प्रथमा कण्डिका॥ १ ॥ यस्यां

१ पृषदाज्य सदध्याज्ये इत्यमरः। २ वाय्वृतुपित्रुषसो यदिति शैषिको यत्। ३ आग्नेयी।

दिशि भूमिभागः खानितस्तां दिशं प्रसग्नीन्नयन्ति । ततो यज्ञपात्राणि च नयन्ति । बान्धवा इति शेषः ॥ १ ॥ यज्ञपात्राणामन्वश्चं पृष्ठभागतः प्रेतं नयन्ति । अयुजो विषमाः । अमिथुनाः। स्त्रियः पुरुषाश्च न मिश्राः स्युरित्यर्थः । प्रवयसः । प्रगतवयसो वृद्धा इत्यर्थः । उपदेशादेव पृष्ठतो भावे सिद्धे अन्वश्चग्रहणं ? पूर्वत्रानियमज्ञापनार्थम् । तेन अग्नयो वा प्रथमं नीयेरन्यज्ञपात्राणि वेत्य-

**दि[1]शमग्नीन्नयन्ति यज्ञपात्राणि च ॥ १ ॥ अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः ॥ २ ॥ पीठचक्रेण गोयुक्तेनेत्येके ॥ ३ ॥ अनुस्तरणीम्**

नियमः सिद्धः ॥ २ ॥ एके गोयुक्तेन पीठचक्रेण शकटादिना प्रेतनयनं कार्यमित्याहुः ॥ ३ ॥ अत्राप्येकग्रहणं संबध्यते । मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च । तेनानुस्तरणी अनित्या । कात्यायनेनाप्युक्तम् । 'न वास्थिसंदेहादिति' । अनुस्तरणी कृता चेदस्थिसंचयनकाले कानि यजमानस्यास्थीनि कानि वानुस्तरण्या इति संदेहः स्यात् । तस्मान्न भवतीत्यर्थः । प्रेतमनुस्तर्यते

१ अकथित चेति कर्मत्वाद् द्वितीया । दिशं दिशीत्यर्थः ।

या स्त्री पशुः सानुस्तरणी। तामेक इच्छन्ति ॥ ४ ॥ पशुविशेषमाह—तामनुस्तरणीं गां कुर्यात् ॥ ५ ॥ अजां वा येन केनचिदेकेन वर्णेन युक्तां कुर्यात् ॥ ६ ॥ इच्छन्ति ॥ ७ ॥ पशोः सव्ये बाहौ रज्जुं बध्वा अनु प्रेतस्य पृष्ठतः संकालयन्ति नयन्ति बान्धवाः ॥ ८ ॥ गच्छेयुरिति शेषः। प्रेतस्य पृष्ठतोऽमात्या बान्धवा अधो निवीतं येषां ते अधोनिवीताः। अनुपरिवाससः। यज्ञोपवीता-

॥ ४ ॥ गाम् ॥ ५ ॥ अजां वैकवर्णाम् ॥ ६ ॥ कृष्णामेके ॥ ७ ॥ सव्ये बाहू बध्वानु संकालयन्ति ॥ ८ ॥ अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥ ९ ॥ प्राप्यैवं भूमिभागं कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन्प्रोक्षत्य-

नि चाधः कृत्वेत्यर्थः। प्रवृत्तशिखा विमुक्तकेशाः। ज्येष्ठप्रथमा इत्युच्यमाने सर्वेषां यो ज्येष्ठः स प्रथमः स्यादितरेषामनियमः स्यात्। तस्माद्यो यो ज्येष्ठः स स प्रथमो गच्छेत्। यो यः कनिष्ठः स स पृष्ठतो गच्छेत् इत्यानुपूर्वीसिध्यर्थमुभयवचनम्। एवंभूता गच्छेयुः ॥ ९ ॥ एवं सर्वे भूमिभागं प्राप्य ततो दहनस्य कर्ता उदकेन शमीशाखया त्रिरप्रदक्षिणमायतनं परिव्रजन्प्रोक्षति।

 अपेतवीतेसनया । मन्त्रावृत्तिरुक्ता । आयतनं खातमित्यर्थः । अन्ये गर्तोदकेनेति पठन्ति । 
 अयमर्थः । खातखननकाले उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्तं खात्वा तत्रापो निषिच्यावकां शीपालं चावधाय तदुदकेनेति । कर्ता तु स्मृतिगम्यः ॥ १० ॥ दक्षिणपूर्वे देशे खातस्यान्ते एकदेशे आहवनीयं निदध्यात् । खाताद्बहिरित्येके । उत्तरत्राप्येवं ज्ञेयम् ॥ ११ ॥ उद्धृतान्ते निद-

'पेतवी तवि च सर्पतात' इति ॥ १० ॥ दक्षिणपूर्व उद्धृतान्त आहवनीयं निदधाति ॥ ११ ॥ उत्तरपश्चिमे गार्हपत्यम् ॥ १२ ॥ दक्षिणपश्चिमे दक्षिणम् ॥ १३ ॥ अथैनमन्तर्वेदीध्माचितिं चिनोति यो

धातीति वर्तते ॥ १२ ॥ द्वयं वर्तते ॥१३ ॥ अथशब्दः? कर्मान्तरास्तित्वज्ञापनार्थः । तेन प्रणीता अस्मिन्काले चमसेन प्रणयेत् । अनुमन्त्रणदर्शनात् । अन्यच्च मन्त्रं नेति वक्ष्यामः । अपि चास्मिन्काले खाते हिरण्यशकलं निधाय तिलानवकीर्य तत इध्मचितिं चिनुयादिष्टित्वात् । अग्नीनां मध्ये खाते इध्मभूतां चितिं दहनसमर्थां चिनोति कुशलो यो जानातीति कर्तुरनियमः । एनमिति 

वचनम् ? इदानीमेनं चिनुयादुपरिष्टाच्चार्थमाप्तमपि कुशल एव चिनुयादित्येवमर्थम् ॥ १४ ॥ अथ कर्ता तस्मिंश्चितौ बर्हिरास्तृणाति[1] । ततः कृष्णाजिनं चोर्ध्वलोमास्तृणाति कर्तैव । क्त्वाप्रत्यये पूर्वकालतामात्रमेव विवक्षितं न समानकर्तृत्वमिति साधितं प्राक् । अथ तस्मिन्कृष्णाजिन उत्तरेण[2] गार्हपत्यं प्रेतं नीत्वा तत आहवनीयमभिमुखशिरसं प्रेतं संवेशयन्ति बान्धवाः ॥ १५ ॥

जानाति ॥ १४ ॥ तस्मिन्बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन्प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाहवनीयमभिमुखशिरसम् ॥ १५ ॥ उत्तरतः पत्नीम् ॥१६॥ धनुश्च क्षत्रियाय ॥१७॥ तामुत्थापये-

ततः प्रेतस्योत्तरतः[3] प्रेतस्य पत्नीं संवेशयन्ति । शाययन्तीत्यर्थः । चितावेव उपवेशय इति लिङ्गात् । एतावद्वर्णत्रयस्यापि समानम् ॥ १६ ॥ प्रेतः क्षत्रियश्चेद्धनुरप्युत्तरतः संवेशयन्ति ॥ १७ ॥ अथ पत्नीमुत्थापयेत् । कः । देवरः पतिस्थानीयः । स पतिस्थानीय इत्युच्यते । अनेन ज्ञायते 'पतिक-

१ स्तृञ् आच्छादने । २ एनबन्तमेतत् । अतएव गार्हपत्यशब्दाद् द्वितीया । ३ षष्ठ्यतसर्थप्रत्ययेन इति षष्ठी ।

त्रैकं कर्म पुंसवनादि पत्यसंभवे देवरः कुर्यादिति'। अन्तेवासी शिष्यः। स वा। यो बहुकालं दास्यं कृत्वा वृद्धोऽभूत्स वा ॥ १८ ॥ जरद्दासे उत्थापयितरि कर्ता मन्त्रं ब्रूयात्। अन्यदोत्थापयितैव ब्रूयात् ॥ १९ ॥ धनुरित्यृचा धनुरुत्थापयेदपनयेदित्यर्थः। कः? । देवरादिः ॥ २० ॥

देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्वनार्यभि जीवलोकमिति ॥१८॥ कर्ता वृषले जपेत् ॥१९॥ 'धनुर्हस्तादाददानो मृतस्येति' धनुः ॥ २० ॥ उक्तं वृषले ॥ २१ ॥ अधिज्यं कृत्वा संचितिमचित्वा संशी-

कर्ता वृषले जपेदित्यर्थः ॥ २१ ॥ अर्थप्राप्तं यत्प्रेतस्योपरि संचयनं तस्मिन्काले संचितेः प्रागधिज्यं कृत्वा धनुरुपरिज्यं कृत्वा संशीर्य भङ्क्त्वा क्षिपेत्। प्रेतस्योत्तरताश्चितावेवोपरि। संचितिस्तु उरसि होमानन्तरं कार्या। धनुःसंवेशनं धनुरपनयनं धनुरनुप्रहरणमिति क्षत्रियस्य विशेषः।

1 अस्य क्षिपेदित्यनेन संबन्धः।

अन्यत्सर्वं त्रयाणां समानम् ॥ २२ ॥ इति चतुर्थे द्वितीया कण्डिका ॥ २ ॥ अथशब्दोऽस्मिन्काले कर्मान्तरास्तित्वज्ञापनार्थः । तेन हिरण्यशकलैः प्रेतस्य सप्तच्छिद्राणि शीर्षण्यान्यपिधत्ते[1] । आस्यं नासिकाद्वयमक्षिद्वयं कर्णद्वयमिति । घृतसिक्तांश्च तिलान्प्रेतेऽवकिरेत् । ततः पात्रयोजनम् । एतानीति विद्यमानानि प्राकृतानि वैकृतानि च निर्दिश्यन्ते । तत्र प्राकृतानां पात्राणां यावज्जीवं धारणमस्ति । अग्निवत्सर्वकर्मशेषत्वात् । अग्न्याधान उत्पन्नानि प्राकृतानि । विकृतौ तु

## यानुप्रहरेत् ॥२२॥ ॥२॥ अथैतानि पात्राणि योजयेत् ॥१॥ दक्षिणे

वरुणप्रघासादावुत्पन्नानां कर्मान्त उत्सर्गः । विकृतिमध्ये मृतश्चेत्तेषामपि योजनं कार्यम् । विनियोगविधानसामर्थ्यादेव वैकृतानामपि ग्रावादीनां धारणं कार्यमित्याशङ्का न कार्या । विधानस्य कर्ममध्ये कृतार्थत्वात् । प्राकृतानां धारणे कारणमन्यदुक्तम् । तेन 'यावन्ति पात्राणि विद्यन्ते प्राकृतानि वैकृतानि च । तावतां सर्वेषामेव योजनं कार्यम् । न पुनर्विनियोगविधानसामर्थ्याद्धारणं कार्यम् । अन्यतो धृतानां योजनमेव विधीयत' इति सिद्धम् ॥ १ ॥ योजयेदिति सर्वत्र संबन्ध-

---

१ अपिधत्ते इत्येक पदम् ।

नीयम् । वरुणप्रघासादौ मृतश्चेज्जुहूद्वयमपि योजनीयम् । एकवचनं तु दशापवित्रेण ग्रहं संमार्ष्टी-तिवदविवक्षितम् ॥ २ ॥ एकवचनं पूर्ववत् ॥ ३ ॥ ययाग्निहोत्रं हूयते साग्निहोत्रहवणी ॥ ४ ॥ सोममध्ये मृतश्चेत् । तर्हि दन्तेषु ग्राव्णो योजयेत् । अन्यत्र त्ववभृथे सज्यन्ते । अत एव ज्ञायते 'सोमयाजिनोऽग्निचितश्चैतदेव संचयनान्तं विधानं नाधिकमिति'। यत्तु परैरुक्तं । 'पेषणान्तं

**हस्ते जुहूम् ॥ २ ॥ सव्य उपभृतम् ॥ ३ ॥ दक्षिणे पार्श्वे स्फ्यं सव्येऽग्निहोत्रहवणीम् ॥ ४ ॥ उरसि ध्रुवां शिरसि कपालानि दत्सु ग्राव्णः ॥ ५ ॥ नासिकयोः स्रुवौ ॥ ६ ॥ भित्त्वा चैकम् ॥ ७॥**

सोमयाजिनः' 'चित्यन्तमग्निचितः' इति तदाचार्यस्य नेष्टम् । अत एव न प्रदर्शितम् । कात्यायनादिभिरपि तन्न विहितमेव । न बह्वृचैर्वाजसनेयिभिर्वा पुनर्दहनं लोष्टचितिर्वा स्वयमाचार्यते । बह्वल्पं वा स्वगृह्योक्तमिति वचनात् । तन्न कार्यम् ॥ ५ ॥ द्विवचनं विकृत्यपेक्षमध्वर्युवशादग्निहोत्रार्थं वा द्वितीयम् ॥ ६ ॥ एकश्चेत्स्रुवस्तथा सति तं स्रुवं भित्त्वा नासिकाद्वये योजयेत् ॥ ७ ॥

१ तदित्यनेन पूर्वस्य यत्परैरुक्तमित्यस्य आक्षेप. ।

द्विवचनं पूर्ववत् ॥ ८ ॥ पूर्ववदिति ॥ ९ ॥ यस्यां हवींष्यासाद्यन्ते सा पात्री ॥ १० ॥ यस्मिन्नुपहापनार्थं अवत्ता इडा धीयते स चमसः समवत्तधानः । तं चोदरे योजयेत् ॥ ११ ॥ ऊर्वोरूर्ध्वप्रदेश उपस्थः ॥ १२ ॥ यथासंख्यम् ॥ १३ ॥ इदमपि द्विवचनं विकृत्यपेक्षम् ॥ १४ ॥

**कर्णयोः प्राशित्रहरणे ॥ ८ ॥ भित्त्वा चैकम् ॥ ९ ॥ उदरे पात्रीम् ॥ १० ॥ समवत्तधानं च चमसम् ॥ ११ ॥ उपस्थे शम्याम् ॥ १२ ॥ अरणीमूर्वोरुलूखलमुसले जङ्घयोः ॥ १३ ॥ पादयोः शूर्पे ॥ १४ ॥ भित्त्वा चैकम् ॥ १५ ॥ आसेचनवन्ति पृषदाज्यस्य[1] पूरयन्ति ॥ १६ ॥**

एकं चेच्छूर्पं छित्त्वा पादयोर्योजयेत् । अनिर्दिष्टानि तु पात्राण्यनियतकालान्यनियतदेशानि च भवन्ति ॥ १५ ॥ यानि पात्राण्यासेचनवन्ति बिलवन्ति । पृषदाज्यधारणसमर्थानीत्यर्थः । तानि पृषदाज्यस्य पूरयन्ति । बहुवचनं ? कर्तुरनियमार्थम् । पूरयित्वा पूरयित्वा योजयेत् । कुत एतत् ?

---

१ शेषे षष्ठीयम् । पृषदाज्येनेत्यर्थ ।

धर्मोत्सादने तथा दृष्टत्वात् ॥ १६ ॥ दृषदुपले पुत्रोऽमा कुर्वीत । आत्मन उपयोगार्थं संगृह्णीया-दित्यर्थः । तेन गृहान्नानयेदिति ॥१७॥ संगृह्णीयात् । अन्यानि सर्वाणि यज्ञायुधानि योजयेत् ॥१८॥ वपामुत्खिद्य प्रेतस्य शिरो मुखं च प्रच्छादयेत्। अग्नेरित्यृचा । उत्खिद्यवचनम् ? उत्खेदनमेव कार्यम्।

अमा[1] पुत्रो दृषदुपले कुर्वीत ॥ १७ ॥ लौहायसं च कौलालम् ॥ १८ ॥ अनुस्तरण्या वपामुत्खिद्य शिरो मुखं प्रच्छादये—'दग्नेर्वर्मप-रिगोभिर्व्ययस्वेति' ॥ १९ ॥ वृक्का उद्धृत्य पाण्योरादध्या—'दतिद्रवसा-रमेयौ श्वानाविति' दक्षिणे दक्षिणं सव्ये सव्यम् ॥ २० ॥ हृदये

नान्यत्पाशुकं तन्त्रमित्येवमर्थम् । संज्ञपनं त्वर्थप्राप्तम् ॥ १९ ॥ ततो वृक्का उद्धृत्य प्रेतस्य पाण्यो-रादध्यात् । अतीत्यृचा । दक्षिणे पाणौ दक्षिणं वृक्कम् । सव्ये सव्यम् । सकृन्मन्त्रः ॥ २० ॥ हृदय-

१ अमान्तिकसहार्थयोः इति कोशः ।

मुद्धृत्य हृदय आदध्यात्तूष्णीम् ॥ २१ ॥ एके पिण्डौ च पाण्योरादध्यादित्याहुः । एवं वृक्कयोः पिण्ड्योश्च तेषां मते समुच्चयः ॥ २२ ॥ एके वृक्काभावे पिण्ड्यावादध्यादित्याहुः । अनुस्तरणी नित्या चेद्वृक्कापचारो नोपपद्यते । तस्मादनित्येति मन्यामहे । अनुस्तरण्यपचार इति वक्तव्ये वृक्कापचार इति वचनं? पिण्डयोर्वृक्काधानस्थान आधानासिध्यर्थम् । तेन पाण्योरिति सिद्धम् । अथ किंद्रव्यौ पिण्ड्यौ ? । अन्नपिण्ड्यावित्येके । सक्तुपिण्ड्यावित्यपरे । उक्तंच कात्यायनेन ।

हृदयम् ॥ २१ ॥ पिण्डयौ चैके ॥२२॥ वृक्कापचार इत्येके ॥ २३ ॥

सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्येममग्ने चमसं माविजिह्वर

अथ यदानुस्तरणी नास्ति । तदा सक्तुहवींषि तत्स्थाने कुर्यात् । पिण्ड्यग्रहणमुपलक्षणम् । तेन वपादि सर्वं पशुना कार्यं सक्तुभिरेव निर्वर्तयेदित्येके । अत्र पक्षे वपास्थानेऽपूपः । वृक्कास्थाने पिण्ड्यौ । अन्यान्यपि तत्तदङ्गसदृशानि सक्तुभिरेव कार्याणि ॥ २३ ॥ अनुस्तरण्याश्चर्म पृथक्कृत्य सर्वामिति वचनादखण्डितामेव यथाङ्गमिति प्रेतस्य यद्यदङ्गं पादादि तस्मिंस्तस्मिन्नङ्गे पशोरपि

तच्चदङ्गं यथा भवेत्तथा विनिक्षिप्य, तस्या एव चर्मणा प्रच्छाद्य, तत इममित्यृचा पूर्णं चमसमनु मन्त्रयेत् । यः पूर्वनिहितः ।। २४ ।। सव्यमिति दक्षिणनिवृत्त्यर्थम् । तज्जानु निपात्य दक्षिणाग्ना-वाज्याहुतीर्जुहुयाच्चतुर्भिः। जानुनिपातनमुपस्थोत्थानत्वाविरोधेन कर्तव्यं सर्वत्र । न्यग्भावे शवादिना गृह्यकारेण दोषस्योक्तत्वात् । आज्याहुतिवचनं ? तन्त्रानिवृत्त्यर्थमिष्यते । होमार्थमन्यः स्रुवः कार्यः ।

इति प्रणीताप्रणयनमनुमन्त्रयते ॥ २४ ॥ सव्यं जान्वाच्य, दक्षिणाग्ना-वाज्याहुतीर्जुहुया—'दग्नये स्वाहा' 'सोमाय स्वाहा' 'लोकाय स्वाहा'-'ऽनुमतये स्वाहेति' ॥ २५ ॥ पञ्चमीमुरसि प्रेतस्याऽ' स्माद्वै त्वमजा-

पूर्वस्य योजितत्वात् ॥ २५ ॥ प्रेतस्य हृदये पञ्चमीं आहुतिं जुहुयात् । अस्मादिति मन्त्रेण । पञ्चमीमितिवचनम् ? इमामपि जान्वाच्य, जुहुयादित्येवमर्थम् । प्रेतग्रहणमनर्थकं पश्यामः । यथा-दक्षिणे हस्ते जुहूमित्युक्ते प्रेतस्येति गम्यते । प्रेताधिकारात् । एवमिहापि गम्यतैव । उच्यते । प्रेत ग्रहणं सर्वस्यापि प्रेतस्येमां पञ्चमीं जुहुयान्नाहिताग्नेरेवेत्येवमर्थम् । एतदुक्तं भवति 'यस्य यस्य

प्रेतस्य स्मृतौ दहनं विहितं तं तं प्रेतमनेन विधिना दहेदिति'। विशेषस्तूत्तरत्र वक्ष्यामः। असावित्यस्य स्थाने प्रेतस्य नाम संबुद्ध्या निर्दिशेत् ॥ २८ ॥ इति चतुर्थे तृतीया कण्डिका ॥ ३ ॥ अथ परिकर्मिणः कर्ता प्रेष्यति युगपदेव सर्वानग्नीन्प्रज्वालयतेति। ते च तथा कुर्युः। ॥ १ ॥ अत्र विज्ञापनमाह—आहवनीयश्चेदाहिताग्निशरीरं प्रथमं प्राप्नुयात्स्वर्गे लोक एनमाहिताग्निं

यथा अयं त्वदधिजायतामसौ स्वर्गाय लोकाय स्वाहेति' ॥ २६ ॥
॥ ३ ॥ प्रेष्यति युगपदग्नीन्प्रज्वालयतेति ॥ १ ॥ आहवनीयश्चेत्पूर्वं
प्राप्नुयात्स्वर्गलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मि-
न्निति पुत्रः ॥ २ ॥ गार्हपत्यश्चेत्पूर्वं प्राप्नुयादन्तरिक्षलोक एनं प्राप-

प्रापयेदिति जानीयात्। रात्स्यति ऋद्धिमाप्स्यति। असावाहिताग्निरमुत्र स्वर्गे। एवमयं पुत्रोऽस्मि-न्मनुष्यलोक ऋद्धिं प्राप्स्यतीति विद्यात्। एवमुत्तरत्रापि योज्यम्। अनेनानुष्ठितस्य कर्मणः फल-विज्ञानमुक्तम्। न तु पूर्वप्राप्तेरिदं फलम् ॥ २ ॥ गार्हपत्यस्य पूर्वप्राप्तावाहिताग्निरन्तरिक्षलोकं

प्राप्य तत्र रात्स्यति । पुत्रस्त्वस्मिन्निति विद्यात् ॥ ३ ॥ दक्षिणाग्नेः पूर्वप्राप्तौ क्षिप्रमेवोत्पद्य बह्वन्नं प्राप्नोति मनुष्यलोके आहिताग्निः । पुत्रश्चास्मिँल्लोके बह्वन्नो भवतीति विद्यात् ॥ ४ ॥ यदि सर्वेऽग्नयो युगपच्छरीरं प्राप्नुयुः । तदाहिताग्नेर्विशिष्टस्थान अत्युत्कृष्टामृद्धिं वदन्ति ब्रह्मवादिनः । पुत्राणां चास्मिँल्लोके परामृद्धिं वदन्ति ॥ ५ ॥ तंग्रहणं ? तं प्रति कर्मान्तरमप्यस्तीति ज्ञापनार्थम् ।

दिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ३ ॥ दक्षिणाग्निश्चेत्पूर्वं प्राप्नुयान्मनुष्यलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ४ ॥ युगपत्प्राप्तौ परामृद्धिं वदन्ति ॥५॥ तं दह्यमानमनुमन्त्रयते 'प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति' समानम्

तेन प्रैषं दत्वा सिग्वातादिलौकिकं कुर्यात् । दह्यमानं प्रेतमनुमन्त्रयते । प्रेहि प्रेहि पथिभिः पूर्व्यैरिति समानं प्रागुक्तेनानुद्रवणेन प्रेहि प्रेहि पथिभिरिति पञ्चानां तृतीयमुद्धरेत् । मैनमग्ने विदह इति षट् । पूषा त्वेतश्च्यावयतु प्रविद्वानिति चतस्रः । उपसर्पेति चतस्रः । सोम एकेभ्य इति पञ्च । उरूणसावसुतृपेति चतुर्विंशति ऋचोऽनुद्रवण उक्ताः । अत्रापि तावतीभिरनुमन्त्रयीतेत्यर्थः

ततः प्रविशेरन् ॥ १३ ॥ एतस्यां रात्र्यामन्नं न पचेरन्नमासाः ॥ १४ ॥ क्रीतेन वा उत्पन्नेन वा वर्तेरन् । केचिदेतत्सूत्रं न पठन्ति ॥ १५ ॥ सर्वेऽमासाः ॥ १६ ॥ मातापितरौ यश्चोपनीय कृत्स्नं वेदमध्यापयति । एते महागुरवः । एतेषु मृतेषु द्वादशरात्रं वा दानाध्ययने वर्जयेरन् । दशाहं वेति वक्ष्यमाणेन सह विकल्पः । नात्राशौचं विधीयते । अपि तु दानाध्ययनवर्जनमात्रम् ।

**मश्मानमग्निं गोमयमक्षतांस्तैलमप उपस्पृशन्ति ॥ १३ ॥ नैतस्यां रात्र्यामन्नं पचेरन् ॥ १४ ॥ क्रीतोत्पन्नेन वा वर्तेरन् ॥ १५ ॥ त्रिरात्रमक्षारलवणाशिनः स्युः ॥ १६ ॥ द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन् ॥ १७ ॥ दशाहं सपिण्डेषु ॥ १८ ॥ गुरौ चासपिण्डे ॥ १९ ॥**

आशौचं तु स्मृत्युक्तं द्रष्टव्यं 'दशाहं शावमाशौचम्' इत्यादि ॥ १७ ॥ मृतेषु दानाध्ययने वर्जयेरन्निति सर्वत्र संबन्धनीयम् ॥ १८ ॥ उपनीय कृत्स्नवेदाध्यापके गुरावसपिण्डेऽपि दशाहं द्वादशाहं वेति पूर्वेण सह विकल्पः । मातापित्रोस्तु सपिण्डत्वाद्दशाहं द्वादशाहं वा विकल्पः ॥ १९ ॥

दशाहमेव ॥ २० ॥ एकदेशाध्यापकेष्वित्यर्थः ॥ २१ ॥ त्रिरात्रमेव समानोदक इत्यर्थः । 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने' ॥ २२ ॥ त्रिरात्रमेव ॥ २३ ॥ त्रिरात्रमेव ॥ २४ ॥ अपरिजातो नाम संपूर्णो गर्भः । तत्र च त्रिरात्रमेव ॥ २५ ॥ सहाध्यायी सब्रह्मचारी । तस्मिन्मृते एकाहं वर्जयेत् ॥ २६ ॥ समानग्रामवासिनि च श्रोत्रिये मृत

अप्रत्तासु च स्त्रीषु ॥ २० ॥ त्रिरात्रमितरेष्वाचार्येषु ॥ २१ ॥ ज्ञातौ चासपिण्डे ॥ २२ ॥ प्रत्तासु च स्त्रीषु ॥ २३ ॥ अदन्तजाते ॥ २४ ॥ अपरिजाते च ॥ २५ ॥ एकाहं सब्रह्मचारिणि ॥ २६ ॥ समानग्रामीये च श्रोत्रिये ॥ २७ ॥

एकाहं वर्जयेत् । अनाशौचनिमित्तेषु गुर्वादिषु श्रोत्रियपर्यन्तेषु मृतेष्वध्ययनमात्रं वर्जयितव्यं न दानमित्युपदेशः । अत्रान्ये व्याचख्युः । त्रिरात्रमक्षारलवणाशिनः स्युः । महागुरुषु तु द्वादशरात्रं वा अक्षारलवणाशिनः स्युरिति विकल्पः । 'दानाध्ययने वर्जयेरन्दशाहं सापिण्डेषु' इत्यनेन प्रकरणेनाशौचं विधीयते । आशौचादिसंक्षेपः । तेन स्मृतेराशौचविस्तारो विज्ञेय इति । 'धर्मशास्त्रेषु

॥ ६ ॥ प्रशंसेयम् । सा च विदुषा कर्म कर्तव्यमिति ज्ञापयितुम् । न्यायविदश्च ज्ञात्वा चानुष्ठानमित्याहुः ॥ ७ ॥ जानुमात्रे गर्ते एतावत्कालमातिवाहिकं शरीरमास्थायाहिताग्निः संस्कारं प्रतीक्षते । ततोऽस्मिँल्लोके दग्धः सन्नवटान्निष्क्रम्य धूमेन सह स्वर्गमेतीति श्रूयते ॥ ८ ॥

॥ ६ ॥ स एवंविदा दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ७ ॥ उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्तं खात्वाऽवकां शीपालमित्यवधापयेत्ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ८ ॥ 'इमे जीवा विमृतैराववृत्रन्निति' सव्यावृतो व्रजन्त्यनीक्षमाणाः ॥ ९ ॥ यत्रोदकमवहद्भवति

अथ इमे इत्यृचं कर्ता जपित्वा, ततः सर्वे सव्यावृतो भूत्वा, गच्छेयुः पृष्ठतोऽनीक्षमाणाः ॥ ९ ॥ ततो यत्रोदकमवहत्स्थिरं भवति । तत्प्रतिगच्छन्ति । तत्प्राप्य सकृन्निमज्जन्ति । सकृदवगाहन्त इत्यर्थः । तत एकाञ्जलिमुत्सृजन्ति समानोदकाः । सर्वे एकैकमञ्जलिमुत्सृजेयुरित्यर्थः । पुरुषाः

स्त्रियश्च । तस्य गोत्रं नाम गृहीत्वा । प्रेतस्य गोत्रं नाम च गृहीत्वा । काश्यपगोत्र देवदत्त एतत्ते उदकमित्येवमुक्त्वा सिञ्चन्ति दक्षिणामुखाः । 'अयुग्मा दक्षिणामुखा' इति स्मृतेः । निनयनदेशस्तु स्मृतितोऽवगन्तव्यः । तत उदकादुत्तीर्यान्यानि वासांसि परिदध्युः । ततः सकृदार्द्राणि पीडयन्ति । अभ्यासो न कार्यः । तत उदगग्राणि वासांसि विसृजन्ति शोषणार्थम् । ततस्तत्रै-

तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम च गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेनान्यापीड्योदग्दशानि विसृज्यासत आ नक्षत्रदर्शनात् ॥ १०॥ आदित्यस्य वा दृश्यमाने प्रविशेयुः ॥ ११ ॥ कनिष्ठप्रथमा ज्येष्ठजघन्याः ॥ १२ ॥ प्राप्यागार-

वासते । आ नक्षत्रदर्शनात् । ततो नक्षत्रेषु दृश्यमानेषु गृहं प्रविशेयुः सर्वेऽमात्याः ॥ १० ॥ आदित्यस्य वा दृश्यमाने कस्मिंश्चिन्मण्डले रश्मिवर्जिते प्रविशेरन् । अस्मिन्पक्षे आ मण्डलदर्शनादासते ॥११॥ प्रविशेयुः । उभयवचनम् ? आनुपूर्वीसिध्यर्थम् ॥१२॥ गृहं प्राप्याश्मादीनुपस्पृशन्ति ।

१ पुत्रादय. । २ रश्मि.किरणः । ३ आस उपवेशने । ४ आनुपूर्वी क्रमः ।

संचिनुयुः । स्तनरहितः कुम्भः । अलक्षणायां कुम्भ्यां स्त्रियं संचिनुयुः । स्तनवती कुम्भी । अयुज इत्यादि पूर्ववत् ॥ २ ॥ क्षीरमिश्रोदकेन कर्ता प्रोक्षति । मन्त्रावृत्तिरुक्ता । शेषं व्याख्यातम् ॥ ३ ॥ कर्ता प्रोक्षति । संचेतारोऽङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थि गृहीत्वाऽसंह्रादयन्तः शब्दो

समलक्षणायां स्त्रियमयुजोऽमिथुनाः प्रवयसः ॥ २ ॥ क्षीरोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन्प्रोक्षति 'शीतिके शीतिकावतीति' ॥ ३ ॥ अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्रादयन्तोऽवदध्युः[1] पादौ पूर्वं शिर उत्तरम् ॥ ४ ॥ सुसंचितं संचित्य, पवनेन संपूय, यत्र सर्वत आपो नाभिस्यन्देरन्नन्या वर्षाभ्यस्तत्र गर्तेऽवदध्यु-

यथा न स्यात्तथा कुम्भेऽवदध्युः । पादौ पूर्वमवदध्युः । शिर उत्तरमवदध्युः । उभयवचनम् ? आनुपूर्वीसिध्यर्थम् ॥ ४ ॥ शिरःपर्यन्तं कुम्भेऽवधाय, ततो भस्म शूर्पेण संशोध्य, सूक्ष्माण्यस्थीनि शिरस उपरि संचित्य, ततोऽभित आकाशमित्यादिलक्षणयुक्ते देशे गर्तं खात्वा, यत्र गर्ते

[1] स्थापयेयुरित्यर्थः ।

सर्वतोऽपि दिग्भ्योऽधस्तिर्यक् चापो न निष्यन्देरन्वर्षाभ्योऽन्यास्तस्मिन् गर्ते कुम्भमवदध्युः । उपेत्यृचा । मन्त्रं कर्ता ब्रूयात् । उत्तरांश्च मन्त्रान्कर्तैव ब्रूयात् ॥ ५ ॥ ऊर्ध्वं च स्वेत्येतया पांसून्प्रक्षिपेद्वटे । यथा कुम्भ आननपर्यन्तं निमग्नो भवति ॥ ६ ॥ अवकीर्णे गर्ते कुम्भाननपर्यन्ते तत ऊर्ध्वं च मानेत्येतां जपेत् । अवकीर्यवचनं[1] पांसुप्रक्षेपो न धर्ममात्रं कार्योऽपि तु कुम्भाननपर्यन्तं

'उपसर्प मातरं भूमिमेतामिति' ॥ ५ ॥ उत्तरया पांसूनवकिरेत् ॥ ६ ॥ अवकीर्योत्तराम् ॥ ७ ॥ 'उत्ते स्तभ्नामीति' कपालेनापिधायाथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य श्राद्धमस्मै दद्युः ॥ ८ ॥ ॥ ५ ॥

गर्तपूरणायालं[1] कर्तव्य इत्येवमर्थम् ॥ ७ ॥ तत उत्ते इत्यृचा घटादिकपालेन कुम्भमपिधाय, ततो गर्तस्यार्थप्राप्तं पूरणं करोति । यथा कुम्भो न दृश्यते । कर्मान्तरास्तित्वज्ञापनार्थादथशब्दादयमर्थो लब्धः । ततोऽनवेक्षं पृष्ठतोऽनीक्षमाणाः प्रत्याव्रजन्ति । ततोऽप उपस्पृश्य । स्नात्वेत्यर्थः । ततोऽस्मिन्नहनि श्राद्धमस्मै प्रेताय केवलाय दद्युरेकोद्दिष्टविधानेन ॥ ८ ॥ इति चतुर्थे पञ्चमी

१ पर्याप्त. । तद्योगे नमःस्वस्तीत्यादिना चतुर्थी ।

दाहश्च विहिता चोदकक्रिया । येषां तेषां तु सर्वेषां दाहकर्मेति साधितम् ॥ तत्र त्वनाहिताग्न्या-देर्विशेषो वक्ष्यतेऽधुना । द्विगुल्फं बर्हिराज्यं चेत्येवमन्तं समं भवेत् ॥ नास्यानुस्तरणी कार्या पात्राणां योजनं तथा । पृषदाज्यं तथा चार्थादिति गृह्यविदां मतम् ॥' नानाहिताग्नेः पात्राचयो विद्यते' इति बौधायनः । 'तां दिशं तु नयेदग्निं प्रेतं चापि ततः परम् । अयुजोऽमिथुना वृद्धाः पीठचक्रेण वा नयेत् ॥ प्रेतस्य पृष्ठतोऽमात्या ईयुः पूर्ववदेव च । भूमिभागं ततः प्राप्य कर्ता प्रोक्षति पूर्ववत् ॥ गृह्येणानाहिताग्निं तु दहेत्पत्नीं च पूर्ववत् । कपालाग्निर्दहेदन्यमुपनीतं तथा परम् ॥ प्राक्तूपनयनात्प्रेतं लौकिकाग्निर्दहेत्परम् । अग्निवर्णं कपालं तु तप्त्वा तत्र विनिक्षिपेत् ॥ करीषादि ततो योऽग्नेर्जातः स तु कपालजः । उद्धृतान्ते निधायोऽग्निर्देशे तूत्तरपश्चिमे ॥ तथा शास्त्रान्तरे दृष्टेः प्रणीताः प्रणयेत्ततः । खाते हिरण्यशकलं तिलांश्चापि विनिक्षिपेत् ॥ तन्त्रं नेति पुरैवोक्तमिध्मचित्यादिपूर्ववत् । पत्न्युत्थापनपर्यन्तं धनुरन्तमथापि वा ॥ ततो हिरण्यशकलै-श्छिद्राण्यपिदधाति वै । घृतसिक्तांस्तिलांश्चापि किरेत्प्रेतकलेवरे ॥ अथेममग्ने चमसं पूर्णपात्रानु-मन्त्रणम् । सव्यं जानु निपात्याथ चतस्रोऽग्नौ जुहोति वै ॥ तथाभूतश्च जुहुयात्पञ्चमीं हृदये ततः । सिग्वातादि ततः कुर्यात्ततोऽर्थप्राप्तसञ्चितम् ॥ ततः प्रज्वालयेदग्निं प्रैषो नात्र भवेदिति । तं दह्यमानमित्यादि सर्वं पूर्ववदेव तु ॥ अस्थिसंचयनोदस्तु सर्वसाम्यान्न कथ्यते' इति ॥ २७ ॥

इति चतुर्थे चतुर्थी कण्डिका ॥ ४ ॥ संचीयन्तेऽस्थीनि येन कर्मणा तत्संचयनम्। कृष्णपक्षस्य दशम्या ऊर्ध्वमयुजासु तिथिषु एकादशी त्रयोदशी पञ्चदशीत्यासु। एकनक्षत्रे येन नाम्ना एकमेव नक्षत्रमभिधीयते। तन्नामके नक्षत्र इत्यर्थः। आषाढाद्वयं फाल्गुनीद्वयं प्रोष्ठपदाद्वयमिति षड्भ्योऽन्यत्र नक्षत्रे कर्तव्यमित्यर्थः। अन्तर्दशाहे अतीते वा दशाहे कृष्णपक्षागमनमात्र इदं कार्यम्। नातीत एव दशाह इति नियमः। अतीते दशाह इत्ययं पक्षः संवत्सरे सपिण्डीकरणपक्ष

॥ ४ ॥ संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्या-
युजास्वेकनक्षत्रे ॥ १ ॥ अलक्षणे कुम्भे पुमां-

एवोपपद्यते। द्वादशाहे सपिण्डीकरणपक्षे तु नोपपद्यते। सपिण्डीकृतस्य प्रेतस्य पृथक्पिण्डे नियोजनस्य प्रतिषेधात्। 'यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते' इति शातातपः। 'संचित्यैकोद्दिष्टं विधीयते 'श्राद्धमस्मै दद्युरिति'। तस्मात्तस्मिन्पक्षे द्वितीयेऽहनि चतुर्थेऽहनीत्यादिकालो द्रष्टव्यः ॥ १ ॥ अमङ्गले कुम्भे पुमांसं

विकारः । शमीमय्यावरणी चोपकल्पयेत् । अरणी इत्येतावत्युच्यमाने एकेन वाक्येन द्रव्यचोदना गुणचोदना च विधातुं न शक्येत इति[1] कृत्वा शमीमयग्रहणं नैवाधिक्रियेत । अरणिर्ह्यपूर्वा विधीयेत । अतः पुनः शमीमयग्रहणं कृतम् । परिधींश्चोपकल्पयेरन् । किमर्थमिदमिति न विद्मः[2] । द्रव्यचोदना तावन्न कार्या । इध्माबर्हिषोश्च संनहनमिति स्थालीपाके इध्मसंनहनस्य दर्शपूर्णमासातिदेशोऽस्ति । इतरेषां च स्थालीपाकातिदेशोऽस्ति । पाकयज्ञा-

**त्वोपकल्पयीरन्नवान्मणिकान्कुम्भानाचमनीयांश्च शमीसुमनोमालिनः**

नामेतत्तन्त्रमिति । दर्शपूर्णमासयोश्च परिधयो विहिताः । 'एकविंशतिमिध्मदारूणि भवन्ति' इति । मन्त्रलिङ्गाच्च । 'एकविंशतिधा संभरामीति । 'अथ परिधीन्परिदधाति रक्षसामपहत्यै' इत्यर्थवादाच्च । तस्मादतिदेशादेव सिध्येयुः । शमीमयत्वासिध्यर्थमिति चेत् । तदपि न । इध्मस्तावच्छमीमयोऽत्र विहितः । दर्शपूर्णमासयोश्चेध्मपरिधीनामेकद्रव्यत्वं दृष्टम् । 'पालाशः खादिरो वेध्मः' इति बौधायनः । तत्र चेध्मग्रहणेनैकविंशतेर्ग्रहणम् । एकविंशतिमिध्मदारूणीति

---

१ वाक्यभेदप्रसंगादितिभाव. । २ एतदेव विवृणोति विनियोग. कार्य. इत्यन्तेन ग्रन्थेन ।

 विधिवाक्ये श्रवणाद्वृक्षान्तरानुक्तेश्च । अत्र चेध्मग्रहणेन परिधिग्रहणे सति परिधयोऽपि शमीमया एव 
 भवन्ति । इध्मसंख्या चावश्यमतिदेष्टव्यैव । इतरथा, संनहनमात्रातिदेशेनारत्निमात्रत्वपालाशत्वादयोऽपि गुणा न स्युरिष्यन्ते च । तर्हि सर्वासामभ्याधानं प्राप्नोतीति शङ्का न कार्या । 'पञ्चदशेध्मदारूण्यभ्यादधातीति' श्रुतेः । इतरेषां च त्रेतावद्विनियोगः कार्यः । तत्र केचित्परिहरन्ति । 'गुणचोदनैवेयम् । सा च ज्ञापनार्थम् । 'अन्यत्रेध्मपरिधीनां नानावृक्षत्वं कार्यमिति । रक्षोहननार्थं चावश्यं परिधातव्या एवेति' । चशब्दः शमीमयत्वसमुच्चयार्थः । उपकल्पनसमुच्चयार्थत्वे सति

**शमीमयमिध्मं शमीमय्यावरणी परिधींश्चानडुहं गोमयं चर्म च**

सर्वत्र चशब्दं कुर्यात्' । एवं ते परिहृतवन्तः । तदयुक्तमित्यन्ये । अस्मच्छास्त्रे इध्मग्रहणेन पञ्चदशदारुकस्य ग्रहणं दृष्टम् । प्राचीनावीतीध्ममुपसमाधाय इध्ममभिघार्येति च । एकविंशतिवादिनाप्युभयत्र पञ्चदशत्वमभ्युपगम्यत एव । तत्र स्वशास्त्रदर्शनसामान्यादिध्माबर्हिषोश्च संनहनमित्यत्रापि पञ्चदशदारुकस्यैव ग्रहणम् । तत्र च पञ्चदशदारुकस्य सतः संनहनाद्यतिदेशेन प्राप्यते । यथा । 'शस्त्रेष्वेव होत्रकाणामभिहिङ्कार' इत्यत्र शास्त्रान्तरे होत्रकशब्दस्य सप्तसु त्रिषु वा दृष्टत्वेऽप्यस्म- 

काण्डिका ॥ ८ ॥ गरुणा अभिमृताः। गुरुर्येषां मृतः। अन्यतो वा पुत्रपशुहिरण्यादिभिरपक्षीयमाणाः सन्तोऽमावास्यायां शान्तिकर्मनाम कुर्युः। तत्र मन्त्रवर्ती क्रियां ज्येष्ठः करोति। इतरेतूपासते ॥ १ ॥ प्रागादित्योदयादग्निं सहभस्मानमायतनेन सह दक्षिणस्यां दिशि हरेयुः। दक्षिणां दिशं प्रति नयेयुरित्यर्थः। क्रव्यादमग्निमित्यर्धर्चेन। पचनाग्नेरेवायमुत्सर्गः। गृह्यस्येत्यभ्यु-

**गुरुणाभिमृता अन्यतो वाऽपक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् ॥ १ ॥ पुरोदयादग्निं सहभस्मानं सहायतनं दक्षिणा[1] हरेयुः 'क्रव्यादमग्निं प्रहिणोमि दूरमि'–त्यर्धर्चेन ॥ २ ॥ तं चतुष्पथे न्युप्य**

पगम्यमानेऽतिप्रसङ्गः। त्रेताग्नीनामपि प्रसज्येत। अथ तेषां यावज्जीवं धार्यत्वादुत्सर्गो नोपपद्यते। तदत्रापि समानम्। औपासनोऽपि यावज्जीवं धार्य एव। 'पाणिग्रहणादिगृह्यं परिचरेत्' इति वचनात्। तस्मात्पचनस्येति सिद्धम्। आयतनशब्देनाधिश्रयणार्था मेखलादय उच्यन्ते ॥ २ ॥ अथ तमग्निं चतुष्पथे प्रक्षिप्य यत्र वा अदक्षिणस्यां वा अचतुष्पथे वा न्युप्य। अथ तम-

---

१ सप्तम्यन्ताद्दक्षिणाशब्दादाच्।

ग्निमप्रदक्षिणं त्रिः परियन्ति । सव्यैः पाणिभिः सव्यानूरूनाघ्नानास्ताड्यमानाः ॥ ३ ॥
अथानवेक्षम् । पृष्ठतोऽनीक्षमाणाः । प्रत्याव्रजन्ति । अथशब्द ऊर्वाहननस्य प्रत्याव्रजनाङ्गत्वाशङ्का
निवृत्त्यर्थः । ततः सर्वे स्नान्ति । ततः सर्वे केशादीन्वापयन्ति । पुनरपि स्मृतिप्राप्तं स्नानं कुर्युः ।
ततो वक्ष्यमाणान्युपकल्पयीरन् । शब्लोपश्छान्दसः । उपकल्पनविधानात्पुराणानामुत्सर्गः ।

**यत्र वा त्रिः प्रसव्यं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः॥ ३ ॥**

**अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केशश्मश्रुलोमनखानि वापयि-**

अनुक्तोपयोगानां यथार्थमुपयोगः कार्यः । मणिको नाम जलधारणार्थो भाण्डविशेषः । कुम्भा
उक्ताः । आचमनीया नाम आचमनसाधना उदञ्चनकमण्डलुप्रभृतयः । शमीसुमनोमालिनः ।
शमीपुष्पमालिनः । मणिकादींस्त्रीन्नवानुपकल्पयेयुः । शमीसुमनोमालिन इति मणिकादे-
र्विशेषणमित्येके । कर्तॄणां विशेषणमित्यन्ये । शमीमयमिध्ममुपकल्पयेयुः । प्राकृतस्यायं

१ पुराणानां पुरातनानाम् । व्यापृतानामित्यर्थ. । २ इद पदं पूर्वत्रापि सबध्यते ।

च्छास्त्रे मुख्यवर्जितेषु दृष्ट इति कृत्वा द्वादशापि गृह्यन्ते। स्वशास्त्रदर्शनसामान्यात्। एवमिहापि स्वशास्त्रदर्शनसामान्यात्पञ्चदशदारुकस्य ग्रहणम्। एवं च कृत्वा प्रकृतौ पार्वणे परिधयो नैव संभवन्ति। तदतिदेशादितरेष्वपि पाकयज्ञेषु नैव संभवन्ति। प्रकृतौ परिध्यादीनामाचार्येण विनियोगानुक्तेश्च पञ्चदशदारुकस्यैव ग्रहणम्। अथोच्येत। 'एकविंशतिधा संभरामीति संनहनमन्त्रे संख्या श्रूयते। मन्त्रश्चातिदेशात्पाकयज्ञेष्वपि भवति। पञ्चदशकाष्ठत्वे लिङ्गानुपपत्तिः। न चोहः कर्तुं शक्यः। न प्रकृतावूहो विद्यत इति न्यायादिति'। तदयुक्तम्। नह्यस्य मन्त्रस्य स्थालीपाकः प्रकृतिः। किं

**नवनीतमश्मानं च यावत्यो युवतयस्तावन्ति कुशपिञ्जूलानि॥ ४॥**

तर्हि?। दर्शपूर्णमासौ। तस्मादत्रास्योह एव कार्यः। अन्ये तु मन्त्रं नैवेच्छन्ति। अपि चेध्मपरिधीनां नानावृक्षत्वमपि दर्शपूर्णमासयोर्भगवतापस्तम्बेनोक्तम्। यत्तूक्तं 'रक्षोहननार्थं परिधातव्या' इति। तदप्ययुक्तम्। पूर्णपात्रेणैव रक्षोहननस्य कृतत्वात्। न चात्र प्रणयनस्य हविःश्रपणार्थत्वमुपपद्यते। आज्यहोमत्वेऽपि दहनकर्माणि प्रणयनदर्शनात्। 'अपः प्रणयति' 'आपो वै रक्षोघ्नी रक्षसामपहत्यै' इति श्रुतेः। रक्षोहननार्थत्वं यदुपादीयते तच्चेत्कार्यमन्येन कृतं किमिति तदुपादीयते। रक्षोहननं च

परिधिकार्यं पूर्णपात्रेणैव कृतमिति न परिधय उपादेयाः। अतः सर्वत्र पञ्चदशदारुक एवेध्म इति सिद्धम्। अनेनैव चाभिप्रायेणाचार्योऽपि पार्वणे परिध्यादीनां विनियोगमनुक्तवान्। बह्वृचानां समाचारश्च सर्वत्रैवमेव। पारम्पर्योपदेशश्चैवमेव। अनेन तु वचनेन परिधयोऽपूर्वाः सगुणा विधीयन्ते। तेनात्राप्यूर्ध्वसमिधौ अनुयाजसमिच्च न कार्या। विध्यभावात्। नन्वतिदेशप्राप्तेन पूर्णपात्रेणैवात्र रक्षोहननस्य कृतत्वात्परिधिविधानं नोपपद्यत इत्याशङ्का न कार्या। न ह्यत्र परि

**अग्निवेलायामग्निं जनये–'इहैवायमितरो जातवेदा' इत्यर्धर्चेन ॥ ५ ॥**

**तं दीपयमाना आसत आ शान्तरात्रादायुष्मतां कथाः कीर्तयन्तो**

धिविधानस्यानेनैव कार्येण भाव्यमित्यत्र किंचन प्रमाणमस्ति। विधिभेदात्। तस्य कार्यस्येहान्येन कृतत्वाच्च कार्यान्तरं कल्पनीयमित्यलमतिविस्तरेण। आनडुहं गोमयं चर्म चोपकल्पयेयुः। नवनीतं चाश्मानं च यावन्तो युवतयः स्वगृहे तावन्ति कुशपिञ्जूलानि चोपकल्पयेयुः ॥ ४ ॥ अथाग्निहोत्रविहरणकालेऽपराह्णे शमीमयीभ्यामरणीभ्यामग्निं मन्थयेदर्धर्चेन। अयं चाग्निः पचनो भवति ॥ ५ ॥ तंग्रहणं ? मन्त्रस्योत्तराङ्गत्वाशङ्कानिवृत्त्यर्थम्। आयुष्मतां कुलवृद्धानामन्येषां च

कथाः कीर्तयन्त इतिहासादीनि माङ्गल्यानि ब्रुवन्तो मथितमग्निं दीपयमाना गृहाद्बहिरेवासते । आ शान्तरात्रात् । निशि यस्मिन्काले तूष्णीमासते जनास्तच्छान्तरात्रम् ॥ ६ ॥ ततो यदा न शब्दाः क्वचिदुच्चरन्ति तदा । उत्तरविवक्षार्थमनुवादोऽयम् । संप्रविष्टेषु वा अमात्येषु गृहं निवेशनं वा । किमुक्तं भवति । शान्तरात्रात्प्रागपि यद्यमात्या गृहं निवेशनं वा प्रवेष्टुं कामयन्ते

माङ्गल्यानीतिहासपुराणानीत्याख्यापयमानाः ॥ ६ ॥ उपरतेषु शब्देषु संप्रविष्टेषु वा गृहं निवेशनं वा दक्षिणद्वारपक्षात्प्रक्रम्या-विच्छिन्नामुदकधारां हरे–'त्तन्तुं तन्वन्रजसो भानुमन्विहि'–त्योत्तरस्मात् ॥ ७ ॥ अथाग्निमुपसमाधाय, पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्री-

तदा वा तेषु प्रविष्टेषु । एवं शान्तरात्रेण सह विकल्पः फलितः । निवेशनशब्देनात्र संवेशन-मुच्यते । शयनस्थानमित्यर्थः । उपसर्गव्यत्ययो द्रष्टव्यः । उक्तं च नैरुक्तैः । निरित्येष समित्ये तस्य स्थान इति । तद्वदत्रापि । अनयोरन्यतरे काले कर्ता दक्षिणाद्द्वारपक्षात्सन्ततामुदकधारां सिञ्चेत् । तन्तुमित्यृचा ॥ ७ ॥ अथशब्दो–? ऽस्मिन्कालेऽग्न्यन्तरमौपासनमुपसमादध्यादिति ज्ञाप-

नार्थम् । ततः पश्चादस्यानडुहं चर्मास्तीर्यैत्यादि व्याख्यातम् । ततश्चर्मण्यमात्यानारोहयेदारो-
हतेत्यृचा । कर्तृवर्जं गृह्याः सर्वे पुमांसः स्त्रियश्चामात्या इत्युच्यन्ते ॥ ८ ॥ आज्यसंस्कारान्तं
कृत्वा, इममित्यृचाग्नेः पश्चात्परिधिं परिदध्यात् । ततो दक्षिणतस्तूष्णीम् । तत उत्तरतस्तू-

वमुत्तरलोम, तस्मिन्नमात्यानारोहये–'दारोहतायुर्जरसं वृणाना' इति
॥ ८ ॥ 'इमं जीवेभ्यः परिधिं दधामीति' परिधिं परिदध्यात् ॥ ९ ॥
'अन्तर्मृत्युं दधतां पर्वतेने–' त्यश्मानमित्युत्तरतोऽग्नेः कृत्वा, 'परं मृत्यो
अनु परेहि पन्थामिति' चतसृभिः प्रत्यृचं हुत्वा, 'यथाहान्यनुपूर्वं

ष्णीमेव । परिधिमित्येकवचनादाद्यस्यैव समन्त्रकत्वमितरौ तूष्णीम् ॥ ९ ॥ अथ अन्तर्मृत्यु-
मिति पादेनाश्मानमुत्तरतोऽग्नेर्निदधाति । 'ऋचं पादग्रहणे' इत्यत्र पादशब्दो मूलवाची । यथा
'पादः पत्' इति । तेनात्र पादमात्रस्य ग्रहणम् । न ऋचः । तत आज्यभागान्तं कृत्वा 'परं

मृत्यो' इति चतसृभिः मत्यृचं व्याख्यातं तथा हुत्वा । यथेत्यृचामात्यानीक्षेत ॥ १० ॥
अमात्येषु या युवतयः स्त्रियस्ता दर्भतरुणकैर्नवनीतं गृहीत्वा, तेनाङ्गुष्ठोपकनिष्ठिकाभ्यां पाणि-
भ्यामक्षिणी अञ्जते । पृथक्पाणिभ्यामिति वचनं? पृथक्पृथक् युगपदेवाञ्जीरन्न पर्यायेणेत्येवमर्थम् ।

भवन्ती'—त्यमात्यानीक्षेत ॥ १० ॥ युवतयः पृथक्पाणिभ्यां दर्भतरु-
णकैर्नवनीतेनाङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी आञ्ज्य पराञ्चो विसृजेयुः
॥ ११ ॥ 'इमा नारीरविधवाः सुपत्नीरि'—त्यञ्जाना ईक्षेत ॥ १२ ॥
'अश्मन्वतीरीयते संरभध्वमि'—त्यश्मानं कर्ता प्रथमोऽभिमृशेत्
॥ १३ ॥ अथापराजितायां दिश्यवस्थायाग्निनानडुहेन गोमयेन चावि-

तेन द्वित्वं कुशपिञ्जूलानां नास्त्येव । ततोऽनवेक्षमाणाः पृष्ठतो विसृजेयुः कुशपिञ्जूलानि ॥ ११ ॥
इमा इत्यृचा कर्ता अञ्जाना युवतीरीक्षेत ॥ १२ ॥ तत एतयाश्मानं कर्ता पूर्वमभिमृशेत् ।
प्रथमवचनात्पश्चादितरोऽभिमृशेत्तूष्णीम् ॥ १३ ॥ अग्निनानडुहेन गोमयेन चाविच्छिन्नया

 



चोदकधारयापोहिष्ठेति तृचेन सिच्यमानयाऽमासेषु औपासनाग्निं परियन्तु, तस्मिन्काल अपराजितायां दिशि स्थित्वा, कर्ता 'परीम' इत्यृचं जपेत् ॥ १४ ॥ एवंगुणयुक्तोऽनड्वान्परिणेतव्यः। अथ स्विष्टकृदादि समापयेत्। उत्तरत्राथशब्दात् ॥ १५ ॥ अथोपविशन्ति । यत्राभिरंस्य-

च्छिन्नया चोदकधारया'—ऽऽपोहिष्ठा मयोभुव' इति तृचेन 'परीमे गामनेषतेति' परिक्रामन्तु जपेत् ॥ १४ ॥ पिङ्गलोऽनड्वान्परिणेयः स्यादित्युदाहरन्ति ॥ १५ ॥ अथोपविशन्ति यत्राभिरंस्यमाना भवन्त्यहतेन वाससा प्रच्छाद्य ॥ १६ ॥ आसतेऽस्वपन्त[1] ओदयात्[2] ॥ १७ ॥

माना भवन्ति । यो देशोऽभीष्टस्तत्राहतेन वाससा प्रच्छाद्योपविशन्ति ॥ १६ ॥ तत्रैव आ उदयादस्वपन्त आसते ॥ १७ ॥ तत उदित आदित्ये सौर्याणि स्वस्त्ययनानि च व्याख्यातानि[3]

---

१ जागरूका। २ उदय अभिव्याप्येत्यर्थः। आङभिव्याप्तौ। ३ उक्तानि।

जपित्वा। अन्नं संस्कृत्येति वचनम्? आज्यभागान्तं कृत्वा तत एवान्नाद् 'अपनः शोशुचदघमिति' होमः कार्य इत्येवमर्थम्। प्रत्यृचं व्याख्यातम्। तथा हुत्वा। अन्नस्य तु धानावत्संस्कारः। ततो होमशेषं समाप्य। तत एवान्नाद्ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत। ततो गौः, कंसो,ऽहतं वास इति त्रीणि भुक्तवद्भ्यो दक्षिणां दद्यात्। ओदयादित्येव सिद्धे

**उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपित्वान्नं संस्कृत्या— 'ऽऽपनः शोशुचदघमिति' प्रत्यृचं हुत्वा, ब्राह्मणान्भोजयित्वा, स्वस्त्ययनं वाचयीत, गौः कंसोऽहतं वासश्च दक्षिणा ॥ १८ ॥ ॥ ६ ॥**

उदित आदित्य इति वचनम्? 'अध्यापनकालेपि सौर्याणि दिवैवाध्येतव्यानि। न कदाचिद्रात्रौ कर्तव्यानीत्येवमर्थम्'। तेन प्रत्यवरोहणे चेत्स्वपन्तमभ्युदयाच्चेदित्यत्र चापरेद्युरुदिते जप इति सिद्धम् ॥ १८ ॥ इति चतुर्थे षष्ठी कण्डिका ॥ ६ ॥ अथशब्दोऽधिकारार्थः। इत उत्तरं

च क्रियते। तस्माद्वक्ष्याम इति। पार्वणमिति श्राद्धनाम। अन्वर्थसंज्ञा चेयं पर्वणि भवं पार्वणमिति। तथा-प्येकस्मिन्नेव पर्वणि भवत्यमावास्यायाम्। नोभयोः पर्वणोः। कुतः। पिण्डपितृयज्ञेन सह व्यतिषङ्गदर्शनात्। स्मृतेश्च। 'विप्रश्चन्द्रक्षयेऽग्निमान्' इति मनुः। 'अमावास्यायां पितृभ्यः' इति गौतमः। पितॄनुद्दिश्य यद्दीयते ब्राह्मणेभ्यः श्रद्धया तच्छ्राद्धम्। काम्यं श्राद्धं 'पञ्चम्यां पुत्रकामस्येत्यादि'। वृद्धि-

**अथातः पार्वणे[1] श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ॥ १ ॥**

**ब्राह्मणाञ्श्रुतशीलवृत्तसंपन्नानेकेन वा काले ज्ञापितान्स्नातान्कृतप-**

पूर्तिनिमित्तमाभ्युदयिकम्। एकमेवोद्दिश्य यच्छ्राद्धं 'श्राद्धमस्मै दद्युरेकादशाह एकोद्दिष्टम्' इत्यादि तदेकोद्दिष्टम्। धर्मभेदात्पृथगुपदेशः। श्राद्ध इत्येतावतैव सिद्धे पार्वणादिग्रहणं? धर्म-भेदप्रदर्शनार्थं कर्तव्यताविध्यर्थं च। धर्मभेदमुपरिष्टाद्वक्ष्यामः ॥ १ ॥ ब्राह्मणग्रहणं क्षत्रिय-वैश्यादिनिवृत्त्यर्थम्। श्रुतं स्वाध्यायः। शीलम् स्वभावः। शमदमादियुक्तत्वं क्रोधरागादिव-

---

१ तत्र भव इत्यण्।

जितत्वं च । वृत्तं विहितकरणं निषिद्धवर्जनं च । एतैस्त्रिभिर्गुणैर्युक्तानेकेन वा गुणेन-युक्तानुपवेश्येयसनेन संबन्धः । काले ज्ञापितान् । स्मृत्युक्तनिमन्त्रणकाले निमन्त्रितानि-त्यर्थः । उक्तं च मनुना । 'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते । निमन्त्रयीत त्र्यवरान्स-म्यग्विप्रान्यथोदितान्' इति । तेषां चैते नियमा भवन्ति । 'निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा । न च च्छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत् ॥' इति मनुः ।

**च्छौचानाचान्तानुदङ्मुखान्पितृवदुपवेश्यैकैकमेकैकस्य द्वौ द्वौ त्रीं-**

स्नातानिति वचनं? नियमेन स्नातान्भोजयेत् । केनचित्कारणेन स्नानाशक्तान्न भोजयेदित्येवमर्थम् । अन्ये, स्नातानिति समावृत्तानिति व्याचख्युः । अन्ये,[1] स्नानद्रव्यैः स्नातानिति । तच्च स्नानं स्वेन द्रव्येण कारयितव्यमिति च व्याचख्युः । प्रक्षाल्य पादौ पाणी चेत्याचमनाङ्गत्वेन विहितं पच्छौचं शुद्धपादस्यानित्यमिति ज्ञापनार्थं कृतपच्छौचवचनम् । तेन शुद्धपादत्वे-ऽप्यत्र नियमेन पच्छौचं कार्यमित्यर्थः । अन्ये तु स्वयमेव तेषां पादान्प्रक्षालयेदित्येवमर्थमिति

१ अन्येइति उत्तरेण व्याचख्युरित्यनेन संबध्यते ।

व्याचख्युः । आचान्तानिति कर्माङ्गमाचमनं विधीयते । तेन भोजनाङ्गं श्राद्धाङ्गं च द्विराचमेयुः । एवं-
गुणविशिष्टानुदङ्मुखान्पितॄनुपवेशयेत् । उदङ्मुखवचनं ? प्राङ्मुखत्वनिवृत्त्यर्थम् । पितृवदिति वचनं ?
ममैते पितर इत्येवं मनसा ध्यायन्नुपवेशयेदित्येवमर्थमित्येके । अन्ये तु पितुर्वृद्धं पितामहाय वृद्धतरं
प्रपितामहाय वृद्धतममित्येवं यथावय उपवेशनार्थमिति । एकैकस्यैकैकमुपवेशयेत् । द्वौ द्वौ त्रींस्त्रीन्वा ।
अतोऽपि ब्राह्मणा अधिका भवेयुः । सर्वथा ब्राह्मणाधिक्ये फलाधिक्यमस्त्येव । सर्वथाऽ-
ल्पकर्मणो महाकर्मणश्च क्वचिदपि समानफलताशङ्का न कार्या । महाकर्मविधानानर्थक्यप्रसङ्गात् ।
न त्वेवैकं सर्वेषां त्रयाणां भोजयेत् । 'द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि
न प्रसज्येत विस्तरे ॥' इति मनुनोक्तस्य एकैकमुभयत्र वेत्यस्य पक्षस्यायं प्रतिषेधः । अस्य
प्रतिषेधं कुर्वता मनूक्तमन्यदनुज्ञातं भवति । तेनैतत्सिद्धं भवति । दैवमपि भोजनमत्र कार्यम् ।
तस्य विधिः स्मृतितोऽवगन्तव्यः । आचार्येण तु पित्र्यस्यैव विधिरुच्यते । अस्मद्गृह्योक्तेतिकर्त-
व्यतामात्रमेव कार्यम् । न शास्त्रान्तरं दृष्ट्वा विस्तरः कार्यः । एतदाह मनुरपि ' सत्क्रियां देशका-
लौ च शौचं ब्राह्मणसम्पदम् । पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् । बह्वल्पं वा स्वगृह्योक्तं
यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' इति गृह्यविदः । 'ये

स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः' इत्याद्याश्च वर्ज्या इति ॥ २ ॥ आद्यं सपिण्डीकरणम् । त्रीनुद्दिश्य क्रियमाणश्राद्धमध्ये तदेव हि प्रथमम् । तद्वर्जितेषु सर्वेषु श्राद्धेषु कामं त्रयाणामेकं भोजयेत् । सपिण्डीकरणे तु नियमेन त्रयाणां त्रिभिर्भाव्यम् । काममिति वचनम्? आपत्कल्पोऽयमिति ज्ञापनार्थम् । अन्ये त्वनाद्ये पार्वणवर्जित इति व्याचख्युः । तद्ध्यत्र प्रथमं निर्दिष्टम् । अन्ये त्वनाद्ये अभोजने आमहिरण्यश्राद्धादाविति । 'आमैर्वा फलमूलैर्वा प्रदानमात्रं हिरण्येन वा

**त्रीन्वा वृद्धौ फलंभूयस्त्वं न त्वेवैकं सर्वेषाम् ॥ २ ॥ काममनाद्ये ॥ ३ ॥ पिण्डैर्व्याख्यातम् ॥ ४ ॥ अपः प्रदाय ॥ ५ ॥ दर्भान्द्विगुण-**

प्रदानमात्रं' इति बौधायनः । अन्ये त्वनाद्ये दुर्भिक्ष इति । अन्ये त्वनाद्ये आद्याभावे अन्नाभावे सम्पदभाव इति ॥ ३ ॥ जीवमृतानां पिण्डनिपरणमधिकृत्य ये पक्षाः पिण्डपितृयज्ञे उक्तास्ते श्राद्धेऽपि विज्ञेयाः ॥ ४ ॥ उपवेशनादनन्तरं ब्राह्मणपाणिष्वपो ददाति । आग्नेयीमुखः प्राचीनावीती पितृकर्म कुर्यात् ॥ ५ ॥ ततो दर्भान्द्विगुणभुग्नानासनेषु ददाति । आसनं प्रदायेति सप्तम्यर्थे

१ अत्तु योग्यमाद्यम् । भक्ष्य तदभावे इत्यर्थः ।

द्वितीया । आवेशनस्य प्राक् चोदितत्वात् ॥ ६ ॥ ततः पुनरपो ददाति ॥ ७ ॥ ततस्तैजसमेकं पात्रमश्ममयमेकं मृन्मयमेकं । एतेषु त्रिषु पात्रेषु । त्रिद्रव्यासंभव एकद्रव्येषु वा त्रिषु पात्रेषु । त्रीण्यपि तैजसानि वा । त्रीण्यप्यश्ममयानि वा । त्रीण्यपि मृन्मयानि वा । तान्याग्नेयींदि-

भुञ्जानासनं प्रदाय ॥ ६ ॥ अपः प्रदाय ॥ ७ ॥ तैजसाश्ममयमृण्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य 'शन्नो देवीरभिष्टय' इत्यनुमन्त्रितासु तिलानावपति 'तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान्प्रीण-

क्संस्थानि निधाय, तेषु दर्भानन्तर्धाय, ततस्तेष्वपो निषिच्य, ततः शन्नो देवीरित्यृचा पात्रत्रयस्था अपोऽनुमन्त्रयेत् । सकृदेव शक्यत्वान्न मन्त्रावृत्तिः । ततस्त्रिषु पात्रेषु तिलानावपति तिलोऽसीति मन्त्रेण । अत्र प्रतिपात्रं मन्त्रावृत्तिः । पितृशब्दस्योहो नास्तीत्युक्तं प्राक् ।

पात्रेषु गन्धमाल्याद्यावपेत्[1] ॥ ८ ॥ पित्र्यं कर्म सर्वं प्रसव्येनाप्रदक्षिणेन कार्यम् । अप्रदक्षिणं कार्यमित्यर्थः । तृतीया तु प्रकृत्यादित्वाद्द्रष्टव्या[2] । समेन धावतीतिवत् । 'प्रदक्षिणमुपचार' इत्याभ्युदयिकेऽपवाददर्शनाद्योगविभागोऽवगतः ॥ ९ ॥ उत्तरत्रोपवीतयेति विधानात्सर्वमिदं पित्र्यं प्राचीनावीतिना कार्यमित्युक्तम् । अधुना उपवीतित्वादिति हेतुनिर्देशादत आरभ्यार्वा-

याहि नः स्वधा नम' इति ॥ ८ ॥ प्रसव्येन ॥ ९ ॥ इतरपाण्यङ्गुष्ठा-न्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन 'पितरिदं ते अर्घ्यं

गन्धमाल्यादिदानादि यज्ञोपवीतिना कर्म कर्तव्यमिति गृह्यविदः । इतरस्य सव्यस्य पाणेर-ङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेत् । उपवीतित्वाद्धेतोः । पित्र्ये तावत्प्राचीनावीतिना भाव्यमयं चोप-वीती तस्मादित्यर्थः । येन पाणिना कर्म करोति दक्षिणेन वा सव्येन वा तस्मिन्नंसे 'यज्ञो-पवीते स्थिते प्राचीनावीती भवति । ततोऽन्यस्मिन्नंसे स्थित उपवीती भवति । अत्र तूपवीति-

---

१ निक्षिपेत् । २ प्रकृत्यादिभ्य उपसङ्ख्यानमिति वार्तिकेनेत्यर्थः ।

त्वात्प्राचीनावीतित्वसिध्यर्थं सव्यपाणिपितृतीर्थेन दातव्यमित्यर्थः। अथवा। सव्यपाणेः शिष्टगर्हितत्वाद्दक्षिणं पाणिं सव्येन पाणिना गृहीत्वा, दक्षिणेनैव पाणिनोपवीत्येवार्घ्यं प्रयच्छेत् ॥१०॥ अर्घ्यप्रदानात्पूर्वमन्या अप्यपो दद्यादित्यर्थः ॥ ११ ॥ अर्घ्या इति । निवेदयेदिति शेषः । ता अर्घ्या आपः प्रतिग्राहयिष्यन्। प्रतिग्रहणात्पूर्वं सकृत्सकृदर्घ्या अपो निवेदयेत् ।· स्वधा अर्घ्या इति मन्त्रेण। सकृत्सकृदिति वचनम्[1] 'पित्रर्थं यावन्तो ब्राह्मणास्तेभ्यः सर्वेभ्यः प्रथममेकमेव पात्रं सकृ-

**पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति'**

**॥ १० ॥ अप्पूर्वम् ॥ ११ ॥ ताः प्रतिग्राहयिष्यन्स-**

न्निवेदयेन्न प्रतिब्राह्मणम् । तथा पितामहार्थानां द्वितीयं सकृदेव । प्रपितामहार्थानां तृतीयं सकृदेवेत्येवमर्थम्[2] '। निवेदनस्य सकृन्नियमादन्यासामपां दानमर्घ्यदानं चार्घ्यमन्त्राश्च प्रतिब्राह्मणमावर्तन्ते । निवेदनान्योदकदानार्घ्यदानेषु पदार्थानुसमयः कण्डानुसमयो वा द्रष्टव्यः । गन्धादिदाने च तथा । एवमेकैकस्यानेकपक्षे । एकैकपक्षे त्वेकैकं पात्रमेकैकस्य निवेद्य, अन्या अप

१ वाक्यांशः । २ एकवारं इत्यर्थ. ।

एकैकस्य दत्वा, अर्घ्या अप एकैकस्य दद्यात् । सर्वेषामेकपक्षे त्रीण्यपि पात्राणि तस्यैव निवेद्य, पुनः पुनरन्या अपो दत्त्वा, तस्यैव त्रिरर्घ्यं त्रिभिर्मन्त्रैः प्रयच्छेत् ॥ १२ ॥ ब्राह्मणैः प्रसृष्टा निर्णीता अर्घ्या अपोऽनुमन्त्रयेत् । या दिव्या इत्यनेन मन्त्रेण । प्रसृष्टा

कृत्सकृत्स्वधा अर्घ्या इति ॥ १२ ॥ प्रसृष्टा अनुमन्त्रयेत 'या दिव्या आपः पृथिवी संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भव-

इत्यादिकर्मणि क्तप्रत्ययः[1] । भूतकालत्वमात्र आनर्थक्यप्रसङ्गात् । तेन प्रतिब्राह्मणं पृथगनुमन्त्रणम् । अर्घ्यं दत्त्वा दत्त्वा निर्णीतास्तदानीमेवानुमन्त्रयेत् । एवं सर्वेषामर्घ्ये दत्ते संस्रवानर्घ्यशेषान्पात्रगतानेकीकरोति । उत्तरे द्वे पात्रे प्रथमपात्र आसिञ्चतीत्यर्थः । एवं गृह्यविदः । ततस्ता-

---

१ आदिकर्मणि क्तः कर्तरि चेति सूत्रेणेत्यर्थः ।

भिरेकीकृताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति । नो चेन्नानक्ति ॥ १३ ॥ पितृणामर्घ्यपातितं पितृणामर्घ्यशेषा आपो यस्मिन्पात्रे एकीकृताः । एवंभूतं प्रथमं पात्रं तस्माद्देशान्नोद्धरेत् । समवनयनदेशान्नापनयेदा श्राद्धपरिसमाप्तेः । किमिति नोद्धरेत् ? । यस्मात्तस्मिन्पात्रे पितरस्तृतीयपात्रेण पिहितास्तिष्ठन्तीति गृह्यज्ञास्तृतीयेन पात्रेण प्रथमपात्रस्यापिधानमिच्छन्ति । अन्ये तु 'तत्रेति



न्त्विति' संस्रवान्समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥१३॥ नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥ १४ ॥ ॥ ७ ॥ एतस्मिन्काले गन्धमाल्यधूपदी-

तृतीयार्थे सप्तमी । तेनायमर्थः । आवृतास्तेन प्रथमेन पात्रेण पितरास्तिष्ठन्तीति । एतदुक्तं भवति । 'अर्घ्यपातितं प्रथमं पात्रं न्यग्बिलं कुर्यात् । तच्च नोद्धरेत् । आ समाप्तेरिति' व्याचख्युः । शौनकोऽब्रवीत् । शौनक एवमवादीत् । शौनकग्रहणं ? तस्य पूजार्थम् । न विकल्पार्थम् ॥१४॥ इति चतुर्थे सप्तमी कण्डिका ॥७॥ आच्छादनं वस्त्रम् । इदानीं प्राचीनावीती भवेत् । ततो गन्धादीनि

पञ्च ब्राह्मणेभ्यो ददाति । एतस्मिन्काल इति वचनं ? एतस्मिन्काले एतान्येव ददातीत्येवमर्थम् । तेन गोहिरण्यादीनां श्राद्धान्ते प्राक्स्वधावाचनात्प्रदानं कार्यमिति सिद्धम् । 'दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्' इति स्मृतेः ॥ १ ॥ अनाहिताग्नेः पिण्डपितृयज्ञस्य च पार्वणस्य व्यतिषङ्गो भवति । इध्मोपसमाधानान्तं पिण्डपितृयज्ञं कृत्वा, ब्राह्मणपच्छौचाद्याच्छादनान्तं

**पाच्छादनानां प्रदानम् ॥ १ ॥ उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा ॥ २ ॥ प्रत्यभ्यनुज्ञा[2] क्रियतां कुरुष्व**

पार्वणं कृत्वा, ततः पिण्डपितृयज्ञस्थालीपाकादन्नमुद्धृत्य, घृताक्तं कृत्वा, पित्राद्यर्थान्ब्राह्मणाननुज्ञापयति[1] 'अग्नौ करिष्ये' इति वा । 'अग्नौ करवै' इति वा । अग्नौ करवाणीति' वा ॥ २ ॥ ब्राह्मणैरेवं प्रत्यभ्यनुज्ञा देया यथासंख्यं 'क्रियतामिति' वा । कुरुष्वेति'

---

१ वाचयेदित्यर्थः । २ प्रतिवचनम् ।

वा 'कुरु' इति वा ॥ ३ ॥ ततो अग्नौ जुहोति। उक्तमार्गेण मेक्षणेनावदायावदानसंपदा जुहुयात्। 'सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम' इति स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्येति। अथशब्दो? होमादर्वाचीनं पिण्डपितृयज्ञाङ्गं पूर्वं कृतमिति ज्ञापनार्थः। तेनानयोर्व्यतिषङ्गो लब्धः। अग्नौवचनम्? उत्तरविवक्षार्थम् ॥४॥ अभ्यनुज्ञायामिति यदि ब्राह्मणाः पाणिषु होममभ्यनुजानन्ति[1]। अग्निकार्यकरत्वं यदि स्वेषामभ्युपगच्छन्तीत्यर्थः। तथा

**कुर्वीति ॥ ३ ॥ अथाग्नौ जुहोति यथोक्तं पुरस्तात् ॥ ४ ॥ अभ्यनु-**

सति पाणिषु जुहोति। अनुज्ञानवचनं प्रत्यभ्यनुज्ञावचनं च नैव स्तः। कथं तर्ह्यभ्यनुजानन्ति वा न वेति ज्ञातुं शक्यम्?। उच्यते। यत्र पिण्डपितृयज्ञप्राप्तिरस्ति तत्राग्निप्राप्तिसद्भावात्[2]पाणिहोमं नाभ्यनुजानन्ति। यत्र तु पिण्डपितृयज्ञकल्पप्राप्तिर्नास्ति तत्राग्निप्राप्त्यभावात्पाणिहोममभ्यनुजानन्ति। कथं पुनस्तत्राग्न्यभावः 'गृह्याणि वक्ष्यामः' (१।१।१) इति हि प्रतिज्ञातम्। उच्यते। पाणिमुखाः पितर इति श्रुत्याकर्षादग्निर्निवर्तितः। एवं च कृत्वा विधिवशेन तेषामभ्यनुज्ञा विज्ञेया न तु प्रतिवच-

१ अनुमोदन्ते। २ अवश्यभावादित्यर्थः।

नेनेति सिद्धम् । तेनाभ्यनुज्ञायामिसस्य पिण्डपितृयज्ञकल्पप्राप्त्यभावेनाग्न्यभाव इत्ययमर्थः ।
ताभ्यामेव मन्त्राभ्यां पाणिषु जुहुयात् । यावन्तो ब्राह्मणाः पित्रादित्रयार्थमुपविष्टास्तेषां सर्वेषां
पाणिषु जुहोति । वचनात् । मन्त्रौ च द्वौ । तत्रार्थादेकैकां आहुतिं विगृह्य विगृह्य सर्वेषां दक्षिणपा-
णिषु जुहोति । प्रक्षणानुप्रहरणमर्थाल्लुप्तम् । अन्ये तु पाणिनैव जुह्वति । तत्पक्षे सुतरां लुप्तम् । अन्ये तु
प्रतिब्राह्मणं द्वे द्वे आहुती ताभ्यामेव मन्त्राभ्यां जुह्वति । विग्रहविध्यभावादारम्भसामर्थ्याच्चेति ।

**ज्ञायां पाणिष्वेव वा ॥ ५ ॥ 'अग्निमुखा वै देवाः**

**पाणिमुखाः पितर' इति हि ब्राह्मणम् ॥ ६ ॥**

एवं पाणौ होमः । अस्मिन्पक्षे पिण्डनिपरणकाले ब्राह्मणानां समीपे पिण्डनिर्वपणं भवति । 'उच्छि-
ष्टसंनिधौ पिण्डान्दद्याद्वा पितृयज्ञवदिति' श्रुतिः । पाणिहोमस्य विषयमुत्तरत्र विस्तरेण विभावयि-[1]
ष्यामः । अनाहिताग्नेः पार्वणे अग्नौकरणमेव न पाणिहोमः । पाणिहोमं श्रुत्या द्रढयति ॥ ५ ॥
देवानामग्निमुखत्वादग्नौ होमः । पितॄणां पाणिमुखत्वात्पाणौ होमो युक्त एवेत्यर्थः ॥ ६ ॥ अर्थद्व-

१ विचारयिष्यामः ।

यमत्र विधातुमिष्टमिति गम्यते। तत्राग्नौ कृत्वा भाजनेषु भोजनार्थमन्यदन्नमनुदिशति ददातीत्ये-
४॥ कोऽर्थः। यदि पाणिहोमः कृतः। तदाचान्तेषु अन्यदन्नं ददातीत्यपरः। आचान्तशब्दे विप्रतिपन्नास्तत्र केचिदाहुः। यदा पाणिषु होमस्तदा हुतमन्नं भाजनेषु निधाय अभक्षयित्वैव निष्क्रम्याचामेयुः। आचान्तेष्वन्यदन्नं ददाति। ननु यदि भक्षणं न कृतं तर्ह्याचमने विधिर्न घटते। अशुचित्वाभावादिति चेत्। वयं पृच्छामः। कृतेऽपि भक्षणे किमित्याचमेयुः?। अशु-

## यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति[2] ॥ ७ ॥

चित्वादिति चेत्। तर्हि अशुचित्वेऽपि किमित्याचमेयुः? वचनादिति चेत्। तर्हि तदत्राप्य-विशिष्टम्। अत्रापि हि पाणिहोमनिमित्तमाचमनं चोद्यते। न च सर्वमाचमनमशुचित्वनिमित्तम्। कर्माङ्गनिमित्तकयोरपि विद्यमानत्वात्। तथाहि पिण्डदानमुक्त्वाह मनुः। 'आचम्योदक् परावृत्य त्रिराचम्य शनैरसून्' इति। नैमित्तिकं चेदम्। अशुचित्वाभावात्। तद्वदिदमपि नैमित्तिकम्। पूर्वं प्राशननिषेधश्च दृश्यते। 'अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः। पितर-

१ विविधतर्कवन्त.। २ दिशअतिसर्जने। अतिसर्जनं दानम्।

स्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥ यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् । एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥' इति । ननु सपिण्डीकरणे दृश्यते । 'हुतशेषं पितृभ्यः पाणिपु ददातीति । तस्यैवायं निषेधः । ददातिचोदितत्वात्तस्य । इदं तु जुहोतिचोदितम् । तस्मान्नास्य निषेध इति चेत् । तत्र ब्रूमः । विधितो यत्पाणौ निहितमन्नं तदुच्यते दत्तशब्देन । एवमुदीच्या आहुः । भाष्यकारास्त्वेतन्नेच्छन्ति । चमु भक्षणे । आचान्तेष्विति भक्षितेष्वित्यर्थः । पाणिषु हुतं चेत्तेष्वन्नेषु प्राशितेष्वन्यदन्नं ददाति । न तयोर्मिश्रीभावः कार्यः । अथाग्नौकरणपक्षे । 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते' इति हि मनुनाग्निसाम्यं दर्शितम् । तत्र प्राशितेष्वाचमनं न कार्यम् । अग्नितुल्यत्वदर्शनात् । प्रयोगान्तरस्य च तद्विषयस्याविधानात् । केचित्त्वङ्गुष्ठनिवेशनादिप्रयोगान्तरं कुर्वन्ति । तत्पक्षे आचमनं कार्यं न वेति चिन्त्यम् । अन्नं पाणितले दत्तमित्ययं निषेधः सपिण्डीकरण एव । तस्य ददातिचोदितत्वात् । अस्य न भवति । जुहोतिचोदितत्वात् । तच्छब्दचोदितस्यैव च तद्ग्रहणं युक्तम् । तस्यैव प्रथमं संप्रत्ययादिति । अत्र युक्तं ज्ञात्वा कार्यम् ॥ ७ ॥ हुतशेषमन्नं भोजनार्थेषु पात्रेषु निहितेष्वन्नेषु

१ पूर्वोक्तप्रकारेण । २ तत्सदृशशब्देन ग्रहणमित्यर्थः । ३ अनेन अन्तरङ्गत्वं दर्शितम् । ४ विचार्य ।

ददाति । अग्निहोमे पाणिहोमे च समानमिदम् ॥ ८ ॥ सृष्टं प्रभूतं दत्तमृक्ष्मृद्धिकरणशीलम् । इतिशब्दो हेत्वर्थः । तस्मात्प्रभूतमन्नं देयमिति भोजनस्य पर्याप्तमात्रं न देयम् । किन्तु ततोऽप्यधिकं देयं यथोच्छिष्येतेत्यर्थः ॥ ९ ॥ मधुवाता इति तिस्रो मधुमत्य इति प्रसिद्धाः । अन्नादिनिवृत्तेच्छां ज्ञात्वा, ततो मधुमतीति तिस्रोऽक्षन्निसेकां श्रावयेत् । तृप्तेषु श्रावयेदित्येव वक्तव्ये ज्ञात्वेति वचनं ? ज्ञात्वैताः श्रावयेत् । पूर्वं तु भोजनकालेऽन्याः श्रावयेदित्येवमर्थम् । मनुनाप्युक्तम् ।

अन्नमन्ने ॥ ८ ॥ सृष्टं दत्तमृध्नुकमिति ॥ ९ ॥ तृप्ताञ्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च ॥ १० ॥ सम्पन्नमिति पृष्ट्वा,

'स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि । आख्यातानीतिहासांश्च पुराणानि खिलानि च' इति ॥ १० ॥ अथ सम्पन्नमित्यनेन वाक्येन ब्राह्मणान्पृच्छति । ते च सम्पन्नमिति प्रत्यूचुः । ततो यद्यदन्नमुपभुक्तम् । तस्मात्तस्मादन्नादुद्धरति पिण्डार्थम् । तत्तत्स्थालीपाकेन सहैकीकरोति । अन्नप्रकिरणार्थं चार्थादस्मिन्नेव काले सर्वस्माद्भुक्तशेषादुद्धरति । ततो भुक्तोद्धृ- ॥१२९॥

तच्छेषं निवेदयेद्ब्राह्मणेभ्यः । 'इदं शिष्टं किमनेन कर्तव्यमिति' । स्थालीपाकेन सहेति नात्रापूर्वस्थालीपाकश्चोद्यते । सर्वश्राद्धेषु प्रसङ्गात् । अनिष्टं चैतत् । तेनानुवाद एवायम् । तेन यत्र स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणं भवति । यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति । आचार्येणाष्टौ श्राद्धान्युक्तानि 'अन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥' तत्र पूर्वेषु चतुर्षु

## यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य, शेषं निवेदयेत्

स्थालीपाकादुद्धृत्याग्नौकरणम् । अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणम् । पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात् । तच्च साधितमेव प्राक् । उत्तरेषु चतुर्षु भोजनार्थादन्नादुद्धृत्य, घृताक्तं कृत्वा, पाणिहोमः । ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम् । तेषु स्थालीपाकविध्यभावात्पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च । तत्रार्थाल्लेखा च तदभ्युक्षणं च सकृदाच्छिन्नास्तरणं च लेखा त्रिरुदकेनेत्यादिपत्नीप्राशनान्तं भवति । अग्निं प्रत्येयादिति तु न भवति । अन्य-

च्चातिप्रणयनादि सर्वं न भवति ॥ ११ ॥ शेषं निवेदितं ब्राह्मणैर्यद्यभिमतं स्वीकर्तुं अभिप्रेतं तदा तेभ्यो दद्यात्। अथ यद्यनुमतमनुज्ञातं 'इष्टैः सहोपभुज्यतामिति' तदा स्वीकुर्यात् । ज्ञातिभिर्बान्धवैश्च सहोपभुञ्जीत। मनुरपि 'ज्ञातिभ्यः सत्कृतं दत्वा बान्धवानपि पूजयेत्।' इति। ततोऽनाचान्तेषु पिण्डान्निदध्यात्पूर्वोक्तविधिना। अनाचान्तेष्वित्येव सिद्धे भुक्तवत्स्वितिवचनं? भुक्तवत्स्वेव निदध्यात्। न पूर्वमित्येवमर्थम्। मनुना भोजनात्पूर्वं निपरणं विहितम्। तन्न

॥ ११ ॥ अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात्

॥ १२ ॥ आचान्तेष्वेके ॥ १३ ॥ प्रकीर्यान्नमुपवीयोंस्वधोच्यतामिति

कार्यमिति। अतो ज्ञायते 'अन्यस्य मनुप्रोक्तस्याविरुद्धस्याङ्गस्येच्छातः करणमिति' ॥ १२ ॥ आचान्तेषु निपरणमेक इच्छन्ति ॥ १३ ॥ आचमनोत्तरकालमुच्छिष्टानां समीपेषु अन्नं प्रकिरेत्। अनाचान्तेषु पिण्डदानपक्षेऽपि पिण्डं दत्वा, तत उच्छिष्टानां समीपे अन्नं प्रकिरेत्। मनुरपि 'सार्ववर्णिकमन्नाद्यमानीयाप्लाव्य वारिणा। समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि ॥' इति ॥१२६॥

अधुना प्रथमं पात्रं विवृणुयात् । तत उपवीय । यज्ञोपवीती भूत्वेत्यर्थः । मनुरपि 'उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः । सव्ये प्राचीनमावीती निवीती कण्ठसज्जने' ॥ इति । ततो दक्षिणां दत्वा 'ॐ स्वधोच्यतामिति' ब्राह्मणान्विसृजेत् । अतिसृजेत् । अनुजानीयादुत्थापयेदित्यर्थः । ते च 'ॐ स्वधेति' प्रत्यूचुः ॥ १४ ॥ अस्तु स्वधेति वा विसृजेत् । तथा सति ते च अस्तु स्वधेति प्रत्यूचुः । विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः । दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄन् ॥ 'दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा

विसृजेत् ॥ १४ ॥ अस्तु स्वधेति वा ॥ १५ ॥

च नो माव्यगमद्बहुधेयं च नोऽस्त्विति' ॥ उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः । ततो गृहबलिं दद्यादिति धर्मो व्यवस्थितः ॥' इति मनुः । अष्टौ श्राद्धानीत्युक्तम् । तत्रान्वष्टक्यं च पूर्वेद्युश्च मासि मासि चेति श्राद्धत्रयं द्वितीयेऽध्याये व्यक्तीकृतम् । पार्वणं चानाहिताग्नेर्व्यक्तीकृतमेव । आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य, ततः पार्वणं करोति । पितृयज्ञं तु निर्वर्त्येति मनुवचनात् । तत्र पाणिहोमो ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डदानं

च। काम्ये च पाणिहोमो भुक्तशेषमात्रेण पिण्डदानं चास्त्येव। मासि श्राद्धस्य पार्वणस्य चैककार्यत्वादन्यतरेणैवालमित्युक्तम्। तत्र मासि श्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य एव। काम्यश्राद्धं कृतं चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्ये। काम्यश्रुतिस्तु तिथिविशेषमपेक्ष्य [1]चरितार्था सती न पुनरावर्तयितुं शक्नोति। अग्निहोत्रद्रव्यवत्। आभ्युदयिके तु युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहा' इति यवावपनम्। नान्दीमुखाः पितरः प्रीयन्तामित्यर्घ्यनिवेदनं यथालिङ्गम्। नान्दीमुखाः पितर इदं वो अर्घ्यमित्यर्घ्यप्रदानमन्त्रो यथालिङ्गम्। 'अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति' होममन्त्रौ। मधुवाता इति तृचस्य स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत्। अक्षन्नमीमदन्तेति षष्ठीम्। आचान्तेषु भुक्ताशयान्गोमयेनोपलिप्य, तेषु प्राचीनाग्रान्दर्भानास्तीर्य, तेषु पृषदाज्यमिश्रेषु भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण।

[1] चरितार्था लब्धावकाशेत्यर्थः।

मन्त्रावृत्तिरुक्ता। अन्ये तु 'नान्दीमुखेभ्यः पितृभ्यः स्वाहेति'। एवं यथालिङ्गं पिण्डान्निपृणन्ति। सर्पिषि दध्यानयति एतदेव पृषदाज्यम्। अनुमन्त्रणादि पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। ॐ स्वधोच्यतामित्यस्य स्थान उपसंपन्नामिति। शेषं पूर्ववत्। अष्टमीश्राद्धं काम्यवत्। एकोद्दिष्टे त्वेको विप्र एकमर्घ्यपात्रम्। न दैवं, न धूपो, न दीपो, न स्वधाशब्दो, न पितृशब्दो, न नमःशब्दः, तिलोऽसीति मन्त्रस्योहस्तूष्णीं वा तिलावपनमर्घ्यनिवेदनं तूष्णीम्। अर्घ्ये दत्ते तत्पात्रं न्युब्जं करोति। भोजनार्थादन्नादुद्धृत्य, घृताक्तं कृत्वा, अमुष्मै स्वाहेति पाणिहोमः। अमुष्मैशब्दस्य स्थाने प्रेतनाम वाच्यम्। नाभिश्रवणम्। भुक्तशेषमात्रेणैकं पिण्डं निपृणीयात्। तस्य गोत्रं नाम गृहीत्वा निनयनमन्त्रस्योहः कार्यः। अनुमन्त्रणादि सर्वं समन्त्रकं भवति। पत्नीप्राशनं तु नास्ति। अभिरम्यतामिति विसर्जनम्। एवं नव श्राद्धवर्जितेष्वेकोद्दिष्टेषु। नवश्राद्धेषु त्वेकोद्दिष्टेषु सर्वममन्त्रकं भवति। 'नवश्राद्धममन्त्रकम्' इति वचनात्। दशाहेषु यानि श्राद्धानि तानि नवश्राद्धानि। 'नवश्राद्धं दशाहानीति' वचनात्। यत्र यत्रास्माभिः पाणिहोम उक्तस्तत्र सर्वत्र भाष्यकारः पिण्डदानं नेच्छति। स्थालीपाकेन सह भुक्तशेषेण पिण्डदानं चोद्यते। तत्र च स्थालीपाकाभावादिति। ये तु

पिण्डदानमिच्छन्ति त एवमाहुः । 'स्थालीपाकेन सह पिण्डदानं कार्यम् । न पृथक् । स्थालीपाकेन भुक्तशेषेण चेत्यर्थः । न तु यत्र स्थालीपाकस्तत्रैव पिण्डदानं कार्यमिति । तेन तेष्वपि केवलेन भुक्तशेषेण पिण्डदानं कार्यमिति' ॥ १९ ॥ इति चतुर्थेऽष्टमी कण्डिका ॥ ८ ॥



॥ ९ ॥ अथ शूलगवः ॥ १ ॥ शरदि वसन्ते वार्द्रया ॥ २ ॥ श्रेष्ठं स्वस्य यूथस्य ॥ ३ ॥ अकुष्ठिपृषत् ॥ ४ ॥ कल्माष-

उक्तोऽर्थः । शूलगव इति कर्मनाम । स वक्ष्यते । शूलोऽस्यास्तीति शूलः । अर्शआदिभ्योऽच् । शूलीत्यर्थः । शूलिने रुद्राय गोपशुना यागः । स शूलगवः ॥ १ ॥ शरदि वसन्ते वा ऋतौ आर्द्रानक्षत्रेण स कार्यः ॥ २ ॥ स्वस्य यूथस्य श्रेष्ठं कायेन अभिषिच्येत्यनेन संबन्धः ॥ ३ ॥ स च पशुः अकुष्ठिपृषत्कार्यः । कुष्ठी च पृषच्च न ग्राह्य इत्यर्थः । पृषद्वर्णो लोहितः शुक्लबिन्दुभिः संयुक्तः ॥ ४ ॥ कल्माषं गृह्णीयादित्येके आहुः । कल्माषो

१ सप्तमसूत्रस्थेन अभिषिच्यपदेनेत्यर्थ. ।

नाम कृष्णबिन्दुचितः ॥ ५ ॥ कामं कृष्णं गृह्णीयादालोहवांश्चेद्भवति । जम्बूसदृश इत्यर्थः ॥ ६ ॥ एवंगुणयुक्तं पशुमस्मात्कर्मणः पूर्वमेव व्रीहियवमतीभिरद्भिरभिषिञ्चति । स्नपयति । स्वयमेव ॥७॥ शिरस्त उपरि प्रारभ्य आ भसत्त आ पुच्छप्रदेशात् ॥ ८ ॥ रुद्रायेति मन्त्रेण । तत उत्सृष्टो

मित्येके ॥ ५ ॥ कामं कृष्णमालोहवांश्चेत् ॥ ६ ॥ व्रीहियवमतीभिरद्भिरभिषिच्य ॥ ७ ॥ शिरस्त आ भसत्तः ॥ ८ ॥ 'रुद्राय महादेवाय जुष्टो वर्धस्वेति' ॥ ९ ॥ तं वर्धयेत् सम्पन्नदन्तमृषभं वा ॥ १० ॥ यज्ञियायां दिशि ॥ ११ ॥ असन्दर्शने ग्रामात्

वर्धते पशुर्यावदुत्पन्नदन्तो भवति सेचनसमर्थो वा भवति ॥ ९ ॥ तं पशुमेवमवश्यं वर्धयेत्ततोऽन्यतरस्यामवस्थायां कर्म कुर्याद्वक्ष्यमाणम् ॥ १० ॥ ग्रामाद्बहिः प्राच्यामुदीच्यां वा दिशि कार्यमित्यर्थः ॥ ११ ॥ यत्रस्थं ग्रामो न पश्यति । यत्रस्थो वा ग्रामं न पश्यति । तत्र देशे

---

१ ष्णाशौचे इत्यस्माण्णिचि रूपमिदम् ।

कार्यमित्यर्थः ॥ १२ ॥ अनयोरन्यतरस्मिन्काले कुर्यात् ॥ १३ ॥ शूलगवं यो वेत्ति असौ वैद्यः । यः स्वयं कृतवानसौ चरित्रवान् । अस्मिन्कर्मण्येवंगुणं ब्राह्मणमुपवेशयेत् । आज्यभागान्तं कृत्वा । अथ शामित्रस्यायतनं करोति । ततः सपलाशामार्द्रशाखां यूपं यूपार्थं पुरस्तादग्नेर्निखनाति । तक्षणं न भवति । शाखामिति वचनात् । सा च यूपप्रमाणा ग्राह्या । व्रततौ

॥ १२ ॥ ऊर्ध्वमर्धरात्रादुदित इत्येके ॥ १३ ॥ वैद्यं चरित्रवन्तं ब्रह्माणमुपवेश्य, सपलाशामार्द्रशाखां यूपं निखाय, व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयार्धशिरसि पशुं बद्ध्वा यूपे रश-

कुशरज्जू वा रशने भवतः । व्रतती वल्ली पलाशविशेषः । रशने अन्यतरयेति विवृत्या पाठः कर्तव्यः । प्रगृह्यत्वात् । तयोरन्यतरया रशनया यूपं परिवीय परिवेष्ट्य, अन्यतरया रशनया अर्धशिरसि शृङ्गमध्ये दक्षिणं शृङ्गं यथा बद्धं भवति तथा पशुं बद्ध्वा, यूपे तत्परिवीतायां

१ ब्रह्माणमित्यर्थः । २ एकदेशी समासोऽत्र अर्धं नपुंसकमित्यनेन ।

रशनायां वा निबध्नाति प्रत्यङ्मुखं यस्मै नम इति मन्त्रेण । यूपादयो विशेषा अस्मिन्नेव पशौ भवन्ति । न पश्वन्तरे । कुतः ? । पशुकल्पेति विध्यभावात् ॥ १४ ॥ प्रोक्षणादिवचनं ? प्रोक्षणात्प्राक्तनस्य पशुकल्पविहितस्य निवृत्त्यर्थम् । पशुना पशुकल्पेन समानम् । विशेषमात्रं वक्ष्यामः ॥ १५ ॥ पात्री दारुमयी । पलाशं पर्णम् । वपाहोमकाले पात्र्या पालाशेन वा वपां जुहुयात् ।

नाया वा नियुनक्ति 'यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति' ॥१४॥ प्रोक्षणादि समानं पशुना विशेषान्वक्ष्यामः ॥१५॥ पात्र्या पलाशेन वा वपां जुहुयादिति ह विज्ञायते ॥१६॥ 'हराय मृडाय शर्वाय शिवाय भवाय महादेवायोग्राय भीमाय पशुपतये रुद्राय शंकरायेशानाय स्वाहेति' ॥ १७ ॥ षड्भिर्वोत्तरैः ॥ १८ ॥ रुद्राय स्वाहेति वा ॥१९॥

जुह्वपवादः । श्रुत्याकर्ष उत्सन्नश्रुतिमूलत्वदर्शनार्थमित्युक्तं सर्वत्र स्मर्तव्यम् ॥ १६ ॥ त्रयाणामपि प्रदानानां होममन्त्रमाह—द्वादशनामको मन्त्रः ॥ १७ ॥ उग्रायेत्यादिषड्नामको वा मन्त्रो भवेदित्यर्थः ॥ १८ ॥ अयमेकनामको वा भवेदित्यर्थः ॥ १९ ॥ वपास्थालीपाकाव-

दानहोमपर्यन्तं कृत्वा, स्विष्टकृतः प्रागेकैकस्यां दिशि चतस्रश्चतस्रः कुशसूना निधाय, तासु चरुशेषेण मांसशेषेण च बलिं हरेत् । यास्ते रुद्र पूर्वस्यां दिशीति प्रतिदिशं त्वादेशनं कार्यम् । यास्ते रुद्र दक्षिणस्यां दिशि, यास्ते रुद्र प्रतीच्यां दिशि, यास्ते रुद्रोदीच्यां दिशीति

चतसृषु चतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद् 'यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एनं नमस्ते अस्तु मा मा हिंसीरि'- त्येवं प्रतिदिशं त्वादेशनम् ॥ २० ॥ चतुर्भिः सूक्तैश्चतस्रो दिश उप- तिष्ठते 'कद्रुद्रायेमारुद्रायाते पितरिमा रुद्राय स्थिरधन्वन' इति ॥२१॥

दर्भस्तम्बैस्तृणैश्च कल्पवद्ग्रथित्वा, सर्वेषामग्रं गृहीत्वा, एकीकृत्य, ग्रथिताः कुशसूना उच्यन्ते ॥ २० ॥ चतुर्भिर्यथाक्रमेण चतस्रो दिश उपतिष्ठेत । सूक्तग्रहणं ? कद्रुद्रायेत्यस्मिन्सूक्ते अस्मे सोमश्रियमधीत्यादिना रौद्राणां निवृत्त्यर्थम् ॥ २१ ॥ एतच्च दिशामुपस्थानं सर्वरुद्रयज्ञेषु भव-

तीत्यर्थः । एवमेव देवमध्ये गोष्ठस्य यजेतेति । रौद्रं गवेधुकं निर्वपेदित्यादिषु च विज्ञेयम् ॥ २२ ॥ स्थालीपाकव्रीहीणां ये तुषाः फलीकरणाश्च । फलीकरणा नाम सूक्ष्मकणाः । तांश्च पुच्छादीनि चाग्नावनुप्रहरेत् ॥ २३ ॥ शांवत्यस्त्वाचार्यः कर्मणा भोगमुपानदादि कुर्वीतेति

सर्वरुद्रयज्ञेषु दिशामुपस्थानम् ॥ २२ ॥ तुषान्फलीकरणांश्च पुच्छं चर्म शिरः पादानित्याग्नावनुप्रहरेत् ॥ २३ ॥ भोगं चर्मणा कुर्वीतेति शांवत्यः ॥ २४ ॥ उत्तरतोऽग्नेर्दर्भवीतासु कुशसूनासु वा शोणितं निनयेत्—'श्वासिनीघोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति' ॥ २५ ॥ अथोदङ्ङावृत्य 'श्वासिनीघोषिणीविचि-

मन्यते ॥ २४ ॥ अङ्गावदानसमये केनचित्पात्रेण शोणितं गृह्णीयात् । तदिदानीमुत्तरतोऽग्नेः । दर्भवीतास्विति । दर्भराजिषु । कुशसूनासु वा शोणितं निनयेत् । श्वासिनीरिति मन्त्रेण ॥ २५ ॥ अथ तत्रस्थ एवोदङ्मुख आवृत्य यत्तत्र संज्ञपनदेशे रुधिरमूवध्यं वा ऊवध्यगोहं वा

 

अवस्रुतं भूमौ निपतितं भवति तत्सर्पेभ्य उद्दिशति श्वासिनीरिति मन्त्रेण। तच्च सर्पा हरन्ति देवतारूपेण । ततः स्विष्टकृदादिहृदयशूलोद्वासनसहितं होमशेषं समापयेत्। 'अथास्य रुद्रदेवस्य यष्टा स्तोतृप्रियस्य वै । सर्वात्मनो भगवतो माहात्म्यमधुनाब्रवीत्' ॥ २६ ॥ यावन्ति किल लोके नामधेयानि अभिधानानि सन्ति। तानि सर्वाणि अस्यैव नामधेयानि। यावन्तो लोके शब्दाः सन्ति तैः सर्वैरयमेव वाच्य इत्यर्थः। त्रैलोक्ये यावन्तः पदार्थास्ते

न्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति' सर्पेभ्यो यत्तत्रासृग्वध्यं वाव स्रुतं भवति तद्धरन्ति सर्पाः ॥ २६ ॥ सर्वाणि ह वा अस्य नामधेयानि ॥ २७ ॥ सर्वाः सेनाः ॥ २८ ॥ सर्वाण्युच्छ्रय-

सर्वे रुद्र एवेत्यर्थः। एवं ब्रुवता रुद्रस्य सर्वगतत्वं दर्शितम् ॥ २७ ॥ त्रैलोक्ये यावन्त्यः सेनाः सन्ति। ताः सर्वा अस्यैव सेनाः। न ह्यन्यस्याल्पभाग्यस्य सेनाः संभवन्ति। अस्य तु महाभाग्यादुपपद्यन्त एव । एवं ब्रुवता राजादयो देवादयश्च रुद्र इत्युक्तं भवति। स्तुतिषु च न पुनरुक्ततादोषः ॥ २८ ॥ यावन्ति च लोके उच्छ्रयणानि उत्कृष्टानि भूतानि विद्वत्तया, यष्ट्- ॥१३१॥

तया, ध्येतृतया, ध्यापयितृतया, दातृतया, तपस्तप्तृतया, अन्येन वा। तानि सर्वाण्यस्यैवांशभूतानि। न ह्यन्यस्योत्कृष्टत्वसंभवः। अथवा सर्वाण्युच्छ्रयमाणानि पर्वतादीनि तान्यस्यैव। तेष्वयं वसतीत्यर्थः। एवमनेकधा स्तुतवानाचार्यः ॥ २९ ॥ इतिशब्द उक्तपरामर्शी। उक्तेन मार्गेण यो रुद्रदेवं विदित्वा यजति शूलगवेन यजमानः। तमित्येवंविद्यजमानं प्रीणाति रुद्रदेवः।

**णानि ॥ २९ ॥ इत्येवंविद्यजमानं प्रीणाति ॥ ३० ॥ नास्य ब्रुवाणं च न हिनस्तीति विज्ञायते ॥ ३१ ॥ नास्य प्राश्नीयात्[1] ॥ ३२ ॥**

अत्युत्कृष्टेन सुखेन यजमानं संयुनक्तीत्यर्थः ॥ ३० ॥ अस्य कर्मणः ब्रुवाणं वक्तारं च। चेत्यपिशब्दार्थः। तेन च वक्तारमपि, विज्ञातारमपि, अध्येतारमपि, उपकर्तारमपि न हिनास्ति रुद्रदेव इत्येवं श्रूयते ॥ ३१ ॥ अस्य पशोर्हुतशेषं न प्राश्नीयात्। अन्यत्र इच्छातः प्राश्नीयाद्वा। अयं निषेध एकेषां मतेन कृतः। उत्तरत्र प्राशनविधानात् ॥ ३२ ॥ अस्य कर्मणः संबन्धीनि

---

१ अशभोजने धातुः।

द्रव्याणि ग्रामं नाहरेयुः केचिदपि। प्रजा अभिमारुको ह एष देवो भवति। आहरणे सत्याहृतवतीः प्रजा हिनस्ति रुद्रदेवः। इतिशब्दो हेतौ। तस्मान्नाहरेयुरिति ॥ ३३ ॥ पुत्रादीन्समीपतः प्रतिषेधयेन्नात्रागन्तव्यमिति ॥ ३४ ॥ हुतशेषं पशोर्नियोगान्नियमेन प्राश्नीयात्स्वस्त्ययन इति कृत्वा। अतो ज्ञायते निषेध एकीयः पक्ष इति ॥ ३५ ॥ अधुनास्य कर्मणः

नास्य ग्राममाहरेयुरभिमारुको हैष देवः प्रजा भवतीति ॥ ३३ ॥ अमात्यानन्ततः प्रतिषेधयेत् ॥ ३४ ॥ नियोगात्तु प्राश्नीयात्स्वस्त्ययन इति ॥ ३५ ॥ स एष शूलगवो धन्यो लोक्यः पुण्यः पुत्र्यः पशव्य आयुष्यो यशस्यः ॥ ३६ ॥ इष्ट्वान्यमुत्सृजेत् ॥ ३७ ॥ नानुत्सृष्टः

फलमाह—शूलगवेनेष्टवतो धनलोकपुण्यपुत्रपश्वायुर्यशांसि भवन्तीत्यर्थः॥ ३६ ॥ एवं शूलगवेनेष्ट्वा अन्यं पशुं श्रेष्ठं स्वस्य यूथस्येत्यादिलक्षणयुक्तमभिषिच्योत्सृजेत्पुनः शूलगवकरणार्थम् ॥ ३७ ॥ सर्वथाऽनुत्सृष्टो नैव स्यात्। शूलगवार्थं सकृदुत्सर्गोऽवश्यं कार्यः। शूलगवः सकृद-

१ त्यदादित्वादेकस्य वृद्धसंज्ञा। ततो वृद्धाच्छः। २ मृङ् प्राणत्यागे धातुः। तस्माण्णिजन्तादुकञ्। ३ निवारयेदित्यर्थः।

वश्यं कार्य इत्यर्थः । एवं च कृत्वा नित्यं कर्मैदमिति ज्ञायते ॥ ३८ ॥ नहा पशुर्भवति । पशुगुणकं कर्म पशुः । शूलगवनामकेन पशुकर्मणा रहितो न भवेदित्यर्थः । यत एवं श्रूयते तस्मात्सकृदुत्सर्गोऽवश्यं कार्यः ॥ ३९ ॥ शूलगवं समाप्य, ग्रामं प्रविश्य, ततः प्रागुक्तं शन्तातीयं जपन्गृहानियाद्गच्छेत् । प्रविशेदित्यर्थः ॥ ४० ॥ अथ नैमित्तिकं कर्माह—पशूनामात्मी-

स्यात् ॥ ३८ ॥ नहा पशुर्भवतीति विज्ञायते ॥ ३९ ॥ शन्तातीयं[1] जपन्गृहानियात्[2] ॥ ४० ॥ पशूनामुपताप एनमेव देवं मध्ये गोष्ठस्य यजेत् ॥ ४१ ॥ स्थालीपाकं सर्वहुतम्[3] ॥ ४२ ॥

यानां यदा उपतापो व्याधिरभूत्तदा एतमेव देवं द्वादशनामकं षण्नामकं एकनामकं वेत्यर्थः । तं मध्येगोष्ठं यजेत् ॥ ४१ ॥ तत्र द्रव्यमाह—आज्यभागान्तं कृत्वोपस्तीर्य, दर्व्या स्थालीपाकं सर्वं निधाय, प्रत्यभिघार्य, जुहुयात् । एवं सर्वहुतं कुर्यात् । अत्र प्रधानहविषः शेषाभावात्स्विष्टकृन्न कार्यः । दिगुपस्थानं कार्यमित्युक्तम् । ततः सर्वप्रायश्चित्तादि समापयेत् ॥ ४२ ॥

---

१ शन्नइन्द्राग्नीइति सूक्तम् । २ इण्गतौधातु । ३ पारेमध्येइत्यादिनाव्ययीभावोऽयम् ।

ततो बर्हिषः आज्यं च । चशब्दात्तुषान्फलीकरणांश्चाग्नावनुप्रहृत्य, प्रतिधूमं गा आनयेत् ॥ ४३ ॥
ततः शन्तातीयं जपन्पशूनां मध्यमियाद्गच्छेत् । प्रविशेदित्यर्थः । अन्ये तु शन्तातिशब्दवन्ति
सूक्तानि शन्तातीयशब्देनोच्यन्त इति व्याचख्युः । कानि तानि ? । 'ईळे द्यावापृथिवी' 'इदं
ह नूनमेषां' 'उत देवा अवहितम्' इत्येतानि । 'शन्न इन्द्राग्नी' इतीदं शन्तातीयमिति

**बर्हिराज्यं चानुप्रहृत्य धूमतो गा आनयेत् ॥ ४३ ॥ शन्तातीयं जपन्पशूनां मध्यमियान्मध्यमियात् ॥ ४४ ॥ नमः शौनकाय नमः शौनकाय ॥ ४५ ॥ ॥ ९ ॥ इत्याश्वलायनगृह्यसूत्रं समाप्तम् ॥**

प्रसिद्धमित्युक्तमस्माभिः प्राक् । अध्यायान्तलक्षणार्थं द्विर्वचनम् ॥ ४४ ॥ शौनकनमस्कारस्तत्प्र-
सादेनेदं गृह्यशास्त्रमस्माभिः प्रणीतम् । तच्च समाप्तमिति ज्ञापनार्थम् ॥ ४५ ॥ इति चतुर्थे
नवमी कण्डिका ॥ ९ ॥ आश्वलायनकं गृह्यमित्थं वै विवृतं मया । सद्भिः सारं तु वै ग्राह्यमसारं
त्यज्यतामिति ॥ इत्याश्वलायनगृह्यसूत्रवृत्तौ गार्ग्यनारायणीयायां चतुर्थोऽध्यायः ॥ ४ ॥

अथ बहृचाचार्यान्तरमतेन सपिण्डीकरणप्रयोगं वक्ष्यामः सौकर्यार्थम् । तत्तु संवत्सरे पूर्णे द्वादशाहे वा कार्यम् । तत्र नियमेन द्वौ ब्राह्मणौ दैवे । पितृकृत्ये तु त्रयः । इतरत्सर्वं पार्वणवत् । विशेषमात्रं वक्ष्यामः । तत्र चत्वार्यर्घ्यपात्राणि । एकं प्रेतस्य । त्रीणि पितृपितामहप्रपितामहानाम् । तत्र चतुर्ष्वपि दर्भानन्तर्धाय, चतुर्ष्वप्यपो निषिच्य, चत्वारि सकृदनुमन्त्र्य, प्रेतपात्रे तूष्णीं तिलान्प्रक्षिप्य, ततो मन्त्रेण त्रिषु पात्रेषु क्षिपति । मन्त्रावृत्तिरुक्ता । ततो गन्धमाल्यैश्चत्वार्यपि पात्राण्यर्चयित्वा, प्रथमं पात्रमितरेषु पित्रादिपात्रेषु त्रिषु निनयति 'समानीव' इत्यृचा । ततोऽर्घ्यनिवेदनादि पार्वणवत् । अत्र स्थालीपाको नास्तीति कृत्वा भोजनार्थादन्नादुद्धृत्य, घृताक्तं कृत्वाऽग्नौ कुर्यात् । पाणिषु वा पूर्वोक्तेन विधिना जुहुयात् । ततो हुतशेषं पितृभ्यः पाणिषु ददाति । अग्निहोमपक्षे पाणिहोमपक्षे च समानमिदम् । अन्नं पाणितले दत्तमिति पूर्वप्राशननिषेधो द्रष्टव्यः । पिण्डनिर्वपणकाले प्रेतोद्देशेनैकं पिण्डं तूष्णीं दत्त्वा, पित्रादित्रिभ्यः पार्वणवद्दत्त्वा, प्रेतपिण्डं त्रिधा विभज्य, त्रिषु पिण्डेषु निदध्यात् । मधुमतीभिः 'मधुवाता' इति तिसृभिः 'सङ्गच्छध्वम्' इति द्वाभ्यां च । ततोऽनुमन्त्रणादि सर्वं पार्वणवत् । ॐ स्वस्त्यस्त्विति ब्राह्मणान्विसर्जयेत् । एवं चतुर्थस्य प्रपितामहस्य विच्छेदो भवति । त्रिधा अप्ये-

नमेव सपिण्डीकरणम् । तस्यास्तु मातृपितामहीप्रपितामहीभिः सपिण्डीकरणम् । एवं सति चतुर्थ्याः प्रपितामह्याः पिण्डविच्छेदो भवति । अनपत्यानां तु प्रेतानां सपिण्डीकरणं नास्ति । अन्यस्यापि यस्य सपिण्डीकरणं कार्यं, यस्य न कार्यं, येन कर्त्रा कार्यं, यैश्च सह पिण्डदानं कार्यं, तत्सर्वं स्मृतितोऽवगन्तव्यम् । एवमाचार्यान्तरमतेन प्रयोगः । सुखार्थमिदमत्र व्याख्यातम् ॥ ॥ आश्वलायनगृह्यस्य भाष्यं भगवता कृतम् । देवस्वामिसमाख्येन विस्तीर्णं तत्प्रसादतः ॥ १ ॥ दिवाकरद्विजवर्यसूनुना नैध्रुवेण वै । नारायणेन विप्रेण कृतेयं वृत्तिरीदृशी ॥ २ ॥



॥ श्रीगणेशाय नमः ॥ ॥ अथ गृह्यसूत्रपरिशिष्टस्य प्रथमोऽध्यायः ॥१॥ गृह्ये तु यानि चोक्तानि क्वचिद्वैतानिकेऽपि वा। विधेरलोपनार्थाय तानि वक्ष्याम्यतः परम् ॥ ॥ १ ग्रन्थप्रतिज्ञा ॥ ॥ अथास्मिन्नाश्वलायनगृह्ये यानि कानिचिदन्योक्तानीहेच्छता नाचार्येणानुमतानि ज्ञापितानि यानि चोक्तप्रदर्शितक्रियाणि तानि सर्वावबोधाय यथावदभिधास्यामः ॥ कर्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत प्रत्यृचोक्ति-ष्वृगन्तेष्वनादेश आज्यं द्रव्यं स्रुवः करणमवदानवत्सु दर्वी पाणिः कठिनेषु कर्मावृत्तौ मन्त्रोऽप्याव-र्तते कर्मणोऽन्त आचमनं चेति सामान्यम् ॥ १ ॥ ॥ २ संध्यावन्दनकालादि प्राणाया-मान्तम् ॥ ॥ अथ संध्यामुपासीतेत्याचार्यो यावहोरात्रयोः सन्धी[2] यश्च पूर्वाह्णपराह्णयोस्तत्का-लभवा देवता सन्ध्या तामुपासीत। बहिर्ग्रामात्प्राच्यामुदीच्यां वान्यस्यां दिश्यनिन्दितायामनल्प-मुदकाशयमेत्य प्रातः शुचिर्भूतः पाणिपादमुखानि प्रक्षाल्य, शुचौ देशे भूमिष्ठपादोऽनपाश्रित उपविष्टः शिखां बध्वाचामेत्। प्रकृतिस्थमफेनाबुद्बुदमुदकमीक्षितं दक्षिणेन पाणिनादाय, कनि-ष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य, तिस्र इतराङ्गुलीः[3] संहतोर्ध्वाः कृत्वा, ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः

१ श्रौते। २ यश्च संधिः। ३ अम्बाम्बेत्यादिना षत्वम्।

सकुशौ दर्वीस्रुवौ दर्वीं निधाय च । स्रुवस्य[1] बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः ॥ ३६ ॥
आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् । कुशानां मूलतो दण्डमेकैकं त्रिर्मृजीत वै ॥ ३७ ॥
प्रोक्ष्य प्रताप्य चासाद्य बर्हिष्युत्तरतो घृतात् । संमृज्य तैः कुशैर्दर्वीमासाद्योत्तरतः स्रुवात्
॥ ३८ ॥ तान्कुशान्कृतसंमार्गान्प्रोक्ष्याग्नौ प्रहरे[2]दथ । अभिघार्य[3] चरुं चोदगुद्वास्य च ततः
परम् ॥ ३९ ॥ अन्तरेणाग्निमाज्यं च नीत्वाप्यासाद्य बर्हिषि । आज्याद्दक्षिणतो देशे जयन्तवचनं
यथा ॥ ४० ॥ केचित्प्रत्यभिघार्येति सूत्रमन्यदधीयते । सहश्रर्पण[4]पक्षे तु पृथगुद्धरणाय वै ॥ ४१ ॥
निदध्यात्पात्रमितरन्मध्ये चर्वाज्ययोस्ततः । अलंकृ[5]त्याभिघार्येध्ममाधायायन्त इत्यथ ॥ ४२ ॥

---

१ तत्र प्रथमं स्रुवसंमार्जनप्रकारमाह—स्रुवस्येति । २ ते यथा पूर्वाग्रा भवन्ति तथा तान्प्रक्षिपेदित्यर्थ इति याज्ञिकाः । ३ स्रुक्स्रुवसंमार्जनानन्तरं कर्तव्यमाह—अभिघार्येति । ४ सहश्रपणं नाम अनेकदैवत्यश्चरुरेकस्यां स्थाल्यां पच्यते तत् । ५ ततः किं कुर्यादित्याह—अलंकृत्येति । केचन विश्वानि नो दुर्गहेत्यादिमन्त्रेणाग्नेरलंकरणं कुर्वन्ति । केचन गन्धपुष्पाद्यैः । ईशानीं दिशमारभ्यालंकुर्यात् । अग्न्यलंकरणशेषेणात्मानं ब्रह्माणं चालंकुर्वन्ति ।

स्रुवेणाज्यं गृहीत्वाग्नेः प्रत्यगुत्तरदेशतः । आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत् ॥ ४३ ॥
नैर्ऋतीं दिशमारभ्य त्वीशानीं पूर्ववद्धरेत् । उभयत्र चतुर्थ्यन्तं प्रजापतिपदं स्मरेत् ॥ ४४ ॥
स्वाहेत्याघारयेदेतावाघाराविति भाषितौ । जुहुयादग्नये स्वाहेत्युदगाज्यं स्रुवेण तु ॥ ४५ ॥ तेनैव
जुहुयादाज्यं सोमायेति तु दक्षिणे । उद्धृत्य[1] च चरोरर्धमभिमृश्येदमग्नये ॥ ४६ ॥ इतीदमग्नी-
षोमाभ्यमिति त्वभिमृशेत्परम् । दर्व्यामुपस्तृणात्याज्यमाग्नेयचरुमध्यतः ॥ ४७ ॥ अवद्य हविरङ्गु-
ष्ठपर्वमात्रं तदोप्य च । अस्यैव पूर्वतस्तद्वदवद्यास्यां तदावपेत् ॥ ४८ ॥ पात्रस्थमभिघार्यास्यां
स्थितमप्यभिघारयेत् । जुहुयादग्नये स्वाहा दर्व्यां मध्ये[2] हविर्भुजः ॥ ४९ ॥ प्रसक्तरे वा देशे तदा-
ज्यभागावपेक्ष्य च । जुह्वत्यभिदधदिव दर्व्या मध्येन याज्ञिकाः ॥ ५० ॥ उपस्तीर्य[3] द्वितीयस्या-
प्यवदानादि पूर्ववत् । प्राग्वोदग्वाग्नीषोमाभ्यां स्वाहेति जुहुयादथ ॥ ५१ ॥ पञ्चावत्ती[4] तु पश्चा-
र्धादप्यवद्याति वै ततः । स्विष्टकृ[5]त्युत्तरार्धस्य पुरस्तादप्यवद्याति ॥ ५२ ॥ उपस्तीर्या[6]थ हविषोर्द्वयो-

---

१ आज्यभागानन्तरं कर्तव्यमाह—उद्धृत्येति । २ कुत्र वा आहुतिप्रक्षेप इत्याह—मध्ये । ३ द्वितीयाहुतिं दर्शयति—उपस्तीर्येति । ४ पञ्चावत्ती जामदग्न्यगोत्रः । ५ इदानीं स्विष्टकृतं निरूपयति—स्विष्टकृतीति । ६ यत्र चरुद्वयं त्रयं ततोधिकं वा तत्र स्विष्टकृदवदानं कथमित्याह—उपस्तीर्याथेति ।

 

रप्युत्तरार्धतः । पूर्वावदानतो भूयः सकृत्सकृदवद्याति ॥ ५३ ॥ ओप्य द्विरभिघार्यं तत्पात्रस्थं नाभिघारयेत् । यदस्येत्यादिना हुत्वा प्रागुदक्च हविर्भुजः ॥ ५४ ॥ [1]तामिध्मबन्धनीं रज्जुं विस्रस्य [2]प्रास्य चानले । अथाश्रेत्यादिभिर्मन्त्रैर्हुत्वाज्याहुतिसप्तकम् ॥ ५५ ॥ [3]निनयेत्पूर्णपात्रं तन्निहितं त्वथ बर्हिषि । वामभागे तथासीना पत्नी प्रत्यग्घविर्भुजः ॥ ५६ ॥ आसिच्य पाणौ तत्तोयं माहं प्रजां परासिचम् । [4]आपो अस्मानयं मन्त्र इदमाप इतीरितः ॥ ५७ ॥ सुमित्र्या न इति त्वन्य एभिर्मार्जनमाचरेत् । [5]कार्यं पुंसवनादौ तु पत्न्या अपि तु मार्जनम् ॥ ५८ ॥ केचिन्नि[6]नीतिमेवाहुरुपस्थायों च मे स्वरः । पर्यूह्य परिषिच्यान्नं हुतशिष्टं घृतं च यत् ॥ ५९ ॥ ब्रह्मणे तदभावे तु ब्राह्मणाय प्रदीयते । [7]अग्नीषोमपदस्थान इन्द्राग्नीपदमावपेत् ॥ ६० ॥ अयमेव विशेषः स्याद्दर्शे

---

१ अनन्तरकृत्यमाह—तामिति । २ अत्र न मन्त्रः । केचित्तु रुद्रायतन्तुचरायस्वाहेत्यमुं मन्त्रं पठन्ति । ३ अनन्तरकृत्यमाह-निनयेदिति । निषिञ्चेदित्यर्थः । ४ निनयनानन्तरं कृत्यमाह—आपो इति । ५ कस्मिंश्चित्कर्मणि पत्न्या अपि मार्जनं भवतीत्याह—कार्यमिति । ६ निनीतिः स्थापनमात्रम् । ७ अमावास्यायां प्रधानदेवतामन्त्रविषये विशेषमभिधातुमाह—अग्नीषोमेति ।

त्वन्यत्समं भवेत् । एतत्तन्त्रं हुतानां स्यान्नोपवासादिरिष्यते ॥ ६१ ॥ प्रधानदेवतान्यत्वं सद्यस्का-
लस्तथेष्यते ॥ ६२ ॥ (८२) इति स्थालीपाकप्रयोगः ॥ ॥ ३ स्वस्तिवाचनम् ॥
स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित् । आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् ॥ १ ॥
अर्चिता ब्राह्मणाः सम्यग्गन्धमाल्यैः सदक्षिणैः । तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः
॥ २ ॥ तिष्ठेद्दार्चयिता तेषां दक्षिणस्यामुदङ्मुखः ॥ बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितम्
॥ ३ ॥ अथ वाचयितुर्बाहुं दक्षिणं समुपाश्रिताः । तिष्ठन्त्युदङ्मुखाः सर्वे संस्कार्यस्तत्रतत्र
तु ॥ ४ ॥ मन इत्यादिकं मन्त्रमेकाग्रमतिरादिशेत् ॥ मनसः स्म इति ब्रूयुस्ते समाहितपूर्वकम्

---

१ कर्मपरिसमाप्तौ किंचिद्वक्तुमाह—एतदिति । २ तन्त्रमितिकर्तव्यता । ३ दर्शपूर्णमासयोरेवोपवासः । 'दर्श-पूर्णमासाभ्यामुपवास' इतिसूत्रात् । ४ केषुचित् कर्मसु स्वस्तिवाचनमिष्टं तदाह—स्वस्तीति । ५ तत्र इतिकर्तव्यतामाह—अर्चिता इत्यादिभिः । ६ सम्यग् नाम विधितः भक्तितः द्रव्योत्सवादिसामग्रीतः । ७ वक्तारः स्वस्तिवाचकाः । ८ तिष्ठेदिति यजमानस्यापि उपवेशनाभावो गम्यते आ परिसमाप्तेः । तथा च स्मृतिः 'सूत्रेण वेष्टितं कुंभमपां पूर्णं सुधूपितम् । मृत्ताम्रादिमयं भूमौ रत्नगर्भं समर्चितम् ॥ १ ॥ सिततण्डुलपूर्णेन पात्रेण पिहिताननम् । पल्लवाद्यैश्च संगृह्य गुरुस्तिष्ठेदुदङ्मुखः ॥ २ ॥ वक्तारश्चापि तिष्ठेयुरिति' । ९ आदिशेत् ब्रूयात् ।

 



॥ ५ ॥ प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् । प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथान्विताः ॥ ६ ॥ शान्तिपुष्ट्यृद्ध्यविघ्नानि शिवं कर्म तथैव च । अस्तुशब्दान्तमुच्येरन्वाचयित्वा तथा परैः ॥ ७ ॥ प्रस्तुत देवतायां तु होमं कुर्याद्विचक्षणः । तस्य नाम गृहीत्वाथ प्रीयतामिति भाषते ॥ ८ ॥ पुण्याहं स्वस्ति ऋद्धिं च भवत्पूर्वं ब्रुवन्त्विति । प्रणवाद्यं त्रिराचष्टे भवदादी विना परे ॥ ९ ॥ पुण्याहादेस्त्रिरभ्यासैर्मन्द्रमध्योच्चनिःस्वनैः । आचक्षीरन्निमे सर्वे यथागमपरम्परा ॥ १० ॥ अत्युक्तिविषये भेदस्तृतीयस्त्वृद्ध्यतामिति । तुर्यं श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः ॥ ११ ॥ आप इत्यादिभिः शान्तिं ततः कुर्यात्समाहितः । स्वस्तिवाचनमन्त्रेष्टं सर्वेषामृद्धिकर्मणाम् ॥ १२ ॥ आदावन्ते प्रयोक्तव्यमिति मन्त्रविदां मतम् । जयन्तस्वामिना

---

१ आचक्षीरन् प्रत्युत्तरं दद्युः २ परैः अन्यैरपि । ३ आगमशब्देन आगमज्ञा आचार्या उच्यन्ते । ४ आदावन्ते प्रयोक्तव्यमित्यत्र स्वस्तिवाचने आदिपदेन वृद्धिश्राद्धानन्तरं कर्मादौ स्वस्तिवाचनमिति । तथाच प्रयोगपारिजाते 'गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि । वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम्' इति । कारिकाकारेणापि चौलादौ तथैव प्रयोगः प्रदर्शितः । जयन्तेनापि तथैव पुंसवनादौ दृश्यते । उपनयनादौ 

शौनकोपि 'अपरेद्युः कृतस्नानभूषणः स्वस्तिवाचनम्' इति । स्वस्तिवाचनप्रयोगोऽपि 'प्रस्तुत्य देवतायां तु' इत्यनया कारिकया प्रधानकर्मनिष्ठा स्वस्तिवाचनस्याव्यवधानतैव बोधिता । अतएव जयन्तादिभिर्विवाहे मधुपर्कानन्तरमेव स्वस्तिवाचनं लिख्यते । अन्यच्च 'आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् । मङ्गलं श्राद्धानन्तरमेव कर्तव्यं भवतीति । अत्र कुलाचारप्राप्तं किंचिदुच्यते । पुंसवनादावपि पूर्वेद्युर्गणपतिपूजनपूर्वकं मातृकास्थापनं चावश्यकत्वाच्छमीदूर्वाप्लक्षादिकुलवृक्षपल्लवादिभिः वंशपात्रे वस्त्रेण सह कुलदेवतास्थापनाद्यर्चनं च कृत्वा वृद्धिश्राद्धं कुर्यादिति । तथाच प्रयोगपारिजाते 'श्राद्धे ह्यभ्युदये प्राप्ते देवतास्थापनं स्मृतम् । ज्ञातिधर्मकुलश्रेणीलोकानां वृद्धिकारकम् ॥ तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसा तथा ॥ ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् । (गौर्यादिषोडश इत्येके) वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान्पितॄन्' इति । 'कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः' इति । तदेव देवस्थापनमित्युच्यते उपनयनादौ । १ क्षत्रियादीनां तु निरोंकारं स्वस्तिवाचनं कार्यं तथाच यमः 'पुण्याहवाचनं चैव ब्राह्मणस्य विधीयते । तथैव च निरोंकारं कार्यं क्षत्रियवैश्ययोः' ।

योगः ॥ ॥ जयन्तोक्तेन[1] मार्गेण गर्भाधानमिहोच्यते । चतुर्थदिवसादूर्ध्वं मघामूलादि वर्जयेत् ॥ १ ॥ अलंकृते गृहे गन्धधूपमाल्यादिभिः शुभैः । ऋतुस्नातां शुभैर्गन्धमाल्यादिभिरलंकृताम् ॥ २ ॥ अलंकृतः स्वयं तद्वद्दारोप्य शयने शुभे । पेषयित्वाश्वगन्धाया मूलं शुद्धाम्बरे क्षिपेत् ॥३॥ ऋचोदीर्ष्वाति इत्यस्या दक्षिणे नासिकापुटे । निष्पीड्य पिष्टं तन्मूलं वस्त्रसंशोधितं ततः ॥४॥ एवं[2] कृत्वोपगमने[3] कृतं स्याद्गर्भलम्भनम् ॥ ५ ॥ ( १०० ) इति गर्भाधानप्रयोगः ॥ ॥ ५ पुंसवनप्रयोगः[4] ॥ ॥ तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत् । आद्यो गर्भो न विज्ञातस्तृतीये मासि वै यदि ॥ १ । चतुर्थे मासि कर्तव्य आद्यगर्भे स्मृतो विधिः । स्यादाभ्युदयिकं श्राद्धं गर्भिण्या एकभोजनम् ॥ २ ॥ अथापरेद्युस्तिष्यर्क्षे पत्नीं कृत्वा समीपतः । आत्मनो दक्षिणे पार्श्वे

---

१ वक्ष्यमाणकर्मानुष्ठानसिध्यर्थं स्थालीपाकं स्वस्तिवाचनं चोक्त्वेदानीं गर्भाधानाख्यं कर्म वक्तुमारभते–जयन्तेति । २ ततः किं कुर्यादित्याह–एवमिति । ३ उपगमनं सकृदेव कार्यं असकृत्करणे दोषश्रवणं यथा 'असकृच्चेद्भवेन्न स्याद्गर्भाधानं कृतं स्त्रियाः' । ४ येन कर्मणा गर्भस्य पुंस्त्वं जायते तत् ।

प्रसगानडुहाजिने ॥ ३ ॥ गर्भिण्युपविशेत्स्नाता जयन्तवचनं यथा । पूर्णपात्रनिधानान्तमन्वाधानादि
पूर्ववत् ॥ ४ ॥ निर्वापप्रोक्षणे स्यातां प्रजापतय इत्यथ । कृत्वाज्यभागपर्यन्तमवघातादि पूर्ववत् ॥५॥
समानरूपवत्साया[1] गोर्दधि प्रसृतौ[2] क्षिपेत् । तादृश्या गोरभावश्चेदन्यस्या गोर्दधि क्षिपेत् ॥ ६ ॥
माषद्वयं यवं च त्रिः पृच्छेत्किं पिबसीति ताम् । त्रिः पुंसवनमित्युक्त्वा प्राश्यैवं प्रसृतित्रयम्
॥ ७ ॥ अण्डरूपेण माषौ स्तः शिश्नरूपेण वै यवः ॥ ८ ॥ ( १०८ ) इतिपुंसवनम् ॥

॥ ६ **अनवलोभनप्रयोगः** ॥ ॥ परिमण्डलगेहस्य छायायामुपवेश्य ताम् । सिंचेद्दूर्वारसं
त्वस्या दक्षिणे नासिकाबिले ।' १ ॥ प्रजावज्जीवपुत्राभ्यां सूक्ताभ्यां वा तदिष्यते । अन्ये
त्वाहुरिदं कर्म कृत्स्नं स्यात्परिमण्डले ॥ २ ॥ एकदेशं चरोर्हुत्वा प्रजापतय इत्यथ । यत्ते
सुशीम इत्यस्या हृद्देशं पाणिना स्पृशेत् ॥ ३ ॥ भवेत्स्विष्टकृदाद्यस्याः पतिर्वा देवरोऽपि
वा । कर्ता स्याद्देवरस्तद्वत्तस्याः पत्युरसंभवे ॥ ४ ॥ आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः
॥ ५ ॥ ( ११३ ) इत्यनवलोभनम् ॥

॥ ७ **सीमन्तोन्नयनप्रयोगः** ॥ ॥ चतुर्थे[3] गर्भमासे

---

१ अत्र पुंसवनविषये किंचिद्विशेषकर्माभिधातुमाह—समानेति । २ पाणिर्निकुब्जः प्रसृतिः । ३ अथ सीमन्तोन्नयनमभिधातुमुपक्रमते—चतुर्थे इति ।

 



तु सीमन्तोन्नयनं भवेत्। पूर्वास्यासंभवे षष्ठे मासे यद्वाष्टमे भवेत् ॥ १ ॥ पुंनक्षत्रे सिते पक्षे त्वन्वाधानादि पूर्ववत्। पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः ॥२॥ अभिजित्प्रोष्ठपाच्चैव अनूराधा तथाश्वयुक्। ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यते ॥ ३ ॥ प्राग्ग्रीवमूर्ध्वलोम स्यात्प्रसगानडुहाजिनम्। प्रोक्षणीं स्रुवमासाद्य चमसं चाज्यभाजनम् ॥ ४ ॥ इध्माबर्हिरयं प्रोक्त आज्यहोमेष्वनुक्रमः। आज्यासादनपर्यन्तं पवित्रकरणादथ ॥ ५ ॥ चर्मण्यथोपविष्टायां समन्वारभते पतिः। स्यादाज्यभागपर्यन्तमिध्माधानादि पूर्ववत् ॥ ६ ॥ अष्टावाज्याहुतीर्हुत्वा मन्त्रैर्धाता ददात्विति। औदुम्बरः स्यात्स्तबकस्तदभावेऽन्यवृक्षजः ॥ ७ ॥ फलवत्स्तबकौ ग्राह्यौ त्रिशुक्ला शललो तथा। त्रीणि स्युः कुशपिञ्जूलान्येभिरेकीकृतैरथ ॥ ८ ॥ ललाटे केशयोः संधिमारभ्य व्यूहनं भवेत्। त्रिर्व्यूहेदथ सीमन्तमामूर्ध्नो भूर्भुवःस्वरोम् ॥ ९ ॥ चतुर्वा व्यूहनं कार्यं सूत्रकारवचो यथा। आवर्तते त्वयं मन्त्रः सर्वत्रैवं प्रतीयताम् ॥ १० ॥ संप्रेष्य सोमं राजानमिति प्रैषेण गाथिनौ।

---

१ अस्य कर्मणः प्रतिगर्भमावृत्तिर्नास्ति स्त्रीसंस्कारत्वात्। नात्र गर्भसंस्कारः नेजमेष इति सूक्ते एवं तं गर्भमाधेहीति मन्त्रलिङ्गात्। २ अत्र आज्यहोमेषु पात्रासादनप्रकारमाह—प्रोक्षणीमिति।

सोमो न इति गायेतां तौ स्थानेऽसौपदस्य तु ॥ ११ ॥ समीपे या नदी तस्या नाम गङ्गे सरस्वति । ततः स्विष्टकृदादि स्याद्दीयते वृषभस्ततः ॥ १२॥ ब्रह्मणे तदभावे तु ब्राह्मणेभ्यः प्रदीयते । यद्यच्चोपदिशेद्वृद्धा ब्राह्मणी सधवप्रजा ॥ १३ ॥ पत्नी कुर्यादिहापि स्यान्नान्दीश्राद्धं पुरैव तु । नावर्तत इदं कर्म[1] प्रतिगर्भमिति स्थितिः ॥ १४ ॥ ( १२७ ) इति सीमन्तोन्नयनप्रयोगः ॥ ॥ ८ जातकर्मप्रयोगः ॥ ॥ जाते पुंत्रे[2] पिता कुर्यान्नन्दीश्राद्धं विधानतः । प्राङ्नाभिच्छेदनात्पुंसः स्नानं कृत्वा सचैलकम् ॥ १ ॥ जातकर्म ततः कुर्यादन्यै[3]रालम्भनात्पुरा । एकस्मिन्भाजने सर्पिर्मधु चैव समानयेत् ॥ २ ॥ अवघृष्य हिरण्येन संसृज्येरँल्लवा यथा ।

---

१ इदं च कर्मावश्यं कार्यं 'पन्याः प्रथमजं गर्भमात्तकामाः सुदुर्भगाः । आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः । तासां निरसनार्थाय श्रियमावाहयेत्पतिः । सीमन्तकरणाल्लक्ष्मीस्तमावहाति मन्त्रतः । श्रिया श्रितशरीरत्वात्तां त्यजन्तीह मोहिताः' । अकरणे च विशेषमाह सत्यव्रतः 'स्त्री यद्यकृतसीमन्ता प्रसूयेत कथंचन । पुत्रं गृहीत्वा विधिवत्पुनः संस्कारमर्हति' । २ पुत्रग्रहणं कन्यकानिवृत्त्यर्थम् । ३ अन्यत्वं च प्रसवसमयोपयोगिनीं स्त्रियं वर्जयित्वैव वेदितव्यम् ।

हिरण्येन कुमारं तं प्राशयन्मधुसर्पिषी ॥ ३ ॥ प्रते ददामि मन्त्रेण मातुरुत्सङ्गसंस्थितम्। हिरण्यं दक्षिणे कर्णे निधायैतामृचं जपेत् ॥ ४ ॥ मेधां त इति सव्ये च निधायैतामृचं जपेत्। ऋक्क्रमेणास्य युगपदंसावभिमृशेदथ ॥ ५ ॥ प्रथमाऽश्मा भवेतीन्द्रश्रेष्ठानीत्यपरा ततः। तृतीयास्मै प्रियं धीति कुमार्याः स्यादमन्त्रकम् ॥ ६ ॥ (१३३) इतिजातकर्म ॥ ॥ ९ नामकरणप्रयोगः ॥ ॥ अनन्तरं दशम्यादौ यद्वा नामकृतिर्भवेत्। द्वादश्यां नामकरणं[2] नान्दीश्राद्धे कृते सति ॥१॥ पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम्। पक्षो घोषवदित्यादिरेवकारादिनाद्दतः ॥ २ ॥ स्वस्त्यस्मै देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत्। नामाभिवादनीयं तु पित्रोर्हृद्योपनीतितः ॥ ३ ॥ (१३६) इति नामकरणम् ॥ ॥ १० निष्क्रमणप्रयोगः ॥ ॥ चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत्। स्नातं स्वलंकृतं चाभिहितस्वस्त्ययनं शिशुम् ॥ १ ॥ आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम्। अभ्यर्च्य देवताः सम्यगाशिषो वाचयेदथ ॥ २ ॥ कृत्वा प्रदक्षिणं गेहमान-

---

१ स्तनबाह्वोर्मध्यप्रदेशोंऽस इति वृत्तिकारः। २ अत्र कालविशेषमाह संग्रहकारः 'पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः। अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि'।

यन्ति ततः स्वकम् । मातृष्वसुर्गृहं यद्वा मातुलादिगृहं नयेत् ॥ ३ ॥ तदाशीर्वचनाद्यैः स्यादीर्घायुरभिवन्दितः । जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः ॥ ४ ॥ ( १४० ) इति निष्क्रमणम् ॥ ॥ ११ अन्नप्राशनप्रयोगः ॥ ॥ अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं[1] भवेत् । कृत्वाभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम् ॥ १ ॥ अन्नं तं प्राशयेदन्नपत इत्यादिमन्त्रतः । कर्मयोगेन वाजादिपक्षोक्तः प्राशयेद्द्विजः ॥ २ ॥ आजतैत्तिरमांसानां प्राशनं कामयोगतः । अमन्त्रकमिदं कुर्यात्प्राशनं योषितामपि ॥ ३ ॥ ( १४३ ) इत्यन्नप्राशनम् ॥ ॥ १२ चौल ( चूडाकर्म ) प्रयोगः ॥ ॥ तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे । शुक्लपक्षे शुभर्क्षे तु कृत्वाभ्युदयिकं तथा ॥ १ ॥ यथान्वयं वा केषांचिदुपनीत्या सहेष्यते । स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु[2] कर्मसु ॥ २ ॥ एतस्मिन्नेव काले स्याद्व्रतस्नातोपनायनम् । अन्यत्रापि विवाहः स्यादिति सूत्रकृतो मतम् ॥ ३ ॥

---

१ अन्नप्राशने कालान्तराणि नारदेनोक्तानि 'जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् । तदभावेऽष्टमे मासि नवमे दशमेऽपि वा । द्वादशे वापि कुर्वीत प्रथमान्नाशनं परम् । संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः' ।

२ वृद्धिर्मंगलं तेन परिपूर्णानि ।

चौलंकर्मोपनयने विवाहः प्रथमस्तथा । व्रतानि स्नानमित्येषां लौकिकोऽग्निरिति स्थितिः ॥ ४ ॥ पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । व्रीहिपूर्णं शरावं स्याद्यवपूर्णं तथाऽपरम् ॥ ५ ॥ माषपूर्णं तथान्यत्तत्तिलपूर्णमथापरम् । एतानि च शरावाणि न्यसेदुत्तरतोऽनलात् ॥ ६ ॥ कुमारो मातुरुत्सङ्ग आस्ते प्रत्यग्घविर्भुजः । अथानडुहमन्यस्मिञ्शरावे गोमयं क्षिपेत् ॥ ७ ॥ शमीपर्णानि चान्यस्मिन्द्रे स्तो मातुः समीपतः । मातुर्दक्षिणतो ब्रह्मा सप्त सप्त च सप्त च ॥ ८ ॥ कुशपिञ्जूलकानां तु गृहीत्वास्तेऽथवा पिता । कुर्यादाघारपर्यन्तमाज्यसेकादि पूर्ववत् ॥ ९ ॥ इदमादि विवाहान्तं नैवेष्टावाज्यभागकौ । अग्न आयूंषि तिसृभिः प्रजापते न इत्यृचा ॥ १० ॥ स्रुवेणाज्याहुतीर्हुत्वा शीतोष्णाम्भस्यथानयेत् । पश्चात्स्थित्वा कुमारस्य शीता उष्णाश्च ता अपः ॥ ११ ॥ पाणिभ्यां भाजनेऽन्यस्मिन्युगपन्निनयेदथ । उष्णेन वाय उदकेनेहीत्येतेन तद्भवेत् ॥ १२ ॥ एकदेशं गृही-

---

१ एतत्कर्म लौकिकाग्नौ वैवासनाग्नौ भवतीति संदेह आह—चौलेति । २ व्रतानि महानाम्न्यादीनि । ३ स्नानं समावर्तनम् । ४ प्रत्यक् पश्चिमे भागे । ५ गोमयं अभूमिस्पृष्टमिति जयन्तशौनकौ । ६ इदानीं प्रधानाहुतिं वक्तुमाह—अग्न इति ।

त्वासां नवनीतं च वै ततः । दध्नो [1]रसमुपादत्ते नास्ति चेन्नवनीतकम् ॥ १३ ॥ प्रदक्षिणं कुमारस्य
शिरस्त्रिः क्लेदयेदथ । आरभ्य वामतः कर्णप्रदेशात्क्लेदनं भवेत् ॥ १४ ॥ स्याच्चैतदादितिः केशान्व-
पत्वित्यादिमन्त्रतः । निदध्यादोषधे त्रायस्वैनमित्यस्य दक्षिणे ॥ १५ ॥ के[2]शपक्षे कुमारस्य हृदयं
तत्कुशत्रयम् । पिञ्जूलेषु क्षुरं न्यस्य स्वधिते मैनमित्यथ ॥ १६ ॥ अवपीडयतीत्यर्थः क्षुरस्ताम्रमयो
भवेत् । येनावपदिति च्छिन्द्याच्छिन्नान्भागग्रकान्कुशान् ॥ १७ ॥ एकीकृत्य शमीपर्णैस्तांश्च मात्रे
प्रयच्छति । छेदनं तु सकेशानां पिञ्जूलानां भवेदिह ॥ १८ ॥ निदधाति च सा माता तानान-
डुहगोमये । पूर्ववत्कुशपिञ्जूलनिधानादि समन्त्रकम् ॥ १९ ॥ येन धातेति मन्त्रोऽयं छेदने तु
विशिष्यते । तृतीये च चतुर्थे तु पिञ्जूलादि समन्त्रकम् ॥ २० ॥ तृतीये येन भूयश्च चतुर्थे
च्छेदनं त्रिभिः।एवमेवोत्तरे पक्षे त्रिरेव च्छेदनं भवेत् ॥ २१ ॥ यत्क्षुरेणेति मन्त्रेण क्षुरधारां निमार्ष्ट्यथ।
आरभ्याग्रत आमूलप्रदेशान्तं निमार्जनम् ॥ २२ ॥ शीतोष्णाभिरिति प्रैषेनानुशिष्याच्च नापितम् ॥
शिखा अपि च कर्तव्यास्तस्य स्वऋषिसंख्यया ॥ २३ ॥ ततः स्विष्टकृदादि स्यात्कुमार्यै स्यादम-

---

१ रसस्तु वस्त्रपीडनेन भवति । २ केशपक्षो नाम कर्णसमीपमूलप्रदेशः ।

न्त्रकम् । व्रीह्यादिपूर्णान्येतानि नापिताय प्रयच्छति ॥ २४ ॥ ( १६७ ) इति चूडाकर्मप्रयोगः ॥ ॥ १३ उपनयन ( मौञ्जी ) प्रयोगः ॥ ॥ ब्राह्मणस्योपनयनमुक्ते काले भवेदथ । कृत्वाभ्युदयिकं श्राद्धं पूर्वेद्युरपरेऽहनि ॥ १ ॥ कृतस्नानमलंकुर्यादाशिषो वाचयेदथ । भुक्तभोज्यस्य शिरसो पवनं स्नानमेव च ॥ २ ॥ एवंभूतं कुमारं तमवस्थाप्यान्तिके ततः । ज्योतिः शास्त्रविदुक्ते तु मुहूर्ते शोभने ततः ॥ ३ ॥ आज्यसंस्कारपर्यन्तमुपलेपादिपूर्ववत् । परिधानं भवेदस्य वाससैवाहतेन तु ॥ ४ ॥ भवेत्प्रावरणं वासः कृष्णाजिनमथापि वा । एवंभूतं कुमारं तं कुर्याद्यज्ञोपवीतिनम् ॥ ५ ॥ आचान्तमुत्तरेणाज्यं यज्ञपात्राणि चानयेत् । अन्तरेणाग्निमात्मानं दक्षिणे तूपवेशयेत् ॥ ६ ॥ बर्हिरास्तरणादि स्यात्स्रुवसंमार्जनादिकम् । समन्वारब्ध एतस्मिन्ब्रह्मचारिण्यथेतरः ॥ ७ ॥

---

१ उपनयनं नाम सावित्र्या ब्राह्मणमुपनयीतेति कात्यायनः । संस्कारेण येन बटुराचार्यादिसमीपं नीयते तत् । हरदत्तस्तु पितृकुलाद्विधिवदाचार्यकुलप्रापणं प्रणीतवान् । कठपरिशिष्टकारस्तु 'ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम् । उपानयं तु तं प्राहुर्याज्ञिकास्तत्त्वदर्शिनः' इति । २ अष्टमे वर्षे गर्भाष्टमे वा । ३ वामप्रदेश इत्यर्थः । अग्नेर्दक्षिणत उपवेशविधानात् ।

कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतीरपि । अत्राज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु ॥ ८ ॥ अग्नेरुत्त-
रतस्तिष्ठेदाचार्यः प्राङ्मुखस्ततः । अकुर्वन्नात्मनोऽग्नेश्च व्यवायं गच्छेतीतरः[1] ॥ ९ ॥ आचार्यस्य पुर-
स्तात्तु तिष्ठेत्प्रत्यङ्मुखस्ततः । अव्यवायस्तु संस्कारः कर्मस्वग्निकुमारयोः ॥ १० ॥ ब्रह्मचारिण
आचार्यः पूरयेदद्भिरञ्जलिम् । आचार्यस्याञ्जलिं त्वन्यैः[2] पूरयेद्वै ततो गुरुः ॥ ११ ॥ तत्सवितुर्वृणी-
त्यस्य निनीयाञ्जलिमञ्जलौ । अवक्षारयतीत्यर्थः स्वेनैं[3] पूर्णं तमञ्जलिम् ॥ १२ ॥ देवस्य त्वेति गृह्णी-
यात्पाणिं साङ्गुष्ठमस्य च । असौस्थानेऽस्य नाम स्यादेवमुत्तरयोरपि ॥ १३ ॥ अप्पूरणादि तद्व[4]-
त्स्यादन्यो मन्त्रः करग्रहे । सविता ते हस्तमित्यप्पूरणादि तथा भवेत् ॥ १४ ॥ हस्तग्रहे तु मन्त्रो-
ऽयमग्निराचार्य इत्यथ । आचार्यो देवसवितरित्युक्त्वा रविमीक्षयेत् ॥ १५ ॥ कस्येति परिदायैनं
प्रजाधिपतये ततः । युवास्वधर्चेतः कुर्यात्प्राङ्मुखं दक्षिणावृतम् ॥ १६ ॥ अस्योपर्यंसयोः स्वस्य
पाणी कृत्वा हृदि स्पृशेत् । तं धीरार्धर्चेतः कृत्वा ब्रह्मचार्यूहनोक्षणे ॥ १७ ॥ पर्यूहनवचश्चैतदुत्त-

---

१ आचार्यं प्रदक्षिणीकृत्य नैव गच्छेदित्यर्थः । २ अन्यः वैदिककर्मकुशलः । ३ अवक्षारणमेवोत्तरार्धेन विवृणोति—स्वेनेति । ४. तद्वत् पूर्ववत् ।

रार्धमिति ब्रुवन् । अत्र पर्यूहनं नास्तीत्याह हेतुं च वृत्तिकृत् १८ ॥ तूष्णीं समिधमादध्यादग्नौ प्रादेशसंमिताम् । एतयचार्थवादध्यादग्नये समिधं त्विति ॥ १९ ॥ स्पृष्ट्वाग्निं तेजसामेति त्वचमार्ष्टि ततो मुखम् । प्रक्षाल्य हस्तमनलमुपस्पृश्यावमार्ष्ट्यथ ॥ २० ॥ प्रक्षाल्य पूर्ववत्स्पृष्ट्वा तृतीयमवमार्ष्ट्यथ । ओष्ठावलामकौ कृत्वा संवृत्तौ तन्निमार्जनम् ॥२१॥ एवं त्रिरवमृज्याग्निमुपस्थाय मयीत्यथ । उपस्थाय मयीत्यादि षड्भिर्मन्त्रैर्हरेन्निर्भुजम् ॥ २२ ॥ जान्वाच्य दक्षिणं पादावाचार्यस्योपगृह्य च । नाम्नाभिवादनीयेन शिरः स्वस्यावनम्य च ॥ २३ ॥ अधीहीत्यादिकं प्रैषं ब्रह्मचारी ब्रवीत्यथ । ब्रह्मचारिणमाचार्यः परिधानीयवाससा ॥ २४ ॥ पाणिभ्यां चात्मनस्तस्य पाणी गृह्णात्यतः परम् । ॐ भूर्भुवःस्वःपूर्वां तु सावित्रीं वाचयेदथ ॥ २५ ॥ पादं पादं च सावित्र्याः स्वयमुक्त्वैव वाचयेत् । ततस्त्वर्धर्चमर्धर्चं सर्वां तामथ वाचयेत् ॥ २६ ॥ एवं वक्तुमशक्तश्चेत्तं यथाशक्ति वाचयेत् ।

---

१ तूष्णीमिति पदं प्राजापत्यं भवति । ब्रह्मचारी च प्राजापत्य इति श्रुतिमूलत्वात् । २ अश्वत्थखादिरपालाशादीनां समिद्भवति । ३ मार्जनं कथं कर्तव्यमित्याह—ओष्ठाविति । ४ आच्य निपात्य । ५ उपगृह्य स्पृष्ट्वा । ६ प्रैषः आज्ञारूपः शब्दप्रयोगः । ७ शक्त्यभावे अनुकल्पमाह—एवमिति ।

स्थापयेद्धृत्समीपेऽस्य ममेत्यूर्ध्वाङ्गुलिं करम् ॥ २७ ॥ आबध्य मेखलां मौञ्जीं दण्डं दत्त्वोक्तमानतः। आदिशेद्ब्रह्मचर्यं च सांप्रतं ब्रह्मचार्यसि ॥२८॥ अपोशानेति मूत्रादावुक्तमाचमनं कुरु। कर्म कुर्वीत संध्यादि विहितोपासनादिकम् ॥२९॥ दिवा मा स्वाप्सीरित्यस्य दिवा निद्रां न कुर्विति। आचार्याधीन इत्यस्य मयानुज्ञात एव सन् ॥३०॥ अशान यद्वा कर्मान्यत्तत्सर्वं मदनुज्ञया। मन्त्रराशिमधीष्व त्वं ब्राह्मणानि समाहितः ॥ ३१ ॥ प्रैषार्थमेवमुक्त्वाथ कालमेकं च निर्दिशेत्। परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम् ॥ ३२ ॥ अप्रत्याख्यायिनं पूर्वं याचेद्भिक्षां भवानिति। भवतीति ब्रुवन्याचेदप्रत्याख्यायिनी यदि ॥ ३३ ॥ व्रीह्याद्यन्यतमं लब्धं गुरवे वेदयीत तम्। अहःशेषं ततस्तिष्ठेत्सायं संध्यामुपास्य च ॥ ३४ ॥ पूर्णपात्रनिधानान्तमुपलेपादिपूर्ववत्। विप्राणां भोजनायालं तूष्णीं निर्वाप्य

---

१ मम व्रत इत्यादिको मन्त्रः। २ कटिप्रदेशे इति शेषः। मौञ्जीबन्धने मन्त्रस्तु अविरोधात् शाखान्तरीयो ग्राह्यः। स च इयं दुरुक्तात्परिबाधमानेत्यादिः। ३ कर्म कुर्वीति सूत्रपदं व्याख्याति—सन्ध्येति। ४ प्रार्थिते नास्तीति यो न ब्रूयात्सोऽप्रत्याख्यायी। ५ निवेदयीत एतत्प्राप्तमिति। ६ तिष्ठन्नोपविशेदित्यर्थः। यदि तथा कर्तुं न शक्नुयात् तर्हि आचार्यः शिष्यानुग्रहार्थं व्रतलोपप्रायश्चित्तं गायत्रीशतं सहस्रं वा जपेत्।

याचितम् ॥ ३५ ॥ तूष्णीं प्रोक्ष्यावघातादि श्रपणान्तं करोत्यथ। आचार्याय शृतः स्थालीपाकस्त्विति निवेदयेत् ॥ ३६ ॥ अन्वारब्धे गुरुः कुर्यादाघारान्तमतः परम्। अत्राज्यभागौ नैवेष्टौ चतुर्थमिति यत्नतः ॥ ३७ ॥ चर्वाहुतित्रयं हुत्वा सदसस्पतिमित्यृचा। ऋचा तत्सवितुस्तद्वदृषिभ्य इति मन्त्रतः ॥ ३८ ॥ कुर्यात्स्विष्टकृदाद्यन्ते चान्नेन द्विजभोजनम्। अस्याशक्तौ करोत्यन्यः श्रपणान्तमिति स्थितिः ॥ ३९ ॥ द्विजान्भुक्तवतो वेदसमाप्तिं वाचयेदथ। क्षारादिवर्जमश्नीयाद्ब्रह्मचारी दिनत्रयम् ॥ ४० ॥ शयीताधश्चतुर्थेऽह्नि मेधाजननमाचरेत्। यथा द्वादशरात्रं स्यद्व्रतमब्दमथापि वा ॥ ४१ ॥ तदा तदन्त एव स्यान्मेधाजननकर्म च। आग्नेयी दक्षिणा प्रत्यग्दक्षिणा निन्दिता दिशः ॥ ४२ ॥ अनिन्दितायामन्यस्यां पलाशं शाखवर्जितम्[2]। तस्याभावे सशाखं[3] वा कुशस्तम्बमथापि वा ॥ ४३ ॥ त्रिः प्रदक्षिणमुक्षन्तमम्भः कुम्भेन तं बटुम्। आचार्यो वाचयेन्मन्त्रं सुश्रवःसुश्रवा इति ॥ ४४ ॥ तत्रैव मेखलादीनि व्युदस्यान्यानि

---

१ आघारातमिति निर्देशः आज्यभागयोर्निरासार्थम्। २ शाखावर्जितं एकशाखमित्यर्थः। ३ तदभावेऽनुकल्पमाह—सशाखं वेति।

धारयेत् । वेदान्तरमधीत्यैनमृग्वेदं ये त्वधीयते ॥ ४५ ॥ उपनीतिरियं तेषामलंकरणवर्जिता । यदैतदुपनीतस्य प्रायश्चित्तं तदा भवेत् ॥ ४६ ॥ कृताकृतं तु वपनं मेधाजननमेव च । मेधाजननसद्भावे व्रतचर्या भवेदिह ॥ ४७ ॥ अनुप्रवचनीयश्च तदभावे द्वयं न च । परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् ॥ ४८ ॥ पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे । भिक्षेतान्नं दिवारात्रावाचार्यायात्मतुष्टये ॥ ४९ ॥ भणितोऽत्र विशेषोऽयं समानमितरद्भवेत् । अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदुच्यते ॥ ५० ॥ पर्यूहनोक्षणे स्यातामादावन्ते च कर्मणः । तूष्णीं समिधमित्यादि ह्युपस्थानान्तमेव च ॥ ५१ ॥ वेदस्वीकरणं यावत्तावदेवं समाचरेत् । अथवा द्वादशाब्दं स्याद्ब्रह्मचर्यमिति स्थितिः ॥ ५२ ॥ सावित्र्या ब्रह्मयज्ञोऽपि तस्य तावदुपाकृतेः ॥ ५३ ॥ (२२०) इत्युपनयनम् ॥ ॥ १४ **महानाम्नीव्रतम्** ॥ ॥ महानाम्न्यादि[1] कर्तव्यं तत्तत्काले व्रतत्रयम् । उक्ते काले ददाम्यन्तं[2] वापनाद्युपनीतिवत्[3] ॥ १ ॥ नवां मौञ्जीं नवं दण्डं दत्त्वा स्विष्टकृदाद्यथ । संवत्सरं चरेदेवं पूर्णेऽब्दे तूत्तरायणे ॥ २ ॥ शुक्लपक्षे बहि-

१ महानाम्नीव्रतं महाव्रतं उपनिषद्व्रतं च । २ काय त्वा परिददामीत्यन्तम् । ३ उपनीतिः उपनयनम् ।

ग्रामाद्विविक्तं देशमेत्य च। पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥ ३ ॥ स्वस्यालं भुक्तये तूष्णीं निरूप्य प्रोक्ष्य तत्र च। तिलानोप्य पचेत्पक्कमाचार्याय निवेदयेत् ॥ ४ ॥ पृच्छति व्रतलोपान्स्वं दत्ते प्रतिवचस्तथा। बहवो व्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् ॥ ५ ॥ लोपेष्वापत्प्रयुक्तेषु पुनर्नावर्तयेद्व्रतम्। तेनान्वारब्ध आचार्य इध्माधानादि पूर्ववत् ॥ ६ ॥ हुत्वाग्नावग्निरित्यादिमन्त्रैश्चर्वाहुतीरथ। ततः स्विष्टकृतोऽवद्येच्छेषं भूमौ निधाय च ॥ ७ ॥ एतमित्याद्यशानान्तमाह प्रैषमतः परम्। भुक्तवन्तं तमाचान्तं जलपूर्णाञ्जलिं ततः ॥ ८ ॥ त्वं व्रतानां व्रतेत्यादि भुक्तवन्तं दिवाकरम्। उपस्थाप्याथ कुर्वीत मीलिताक्षं च वाग्यतम् ॥ ९ ॥ त्रिः प्रदक्षिणमावेष्ट्य वाससा समुखं शिरः। उक्त्वैकरात्रमित्यादि प्रैषं स्विष्टकृदाद्यथ ॥ १० ॥ आवश्यकेभ्य इतरच्छयनं स्नानभोजनम्। अकुर्वन्नेकरात्रं च ब्रह्मचारी नयेदथ ॥ ११ ॥ ईशान्यां च निधायाग्न्याद्यर्वागग्नेस्तृणेषु तु। ईशान्यग्रेषूपविशेदीक्षमाणस्तु तां दिशम् ॥ १२ ॥ शिष्योऽपि स्वमुखं प्रक्षाल्याग्न्याचार्यौ प्रदक्षिणम्। कृत्वाचार्य-

१ अलं पर्याप्तम्। २ भुक्तये भोजनाय। ३ अवदाय होममकृत्वैव स्थापयेदिति प्रतीयते उत्तरत्र होमविधानात्।

स्य संगृह्य पादौ तेषु तृणेषु तु ॥ १३ ॥ ईक्षमाणो दिशं प्रत्यग्दक्षिणामुपाविश्य च । स्वेन पृष्ठेन तत्पृष्ठं संदधाति ततः परम् ॥ १४ ॥ मनसाह[1] महानाम्नीर्भो अनुब्रूहि तं गुरुम् । पृच्छेत्तदहरुत्पन्नान्व्रतलोपांस्ततो गुरुः ॥ १५ ॥ स्वयं संमीलनं कुर्वन्महानाम्नीर्ऋचो गुरुः । त्रिः पुरीषपदैरुक्त्वा तस्योष्णीषं विमोचयेत्[2] ॥ १६॥ ईक्षयेदर्कमीक्षेत मित्रस्येति[3] द्वयेन तु । ससंभारा दिशो वीक्ष्य मित्रस्य च इति त्वथ ॥ १७ ॥ मित्रस्येति चतुर्थेन पुनरादित्यमीक्षयेत् । ईक्षणेऽर्कादिशां मन्त्रा ब्रह्मचारिण एव तु ॥ १८ ॥ मन्त्रान्ते कर्म कर्तव्यं सर्वत्र करणत्वतः । उक्त्वा चाग्न इळेत्यादीन्मन्त्रान्भूमिमुपस्पृशेत् ॥ १९ ॥ अनुप्रवचनीयश्च कार्योऽयं भेद उच्यते । महानाम्नीभ्यः स्वाहेति सावित्र्याः स्थान इष्यते ॥ २० ॥ ( २४० ) **इति महानाम्नीव्रतम् ॥**

**॥ १६ महाव्रतम् ॥**

॥ महानाम्नीव्रतं प्रोक्तं महाव्रतमथोच्यते । पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥ १ ॥ पूर्णे संवत्सरे देशे विविक्ता उपविश्य च । प्राङ्मुखं श्रावयत्येनं महाव्रतमतः परम् ॥ २ ॥ अनुप्रवचनी-

---

१ मनसा नतु वाचेत्यर्थः । आह भावयेदित्यर्थः । २ विमोचयेत् दूरीकुर्यात् । ३ मित्रस्य त्वा चक्षुषा प्रतीक्षे इत्येकः । मित्रस्य त्वा चक्षुषा समीक्षे इति द्वितीयः ।

यादि कुर्यादर्केक्षणादिकम् । महाव्रताय स्वाहेति सावित्र्याः स्थान इष्यते ॥३॥ (२४३) इति महाव्रतम्॥ ॥ १६ उपनिषद्व्रतम् ॥ ॥ श्रावयित्वोपनिषदमादित्यावेक्षणादि च । अत्रोपनिषदे स्वाहा सावित्र्याः स्थान इष्यते ॥१॥ (२४४) इत्युपनिषद्व्रतम् ॥ ॥ १७ गोदानव्रतम् ॥ ॥ गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते । अङ्कोपवेशनं नास्ति श्मश्रूणां वापनं भवेत् ॥ १ ॥ अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे । पिञ्जूलादिनिधानं च श्मश्रुपक्षे भवेदिह ॥ २ ॥ निमार्जने विशेषोऽयं श्मश्रूणीति शिरो मुखम् । शासने नापितस्यायं विशेषः प्रैष उच्यते ॥ ३ ॥ केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति । स्नात्वा च वाग्यतस्तिष्ठेन्नहःशेषं नयेदथ ॥ ४ ॥ आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरुः । उक्त्वा वरं ददामीति दद्याद्गोमिथुनं ततः ॥ ५ ॥ असंभवे गोवृषयोर्भिक्षित्वा वा गुरोर्दिशेत् । श्वः पूर्ववद्व्रतादेशः संवत्सरमिदं चरेत् ॥ ६ ॥ व्रतेष्वेतेषु सर्वेषु प्रसिद्धं केशधारणम् ॥ ७ ॥ ( २५१ ) इति गोदानव्रतम् ॥ ॥ १८ समावर्तनप्रयोगः ॥

---

१ उपनिषच्छब्देन वेदान्तविभागो गृह्यते आरण्यकं च तत्रापि कर्मकाण्डब्रह्मकाण्डात्मके ब्राह्मणे ब्रह्मबोधनाय प्रवृत्तस्य उपनिषच्छब्दवाच्यता । २ कुत्रचिदुन्दनमिति पाठः ।

गुरवे तु वरं दत्त्वा[1] स्नायीत[2] तदनुज्ञया। वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ १ ॥ व्रतपक्षेऽपि शब्दार्थमारण्याध्ययने कृते। विद्यान्ते गुरुमाहाहं किमर्थं करवाणि ते ॥ २ ॥ यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य च। अ[3]चार्यायात्मने चैव मण्यादीन्युपकल्पयेत् ॥ ३ ॥ आचार्यायैव कल्प्यानि न लभेतोभयोर्यदि। कुर्वीत स्वयमेवेदं समावर्तनसंज्ञकम् ॥ ४ ॥ प्रा[4]प्योदगयनाद्युक्तमुक्तस्वस्त्ययनः स्वयम्। प्रागुदीचीं दिशं गच्छेत्तस्यां वै याज्ञियस्य तु ॥ ५ ॥ शाखेशानीं गता तस्याश्छित्त्वा प्रादेशसंमिताम्। आहृत्य समिधं भूमेरन्यत्र निदधाति ताम् ॥ ६ ॥ दत्त्वा गां भोजयेद्विप्रान्गोदानोक्तं करोत्यथ। स्नात्वा वाग्यत इत्यादि न कार्यमिह कर्मणि ॥ ७ ॥ पदान्यू-

---

१ गुरुदक्षिणादाने मनुः 'अपूर्वं गुरवे किंचिदुपकुर्वीत धर्मवत्। क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ॥ धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरेदिति'। २ स्नातकस्तु त्रिविधः। विद्यास्नातको व्रतस्नातो विद्याव्रतस्नातकश्च। गुरून् विद्यया प्रसाद्य यः स्नाति स विद्यास्नातकः। महानाम्न्यादीनि व्रतानि यथाविधि चरित्वा गुर्वनुज्ञापूर्वकं यः स्नाति स व्रतस्नातकः। विद्यामधीत्य व्रतानि च चरित्वा तदन्ते स्नाने विद्याव्रतस्नातकः। ३ तत्सामग्रीं कथयति—आचार्यायेति। ४ इतिकर्तव्यतामाह—प्राप्येति।

ह्यानि वक्त्यत्र वाच्यं त्रायस्व मामिति। मा मा हिंसीरिरिति ब्रूयाद्यथासमिति चापरम् ॥ ८ ॥
तेन म आयुषेसेवमूह्यं मन्त्रद्वयेऽपि च। माम आयुरिति त्वन्यत्सर्वं गोदानवद्भवेत् ॥ ९ ॥
करञ्जबीजमत्रैकं पिष्टेनोन्मृज्य तेन तु। शीतोष्णैः स्नात आचान्तो वह्नेर्गत्वान्तिकं पुनः ॥ १० ॥
युवमिसनया वस्त्रे आच्छाद्यावर्तयेत्त्वियम्। मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु ॥ ११ ॥
आचम्य चाश्मनस्तेज इत्युक्ते सव्यमीक्षणम्। एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमीक्षणम् ॥ १२ ॥
कुण्डले चाश्मनस्तेज इति श्रोत्रमलंकुरु[1]। अनेनैव तु मन्त्रेण पश्चात्सव्यमलंकुरु ॥ १३ ॥
कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम्[2]। अनुलिप्येतराङ्गानि पश्चात्प्रक्षालयेत्करौ ॥ १४ ॥
अनार्तासीति मन्त्रेण बध्नाति शिरसि स्रजम्। सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ ॥ १५ ॥
आस्थाय च्छत्रमादध्याद्दिवश्छन्नासि मन्त्रतः। गृहीत्वा वैणवं दण्डं वेणुरस्यादिमन्त्रतः ॥ १६ ॥
आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च। सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् ॥ १७ ॥

---

१ अलंकुरु इति ग्रन्थकारः कथयति। २ ब्राह्मणः आदौ मुखं लिम्पति क्षत्रियो बाहू वैश्य उदरम् उपस्थं स्त्री इत्यादि।

नवाम्बरेण संवेष्ट्य शिरोऽथोपानहौ स्रजेत् । आहृतां समिधं तिष्ठन्नग्नावाधाय मन्त्रतः ॥ १८ ॥
स्मृतं च म इति ब्रूयादस्मृतं च म इत्यपि । तस्योपरि वदेत्तन्म उभयव्रतमित्यथ ॥ १९ ॥
द्वादशाप्येवमेवोक्त्वा यथापाठमथोत्तरम् । मन्त्रेणैवंविधेनाग्नावाहितायां समिध्यथ ॥ २० ॥
उपविश्य दशादध्यादन्याः प्रादेशसंमिताः । अत्रोपवेशनं प्राह वृत्तिकारः सहेतुकम् ॥ २१ ॥
ममाग्ने दशभिः कुर्वन्स्वाहाकारमृगन्ततः । परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम् ॥ २२ ॥
हंते संकल्पयेन्नक्तं न स्नामीत्युत्तराण्यपि । दास्यन्ति मधुपर्कं ये तत्रैतां रजनीं नयेत् ॥ २३ ॥
( २७४ ) **इतिसमावर्तनम्** ॥ ॥ १९ **स्नातकगमनविधानम्** ॥ ॥ अथ शिष्यः
समावृत्तो नामोपांशु गुरोर्वदेत् । उच्चैरूर्ध्वं वदेत्स्थाने इदमस्वेष्टमाश्रमम् ॥ १ ॥ हे देवदत्त

---

१ होमाधिकारार्थमिति शेषः । २ हंत इदानीमित्यर्थः । ३ अतिवाहयेदित्यर्थः । ४ एतत् समावर्तनं महानाम्न्यादिव्रतानि विधिवदनुष्ठीय कार्यम् । तदकरणे प्रायश्चित्तपूर्वकं वा । प्रायश्चित्तं चोक्तं देवलेन 'कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः । कृच्छ्रं द्वादशरात्रं तु हुत्वा वाज्याहुतीः शतम् । अष्टाविंशतिमष्टौ वा क्रमात्कुर्याद् व्रतानि ह । व्यत्यये तावदभ्यस्तं वेदं तावत्पुनः पठेत् इति । ५ अथ समावर्तनानन्तरम् ।

गार्हस्थ्यं वत्स्यामो भो इति त्वथ। उपांशु[1] जपति प्राणापानयोरिति वै ततः ॥ २ ॥ आम-
न्द्रैरित्यृचं चाथ गुरुश्चैतौ जपस्तथ। ॐ प्रागित्यादिकं मन्त्रं जपित्वाचार्य एव तु ॥ ३ ॥
सूक्तेन तु महित्रीणामवोस्त्वित्यनुमन्त्र्य तम्। वत्स्यथेत्यनुजानीयादनुज्ञातो यदा पथि ॥ ४ ॥
गच्छञ्शृणोति वाक्यानि पक्षिणामप्रियाणि तु। जपेत्कनिक्रदत्सूक्तं देवीं वाचमृचं तथा ॥ ५ ॥
शिवादेरप्रियं श्रुत्वा स्तुहिश्रुतमृचं जपेत्। यस्यां दिश्यथवा यस्मात्पुरुषाद्याघ्रतोऽपि वा ॥ ६ ॥
बिभेत्युभयतो[2] दीप्तमुल्मुकं तद्दिशि क्षिपेत्। मन्त्रेणाभयमित्यादिनैनदुल्मुकमस्यति ॥ ७ ॥ सर्वतो-
भयमुत्पन्नं नच ज्ञातमतो नरात्। अन्यतो वेत्ति लोकाग्नावाघारान्तं करोत्यथ ॥ ८ ॥ पृथि-
व्याद्यष्टभिर्मन्त्रैर्हुत्वाष्टाज्याहुतीरथ। स्थित्वेशान्यां जपेत्स्वस्ति नोमिमीतां तु सप्त वै ॥ ९ ॥
षळृचो जपति त्वन्या यत इन्द्रभयामहे। ततश्च स्विष्टकृद्वर्जं होमशेषं समापयेत् ॥ १० ॥
(२८४) इति स्नातकगमनविधिः ॥ ॥ २० विवाहाङ्गो मधुपर्कः ॥ ॥ यथोक्तलक्षणां
कन्यामुक्ते काले समुद्वहेत्। स्यादाभ्युदयिकं श्राद्धं द्वितीये वक्ष्यते च तत् ॥ १ ॥ अपरेद्युः

१ उपांशु शनैः। २ उभयतः आद्यन्तयोः।

कृतस्नानोऽहतवस्त्रधृतो वरः[1]। स्वलंकृतः सितच्छत्रो पदातिज्ञातिबान्धवैः[2] ॥ २ ॥ वृतो वधूगृहं गत्वा मधुपर्केण पूजितः[3]। कन्याज्ञातिभिरत्रैव मधुपर्को मयोच्यते ॥ ३ ॥ विष्टराद्युपकल्प्यैनमुपवे- श्यासने शुभे[4]। तत्रोपकल्पितं पूर्वं विष्टरं[6] त्रिर्निवेदयेत् ॥ ४ ॥ उत्तराग्रे त्वहं वर्ष्मेत्यस्मिन्नुप- विशेद्वरः। एवमेवोत्तरेषां च पश्चानां त्रिर्निवेदनम् ॥ ५ ॥ निवेदितेन पाद्येन[7] पादौ प्रक्षालयेद्वरः। प्रक्षालयित्रे विप्राय दक्षिणाङ्घ्रिं प्रयच्छति ॥ ६ ॥ पश्चात्सव्यं तु शूद्राय पूर्वं सव्यं प्रयच्छति। गन्धादियुक्तमर्घ्यं च प्रतिगृह्य निवेदितम् ॥ ७ ॥ वेदिताचमनीयापामेकदेशं ततो वरः। उक्त्वामृतोपस्तरणमसिमन्त्रं पिबेदथ ॥८॥ शौचार्थाचमनं कार्यमेवेति प्राह वृत्तिकृत्। अवान्तरेण शौचार्थं सर्वमाचमनं त्विह ॥ ९ ॥ आनीयमानमीक्षेत मित्रस्य त्वेति मन्त्रतः।

---

१ वरः कन्यार्थी। २ बान्धवाः सुहृदः पदातयः सेवकाः ३ पूजितः सन् कन्यां समुद्वहेदिति शेषः। ४ मधुपर्कस्येतिकर्तव्यतां दर्शयति—विष्टरेत्यादिना। ५ एनम् आगतं वरम्। ६ विष्टरश्च 'कतिभिस्तु भवेद् ब्रह्मा कतिभिर्विष्टरो मतः। पञ्चाशता भवेद् ब्रह्मा तदर्धेन तु विष्टरः' इत्युक्तलक्षणः। ७ पाद्यं नाम पादप्र- क्षालनयोग्यं जलम्। ८ इदं आचमनीयं जलान्तरेण न तु निवेदितोदकेन तस्य प्राशनार्थमेव विहितत्वात्। ९ अत्र शौचशब्देन हस्तमुखप्रक्षालनमात्रम्। न तु शुद्ध्याचमनम्।

मधुपर्कमथानीतं पूर्ववच्च निवेदितम् ॥ १० ॥ देवस्य त्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः । मधुवातास्तृचेनैनं मधुपर्कमवेक्षते ॥ ११ ॥ निदधाति च तत्पात्रं सव्ये पाणावितः परम् । अङ्गुष्ठोपकनिष्ठाभ्यामालोड्य त्रिः प्रदक्षिणम् ॥ १२ ॥ वसवस्त्वादिभिर्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् । निमृज्याङ्गुलिलेपं तु भूतेभ्यस्त्वेति मन्त्रतः ॥ १३ ॥ त्रिरुद्धृत्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च । प्राश्नात्यस्यैकदेशं तु विराजो दोह इत्यथ ॥ १४ ॥ आचम्य पूर्ववत्प्राश्य विराजो दोहमित्यथ । आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ ॥ १५ ॥ विनियोगं च कुर्वीत शिष्टस्यास्योक्तमार्गतः । आचम्याथामृतापीति पिबेदाचमनीयकम् ॥ १६ ॥ आचम्याचमनीयाम्बु पिबेत्सत्यं यशस्त्विति । आचान्तः पुनराचामेदथ गां त्रिर्निवेदयेत् ॥ १७ ॥ ततो वरो जपेन्मातारुद्राणां दुहितेत्यृचम् । अथोमुत्सृजतेत्याह प्रैषं गामुत्सृजन्ति च । गन्धमाल्याम्बरैस्तद्वद्भूषणैः पूजयेद्वरम् ॥ १८ ॥ (३०२) इति मधुपर्कः ॥ ॥ २१ कन्यादानम् ॥ ॥ स्नाता-

---

१ तथा चोक्तं शौनकेन 'मधुपर्कं पीतशिष्टं विप्रायोदङ्मुखो भवन् । प्रदद्याद् ब्राह्मणालाभे प्रक्षिपेत्सलिलेऽपि वा । स्वयं पिबेद्वा निःशेषमाचामेच्च यथा पुनः' इति । २ मधुपर्कदानं च स्नातकशाखानुरोधेन कार्यम् । 'वरस्य यस्य या शाखा तच्छाखागृह्यचोदितः । मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि' इति गृह्यान्तरोक्तेः । मधुपर्क-

लंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः । ईक्षेत तण्डुलस्थानो वरस्तस्य मुखं च सा ॥ १ ॥
मुहूर्ते शोभने सम्यक् क्षिपेतामुभयोर्मिथः । सगुडाञ्जीरकान्कन्यां वरयेदथ तां वरः ॥ २ ॥ असा-
वमुकगोत्रस्य पुत्रः पौत्रः प्रपौत्रकः । एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्त्रिकाम् ॥ ३ ॥
वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् । वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम् ॥ ४ ॥
पुत्रायास्य च पौत्राय नप्त्रे चामुकगोत्रिणे । अस्मा अमुकगोत्राय पुत्रीं पौत्रीं प्रपौत्रिकाम् ॥ ५ ॥
श्रीरूपां च मया दत्तां तुभ्यं श्रीधररूपिणे । इत्युक्त्वोदकपूर्वां तां दद्यात्स्वस्तिपदं वदेत् ॥ ६ ॥

---

लक्षणं तु 'मधुना सर्पिषा वापि सुसंपृक्तं भवेद्दधि । मधुपर्क इति प्राज्ञैर्याज्ञिकैः सोभिधीयते' इति शौनकेनोक्तम् । १ 'कन्यां कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया । विश्वम्भरः सर्वभूताः साक्षिण्यः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च । गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय । कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः । कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्' कन्यादाने स्मृत्यन्तरे । अन्यच्च 'स्नातां नवाम्बरोपेतां कटकादिविभूषिताम् । अवरप्रत्तवसनपरिधानां कुमारिकाम् । उक्तस्वस्त्ययनां दद्याज्जलपूर्वं वराय ताम् । उक्तस्वस्त्ययनः स्थित्वा प्राङ्मुखं परिगृह्यताम्' ।

वरोऽथ प्रतिगृह्णीयात्स्पृशेत्क इति मन्त्रतः । अस्मिन्नहनि यत्किञ्चित्कन्यादाता ततः परम् ॥ ७ ॥
गोभूहिरण्यदास्यादि तस्मै दद्यात्स्वशक्तितः । सघृतं क्षीरमादाय कराभ्यां कन्यकाञ्जलिम् ॥ ८ ॥
द्विरुन्मृज्य वरः सिक्ताञ्शुक्लाञ्शाल्यक्षतानथ । गृहीत्वाञ्जलिना तस्या अञ्जलौ द्विः क्षिपेत्ततः ॥ ९ ॥
आदायाञ्जलिमाधत्ते तदञ्जल्युपरि स्वयम् । कन्येत्याद्याशिषः पूर्वमुक्त्वा दाता ततः परम् ॥ १० ॥
कन्यां त्वां प्रतिगृह्णात्विसन्तं क इति मन्त्रतः । उपरिस्थाञ्जलौ पूर्णे हरेत्स्वर्णोदकं ततः ॥ ११ ॥
तमेव प्रतिगृह्णामीत्यन्तं मन्त्रमुदीरयेत् । अञ्जलिस्थाक्षतान्कन्यामूर्धनि प्रक्षिपेद्वरः ॥ १२ ॥
स्वाञ्जलिस्थाक्षतान्कन्या वरमूर्ध्नि विनिक्षिपेत् । मूर्ध्निक्षेपान्तमेवं स्यात्पुनरुन्मार्जनादिकम् ॥ १३ ॥
उन्मार्जनादिकं कुर्यात्पूर्ववत्कन्यका वरे । कन्येत्यादि पिता कुर्याद्वरतन्त्रं वरो वदेत् ॥ १४ ॥
कन्याशिरस्थमाल्यस्य गृहीत्वा कौसुमं दलम् । सघृतं क्षीरसंमिश्रं कुर्यात्तिलकमुत्तमम् ॥ १५ ॥
वरः कन्याललाटे च कन्या वरशिरस्स्रजः । पुष्पस्य दलमादाय क्षीराज्याक्तं वरस्य तु ॥ १६ ॥
ललाटे तिलकं कुर्याद्दीक्षेतैव मिथो मुखम् । कण्ठे मिथोः शुभे माल्ये दम्पती प्रतिमुञ्चतः ॥ १७ ॥
बद्ध्वा वस्त्रान्तमुभयोः प्राङ्मुखौ च ततः परम् । देवीं दाक्षायणीं नत्वा सर्वसंपत्प्रदायिनीम् ॥ १८ ॥

होमदेशे व्रजेतां तौ परिगृह्य करौ मिथः। तदेतत्सूत्रकृद्वृत्तिसूत्रेणोच्चावचोदितम् ॥ २१ ॥ (३२१)॥

॥ २२ विवाहहोमप्रयोगः ॥ ॥ आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च। उपलेपादि कुर्वीत हविर्भुक्स्थापनान्तकम् ॥ १ ॥ अग्नेः पश्चात्प्रतिष्ठाप्य दृषदं सोपलामथ। उदकुम्भं निधायाग्नेः प्रागुदीच्यामतः परम् ॥ २ ॥ आज्याधिश्रयणान्तं स्यादन्वाधानादि पूर्ववत्। आज्येन सह लाजानां पर्यग्निकरणं भवेत् ॥ ३ ॥ त्रिःप्रोक्षणं भवेत्तेषां केवलोत्पवने सति। इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम् ॥ ४ ॥ वधूदक्षिणहस्तेन समन्वारब्ध एव सन्। कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतित्रयम् ॥ ५ ॥ अत्राज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु। हुत्वा त्वमर्यमेत्यन्यां प्रजापत इतीतराम् ॥ ६ अथोन्नतमुखीं कुर्याल्लज्जयावनताननाम्। प्राङ्मुख्या उपविष्टायास्तिष्ठन्प्रत्यङ्मुखः स्वयम् ॥ ७ ॥ उत्तानेनाथवा नीचेनोत्तानस्य करस्य तु। अङ्गुष्ठादि तु गृह्णीयाद्गृभ्णामीसेतया ततः ॥ ८ ॥ उपस्तृणाति भार्याया अञ्जलौ प्रोक्षते वरः। वधूभ्राताथवा भ्रातृस्थानो लाजान्द्विरावपेत् ॥ ९ ॥ पश्चावत्ती वरः स्याच्चेदञ्जलौ तांस्त्रिरावपेत्। भ्रातुस्थानः पितृव्यस्य

---

१ अधोमुखीमित्यर्थः। २ पाणिग्रहणप्रकारमाह—उत्तानेनेति। ३ द्विवारं प्रक्षिपेदित्यर्थः। ४ स्वयमेव भ्रातृस्थानीयानाह—भ्रातृस्थान इति।

ह्यानि वर्त्तयत्र वाच्यं त्रायस्व मामिति । मा मा हिंसीरिति ब्रूयाद्यथासमिति चापरम् ॥ ८ ॥
तेन म आयुषेस्वेत्यूह्यं मन्त्रद्वयेऽपि च । माम आयुरिति त्वन्यत्सर्वं गोदानवद्भवेत् ॥ ९ ॥
करञ्जबीजमन्त्रैकं पिष्टेनोन्मृज्य तेन तु । शीतोष्णैः स्नात आचान्तो वह्नेर्गत्वान्तिकं पुनः ॥ १० ॥
युवमित्यनया वस्त्रे आच्छाद्यावर्तयेत्त्रियम् । मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु ॥ ११ ॥
आचम्य चाश्मनस्तेज इत्युक्ते सव्यमीक्षणम् । एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमीक्षणम् ॥ १२ ॥
कुण्डले चाश्मनस्तेज इति श्रोत्रमलंकुरु[1] । अनेनैव तु मन्त्रेण पश्चात्सव्यमलंकुरु ॥ १३ ॥
कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम्[2] । अनुलिप्येतराङ्गानि पश्चात्प्रक्षालयेत्करौ ॥ १४ ॥
अनार्तासीति मन्त्रेण बध्नाति शिरसि स्रजम् । सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ ॥ १५ ॥
आस्थाय च्छत्रमादध्यादिवश्छन्नासि मन्त्रतः । गृहीत्वा वैणवं दण्डं वेणुरस्यादिमन्त्रतः ॥ १६ ॥
आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च । सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् ॥ १७ ॥

---

१ अलंकुरु इति ग्रन्थकारः कथयति । २ ब्राह्मणः आदौ मुखं लिम्पति क्षत्रियो बाहू वैश्य उदरम् उपस्थं स्त्री इत्यादि ।

मधुपर्कमथानीतं पूर्ववच्च निवेदितम् ॥ १० ॥ देवस्य त्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः । मधुवा- का०अ०१
तास्तृचेनैनं मधुपर्कमवेक्षते ॥ ११ ॥ निदधाति च तत्पात्रं सव्ये पाणावितः परम् । अङ्गुष्ठोपक-
निष्ठाभ्यामालोड्य त्रिः प्रदक्षिणम् ॥ १२ ॥ वसवस्त्वादिभिर्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् । निमृज्या-
ङ्गुलिलेपं तु भूतेभ्यस्त्वेति मन्त्रतः ॥ १३ ॥ त्रिरुद्गृह्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च ।
प्राश्नात्यस्यैकदेशं तु विराजो दोह इत्यथ ॥ १४ ॥ आचम्य पूर्ववत्प्राश्य त्रिराजो दोह-
मित्यथ । आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ ॥ १५ ॥ विनियोगं च कुर्वीत
शिष्टस्यास्योक्तमार्गतः । आचम्याथामृतापीति पिबेदाचमनीयकम् ॥ १६ ॥ आचम्याचम-
नीयाम्बु पिबेत्सत्यं यशस्त्विति । आचान्तः पुनराचामेदथ गां त्रिर्निवेदयेत् ॥ १७ ॥ ततो
वरो जपेन्मातारुद्राणां दुहितेत्यृचम् । अथोमुत्सृजतेत्याह प्रैषं गामुत्सृजन्ति च । गन्धमाल्याम्बरै-
स्तद्वद्भूषणैः पूजयेद्वरम् ॥ १८ ॥ (३०२) इति मधुपर्कः ॥ ॥ २१ कन्यादानम् ॥ ॥ स्नाता

१ तथा चोक्तं शौनकेन 'मधुपर्कं पीतशिष्टं विप्रायोदङ्मुखो भवन् । प्रदद्याद् ब्राह्मणालाभे प्रक्षिपेत्सलिलेपि वा । स्वयं पिबेद्वा निःशेषमाचामेच्च यथा पुनः' इति । २ मधुपर्कदानं च स्नातकशाखानुरोधेन कार्यम् । 'वरस्य यस्य या शाखा तच्छाखागृह्यचोदितः । मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि' इति गृह्यान्तरोक्तेः । मधुपर्क-

 

मातुलस्य च यः सुतः ॥ १० ॥ मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः । वरः शूर्पगताँल्लाजानव-
त्तांश्चाभिघारयेत् ॥ ११ ॥ पठेच्चार्यमणं मन्त्रमथ पत्नी स्थिता सती । कुर्वन्त्यञ्जलिविच्छेदमङ्गुल्य-
ग्रैर्जुहोति तान् ॥ १२ ॥ हविर्भुगम्भःकुम्भौ तु दृषद्वर्जं प्रदक्षिणम् । वधूं परिणयेन्मन्त्रममोहमिति
वै जपेत् ॥ १३ ॥ इममश्मानमारोहेत्येतेन प्राङ्मुखीं वधूम् । उभाभ्यामपि पादाभ्यामारोप्य दृषदं
पुनः ॥ १४ ॥ उपस्तृत्यादि तद्वत्स्याद्दृषदारोपणान्तकम् । वरुणं न्विति होमोऽञ्जल्युपस्तृत्यादि
पूर्ववत् ॥ १५ ॥ अश्मारोहणपर्यन्तं हवनं पूषणं न्विति । प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः
स्मरेत् ॥ १६ ॥ शूर्पकोणेन शिष्टांस्तानभ्यात्मं जुहुयाद्वधूः । जयन्तस्त्वाह हवनं चतुर्थं वरकर्तृकम्
॥ १७ ॥ यदि बद्धे शिखे बद्ध्वा देशधर्मादिना ततः । प्र त्वा मुञ्चामि मन्त्रेण दक्षिणां तु विमुञ्चति
॥ १८ ॥ प्रेतो मुञ्चामि मन्त्रेण तूत्तरामपि मुञ्चति । शिखे वरस्य बद्धे चेत्तूष्णीमेव विमुञ्चति ॥ १९ ॥
अभ्युत्क्रमयतीशान्यां वधूं सप्तपदानि च । सा चाभ्युत्क्रामयेत्पूर्वं दक्षिणं पादमात्मनः ॥ २० ॥ इष

---

१ होम्यलाजप्रमाणमाह सिद्धान्तशेखरे 'कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः' इति । २ परिणयनं नाम परितो नयनम् । ३ अत्र पुनःशब्देन उत्तरत्र होमविधानं युज्यते । ४ अभ्यात्मं आत्माभिमुखम्

इत्यादिभिर्मन्त्रैरनुषक्तैर्भवादिना। सप्तमे क्रामिते तत्स्थः शिरसी संनिधाय च ॥ २१ ॥ अम्भःकुम्भाम्भसा ते च शिरसी अवसिञ्चति[1]। आज्येन स्विष्टकृद्धोमं कृत्वा शेषं समापयेत् ॥ २२ ॥ होमादारभ्य यच्छेत्सा वाचं[2] दृष्ट्वा ध्रुवादिकान्। जीवपत्नीति सा वाचं विसृजेच्च ततः परम् ॥ २३ ॥ दम्पत्योरत आरभ्य गृहवेशीयहोमतः। ऊर्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रतम् ॥ २४॥ अब्दं वा क्षारलवणवर्जितं भोजनं भवेत्। अधश्च शयनं तद्वद्ब्रह्मचर्यं च वै भवेत् ॥ २५ ॥ ( ३४६ ) इति विवाहहोमः॥

॥ २३ गृहप्रवेशनीयहोमविधिः ॥ ॥ विवाहानन्तरं गच्छेत्सभार्यः स्वस्य मन्दिरम्। यदि ग्रामान्तरे तत्स्यात्तच्च यानेन गम्यते ॥ १ ॥ पूषा त्वेत्यनया यानं वधूमारोपयेद्वरः। दम्पत्योरग्रतोऽजस्रं विवाहाग्निं नयन्ति च ॥ २ ॥ गृहान्निर्गच्छतोरेष स्वग्रामेऽपि भवेद्विधिः। ब्राह्मणी जीवपत्नी या जीवपत्या च तद्गृहे ॥ ३ ॥ वसेदनन्तरां रात्रीं स्वग्रामे नैतदिष्यते। यद्यन्तरास्ति नद्यादि नावमारुह्य याति चेत् ॥ ४ ॥ अश्मन्वतीत्यृचोऽर्धेन नावमारोहयेद्वधूम्। अर्धर्चेनोत्तरेणैनां जलादुत्तारयेदथ ॥ ५ ॥ नीयमाना वधूर्बन्धुवियोगाद्यदि रोदिति। जपेज्जीवं रुदन्त्ये-

---

१ अवसिञ्चति वर इति शेषः। २ वाचं यच्छेन्मौनं कुर्यादित्यर्थः।

तामेकग्रामेऽप्ययं विधिः ॥ ६ ॥ जपेच्छोभनदेशादौ माविदन्परिपन्थिनः । सुमङ्गलीर्ऋचेक्षेत वासे वासे समीक्षकान् ॥ ७ ॥ इह प्रियमृचा भार्यां स्वस्य गेहे प्रवेशयेत् । उपलेपादिकं कृत्वा विवाहाग्निं समिध्य च ॥ ८ ॥ प्राग्ग्रीवमूर्ध्वलोमाग्नेः प्रस्तृणानडुहाजिनम् । आज्यासादनपर्यन्तमन्वाधानादि पूर्ववत् ॥ ९ ॥ चर्मण्यथोपविष्टायां समन्वारब्ध एव सन् । कुर्यादाघारपर्यन्तामिध्माधानादि पूर्ववत् ॥ १० ॥ ऋग्भिश्चतसृभिश्चानः प्रजामित्यादिभिस्त्वथ । पठन्नाज्याहुतीर्हुत्वा स्वाहाकारमृगन्ततः ॥ ११ ॥ समञ्जन्त्वनया प्राश्य दधि तस्यै प्रयच्छति । सापि प्राश्नाति तत्तूष्णीमथ स्विष्टकृदादिकम् ॥ १२ ॥ अथवानक्ति हृदये एतयर्चाज्यशेषतः । ॥ १३ ॥ (३५९) इतिगृहप्रवेशनीयहोमविधिः ॥ ॥ २४ अथव्रतोत्सर्गविधिः ॥ ॥ वध्वा विवाहवेलायां यत्सा परिहिताम्बरम् । सत्येनोत्तभितासूक्तं वेत्ति यः पाठतोऽर्थतः ॥ १ ॥ तस्मै विप्राय तद्दद्यादृतान्ते धौतमम्बरम् । ब्राह्मणान्भोजयित्वैतानो स्वस्तीत्यथ वाचयेत् ॥ २ ॥

---

१ समिध्य दीप्तं कृत्वा । २ अनडुहः इदं आनडुहम् । ३ समन्वारब्धः तया दक्षिणहस्तेन स्पृष्टः । ४ ऋगन्ततः मन्त्रान्ते इत्यर्थः । ५ अथवेति पक्षान्तरमाह । हृदयं घृताक्तं करोतीत्यर्थः । ६ तथा च शौनकः 'व्रते समाप्ते वध्वा च विवाहसमये धृतम् । वस्त्रं प्रदद्यात्तत्तस्मै ब्राह्मणाय विपश्चिते' ।

ॐ स्वस्तीति प्रतिब्रूयुर्ब्राह्मणास्ते च पूजिताः । स्वस्त्यादि वाचयित्वादौ स्त्रियं तामुपगच्छति[1] ॥ ३ ॥ मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा ॥ ४ ॥ ( ३६३ ) इतिव्रतोत्सर्गविधिः ॥ ॥ २५ औपासनहोमः ॥ ॥ अथ[2] यस्मिन्विवाहाग्निरुत्पन्नोऽहनि तस्य तु । यत्सायं तत आरभ्य गृह्यं परिचरेत्स्वयम् ॥ १ ॥ आत्मनोऽसंभवे[3] पत्नीपुत्रादय[4] इति स्थितिः । अन्ये तु मन्यते पत्नीकुमार्योस्तदहोमकम्[5] ॥ २ ॥ तन्त्रं[6] नास्त्यत्र भगवद्वृत्तिकारवचो यथा । ज्वलयेदपराह्णेऽग्निमस्तं[7] याति दिवाकरे ॥ ३ ॥ पर्यूह्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् । पयःप्रभृतिषु त्वेकं संस्कुर्यादग्निहोत्रवत्[8] ॥ ४ ॥ अलंकरोति पुष्पाद्यैरनलायतनं ततः । द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ॥ ५ ॥ जुहुयादग्नये स्वाहा सुसमिद्धे हुताशने । ध्यात्वा शब्दं

---

१ उपगच्छतिस्पर्शादि संमतं करोति । २ अथशब्दो मङ्गलार्थः । ३ अनेन अग्निपरिचरणे आत्मनो मुख्यत्वम् । ४ आदिशब्दात्कुमारी अन्तेवासी च गृह्यते । एतेषां च दंपत्योरन्यतरस्मिन् विद्यमाने होमाधिकारो न त्वभावे 'दंपत्योरसमक्षं तु होतव्यं नर्त्विगादिना' इति निषेधात् । ५ तयोर्मन्त्रानधिकारात् । ६ नित्यहोमे इतिकर्तव्यतामाह—तन्त्रमिति । ७ प्रादुष्करणकालमाह—ज्वलयेदिति । ८ अग्निहोत्रशब्देन आहिताग्नेः सायंप्रातर्विहितो नित्यहोम उच्यते । तत्र द्वितीयाध्याये श्रौतकाण्डे यथा द्रव्यसंस्कार उक्तस्तथात्र कर्तव्यः ।

चतुर्थ्यन्तं प्रजापतय इत्यथ ॥ ६ ॥ स्वाहाकारेण जुहुयात्ततः परिसमूहनम् । पर्युक्षणं च कुर्वीत प्रातरप्येवमिष्यते ॥ ७ ॥ [1]व्युष्टायां ज्वलयेदेनं सायं होमः कृतः पुरा । पयसान्येन वा प्रातस्तेनैवेत्याह वृत्तिकृत् ॥ ८ ॥ पूर्वमन्त्रस्तु सूर्याय स्वाहेत्यन्यत्समं भवेत् ॥ ९ ( ३७२ ) इत्यौपासनहोमः ॥ ॥ २६ देवयज्ञः ॥ ॥ गृहस्थो वैश्वदेवाख्यं कर्म प्रारभते दिवा । [2]तन्त्रं नास्त्यत्र भगवद्वृत्तिकारवचो यथा ॥ १ ॥ औपासनाग्निमन्यं वा समिध्याथ हविर्भुजम् । पर्यूह्य परिषिच्याग्निमलंकृत्य च पूर्ववत् ॥ २ ॥ हविष्यं पक्वमादध्यादधिश्रित्यानले च तत् । प्रोक्ष्योद्वास्य घृताभ्यक्तं हृदि सव्यं निधाय च ॥ ३ ॥ हुत्वा हस्तेन सूर्यायेत्यादिभिर्दशभिस्ततः । प्रजापतिपदस्योक्तिर्वैश्वदेवे न तु स्मृतिः ॥ ४ ॥ पर्यूहनोक्षणे कुर्याद्देवयज्ञोऽयमीरितः ॥ ५ ॥ ( ३७७ ) इतिदेवयज्ञः ॥ ॥ २७ भूतयज्ञः ॥ ॥ भूतयज्ञं प्रकुर्वीत अग्नेरुत्तरदेशतः । एतैर्भुवि बलीन्दत्वा प्राक्संस्थांश्च निरन्तरान् ॥ १ ॥ मुक्त्वान्तरालं प्राक्संस्थानद्भ्य इत्यादिभिर्हरेत् । इहापि भवति स्वाहाकारो न पितृयज्ञके ॥ २ ॥ अद्भ्यो हुताद्बलेः प्रत्यगिन्द्रा-

---

१ उदयात्पूर्वं घटिकाद्वयादिलक्षणरात्रिशेषः व्युष्टाशब्दार्थः । २ तन्त्रं अन्वाधानाद्यङ्गकलापः ।

येति बलिं हरेत् । उदगैन्द्राद्बलेरिन्द्रपुरुषेभ्यो बलिं हरेत् ॥ ३ ॥ यमायेत्यन्तरालस्य हरेद्दक्षिणतो बलिम् । याम्यादुदग्वाथ यमपुरुषेभ्यो बलिं हरेत् ॥ ४ ॥ प्राच्यां ब्रह्मबलेर्हुत्वा वरुणायेति मन्त्रतः । अस्मादुदक्तु वरुणपुरुषेभ्यो बलिं हरेत् ॥ ५ ॥ सोमायेत्यन्तरालस्य हरेदुत्तरतो बलिम् । सौम्याद्बलेरुदक्सोमपुरुषेभ्यो बलिं हरेत् ॥ ६ ॥ जयन्तस्त्वाह वास्त्वन्तैर्बलीन्हृत्वा निरन्तरान् । मुक्त्वान्तरालमिन्द्रादि दिग्देवानां बलीन्हरेत् ॥ ७ ॥ ऐन्द्रादिबलितः प्राच्याः प्राच्यां स्यात्पौरुषो बलिः । अन्तराले बलीन्हृत्वा शिष्टैर्मन्त्रैरतः परम् ॥ ८ ॥ रक्षोभ्य इति सर्वासां बलिमुत्तरतो हरेत् ॥ ९ ॥ ( ३८६ ) इति भूतयज्ञः ॥ ॥ २८ ॥ पितृयज्ञः ॥ ॥ भूतयज्ञोऽयमुदितः प्राचीनावीत्यतः परम् । स्वधा पितृभ्य इत्युक्त्वा दक्षिणस्यां तु निर्वपेत् ॥ १ ॥ पितृयज्ञोऽयमुदितो नक्तं चैतत्त्रयं भवेत् । इति पितृयज्ञः । सूर्यायेति पदस्थाने ईरयेदग्नयेपदम् ॥ २ ॥ दिवाचारिभ्य इत्यत्र नक्तंचारिभ्य इष्यते । कुर्वीत स्नातकश्चेदं पृथक्पाकी भवेद्यदि ॥ ३ ॥ एतान्पञ्चमहायज्ञान्कुर्यादहरहः शुचिः ॥ ४ ॥ ( ३९० ) इति पञ्चयज्ञाः ॥ ॥ २९ ॥ ब्रह्मयज्ञः ॥ ॥ ग्रामात्प्राच्यामुदीच्यां वा या वा दिक्स्यादनिन्दिता । अपोऽवगाह्य तु स्नायादुपवीत्येव स द्विजः ॥ १ ॥ धौतशुक्लाम्बरः कुर्यात्कर्माङ्गाचमनं ततः । दर्भान्बहूञ्शुचौ देशे प्रागग्रांस्तांस्तृणात्यथ ॥ २ ॥

दर्भेषूपविशेत्कर्मण्यत्र प्राङ्मुख एव सन् । कृत्वोपस्थकरे सव्य उत्ताने प्राग्दिगङ्गुलौ ॥ ३ ॥ पवित्रे स्थापयेदुक्ते प्रागग्रे दक्षिणेन तु । न्यश्चं प्रागङ्गुलिं तेन संदध्याद्दक्षिणं करम् ॥ ४ ॥ ऊर्ध्वं तिर्यगधस्ताद्वा नेक्षेत यदि वाक्षिणी ॥ संमील्य येन वात्मा तु समाहितमना भवेत् ॥ ५ ॥ सूक्ताद्यन्यतमं पूर्वमभिसंधाय शक्तितः । ॐपूर्वा व्याहृतीस्तिस्रः समस्तास्तु सकृद्वदेत् ॥ ६ ॥ पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेदथ । पूर्वाभिसंहितं यावत्तदधीत्य समाहितः ॥ ७ ॥ नमोब्रह्मण इत्येतां त्रिरुक्त्वा प्रणवं वदेत् । प्रणवाद्येतदन्तं स्यान्मध्यमेन स्वरेण तु ॥ ८ ॥ अधीते मनसा ग्रामे ब्रह्मयज्ञं करोति चेत् । अपां समीपमागत्य तर्पयेदथ देवताः ॥ ९ ॥ त्रिंशद्भिरेकेनोनैस्तु द्वादशश्च भवेत्तथा । त्रयोविंशतिवाक्यैस्तु देवर्षींश्च पितॄन्क्रमात् ॥ १० ॥ एवमन्तानि तृप्यन्त्विवसन्तैस्तु प्रतिमन्त्रकम् । सिञ्चेत्प्रजापतिस्तृप्यत्विवत्पो देवतीर्थतः ॥ ११ ॥ धातुस्त्वापि यथालिङ्गं मन्त्रान्तेषु प्रयुज्यते । मन्त्रैः शतर्चिनस्तृप्यन्त्विवत्यादिभिरतः परम् ॥ १२ ॥ प्रतिमन्त्रं निवीती तु तर्पयेदृषितीर्थतः । प्राचीनावीत्यथेदानीं पितृतीर्थेन तर्पयेत् ॥ १३ ॥ सुमन्त्विवत्यादिभिर्मन्त्रैः प्रतिमन्त्रं च पूर्ववत् । द्वितीयान्तेषु मन्त्रेषु तर्पयामिपदं वदेत् ॥ १४ ॥ अयं तु ब्रह्मयज्ञोऽस्य भिक्षादानादिदक्षिणा । कुर्यात्तिष्ठञ्शयानो वा ब्रह्मयज्ञसमं भवेत् ॥ १५ ॥ देशोऽशुचिः स्वयं

वा स्यात्तदानध्याय इष्यते । प्रागूर्ध्वं वा भवेदेतद्वैश्वदेवाख्यकर्मणः ॥२६॥ ( ४०६ ) इतिब्रह्मयज्ञः ॥ ॥ ३० मनुष्ययज्ञः ॥ ॥ उर्ध्वमेव नृयज्ञः स्यात्स चेष्टोऽतिथिपूजनम् । एतान्पञ्चमहायज्ञान्कुर्यादहरहः शुचिः ॥ १ ॥ ( ४०७ ) इतिमनुष्ययज्ञः ॥ ॥ ३१ संध्योपासनम् ॥ ॥ अन्यच्चाहरहःकृत्यं संध्योपासनमुच्यते । ग्रामाद्बहिरपां तीर उपवीसेव स द्विजः ॥ १ ॥ आचम्य मार्जनाद्यन्यत्स्मृत्युक्तं च करोत्यथ । अर्धास्तमित आदित्ये पश्चिमस्य य उत्तरः ॥२॥ प्रागस्तन्मुख आसीनः सावित्रीं वाग्यतो जपेत् । आतारकोदयादेवं प्रातः कर्मेदमिष्यते ॥ ३ ॥ अर्धास्तमितनक्षत्रमन्तरिक्षं यदा ततः । आरभ्य प्राङ्मुखस्तिष्ठञ्जपेदासूर्यदर्शनात् ॥ ४ ॥ ( ४११ ) इति संध्योपासनम् ॥ ॥ ३२ उपाकर्म ॥ ॥ अध्यायानामुपाकर्म श्रावणे श्रवणेन तु । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥ १ ॥ अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन करोति तत् ॥ २ ॥ कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते । आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत्

१ अधीतानां छन्दसां सवीर्यत्वार्थं वा नूतनमाणवकादीनां वेदाध्ययनार्थम् । २ श्रावणे मासि कस्यांचिच्छ्रवणयुक्तायां तिथौ इत्यर्थः । ३ तत्र कालान्तरमाह—तन्मास इति । ४ तथा च गृह्यं 'तद्वार्षिकमित्याचक्षते' वर्षासु वर्षासु क्रियते तत् वार्षिकम् । ५ इदमर्धमन्यत्र नास्ति ।

॥ ३ ॥ आज्येन दधिसक्तूनां पर्यग्निकरणं भवेत् । उत्पूतमात्रमाज्यं चेत्तेषां त्रिः प्रोक्षणं भवेत् ॥४॥
इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम् । अन्वारब्धोऽधुना शिष्यैः स्वयमेव न सन्ति चेत्
॥ ५ ॥ प्रकुर्वीताज्यभागान्तमिध्माधानादि पूर्ववत् । इहाज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेऽपि तौ
॥ ६ ॥ हुत्वाज्यं नवभिर्मन्त्रैः सावित्र्याद्यैरतः परम् । अथावदानधर्मेण तान्सक्तून्दधिसंयुतान्
॥ ७ ॥ हुत्वाग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात् । शाकल्यानां समानीव इत्यृचान्त्याहुतिर्भवेत्
॥ ८ ॥ बाष्कलानां तु तच्छंयोरित्यृचान्त्याहुतिर्भवेत् । अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च
॥ ९ ॥ दधिसक्तून्स्वयं शिष्याः प्राश्याचम्य ततः परम् । परिस्तरणदर्भैस्तैरन्तर्दधति तेऽञ्जलीन्
॥ १० ॥ अन्येन सेचयित्वापस्ताभिः कुर्वन्ति मार्जनम् । पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च

---

१ अत्र मन्त्रेषु च्छन्दोभ्य ऋषिभ्यइत्येको मन्त्रः । २ शाकलानामिति पाठान्तरम् । ३ अथ सक्तुप्राशनानन्तरं यज्ञोपवीतहोमं कृत्वा विप्रेभ्यो दत्त्वा स्वयं च धारयेत् । तदुक्तं कार्ष्णाजिनिना 'वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् । नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः' इति । फलं चोक्तं वायुपुराणे 'उपाकर्माणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् । आयुष्माञ्जायते तेन कर्मणा मानवो भुवीति' ।

॥ ११ ॥ आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च । प्रागग्रदर्भगर्भांस्ते कुर्युर्ब्रह्माञ्जलीनथ ॥ १२ ॥ सव्याहृतिं जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् । त्रिरभ्यसेयुरोंकारं व्याहृतीश्चात्र कर्मणि ॥ १३ ॥ अग्निमीळे इदं सूक्तमनुवाकमथापि वा । प्रारभेरन्नृचं चापि अध्याप्यान्वाचयेद्गुरुः ॥ १४ ॥ प्रायश्चित्तादि सकलं होमशेषं समापयेत् । अनध्यायान्स्मृतौ सिद्धान्परिहृत्य त्वधीयते ॥ १५ ॥ कस्त्वपूर्वमधीतेऽसौ प्रारभेत शुभेऽहनि । समावृत्तोऽप्यधीयानो मधुमांसादि वर्जयेत् ॥ १६ ॥ ऋतुस्नातोपगमनं समावृत्तस्य मन्वते । अत आरभ्य षण्मासान्नियमेन त्वधीयते ॥ १७ ॥ पश्चादङ्गानिषण्मासाञ्छिष्यमध्यायपयेद्गुरुः ॥ १८ ॥ ( ४२९ ) इत्युपाकर्म ॥

॥ ३३ उत्सर्जनम् ॥ अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते । ग्रामाद्बहिर्विविक्ते स्यादुपलेपादि पूर्ववत् ॥ १ ॥ गृहपक्वं समीपेऽग्नेर्निधायाज्यमधिश्रयेत् । संस्कार्यं सक्तुवच्चान्नं शान्तिकर्मणि चात्र तु ॥ २ ॥ तत्राज्याहुतिपर्यन्तमुपाकरणवद्भवेत् । जुहोति गृहसिद्धान्नमुपाकरण-वत्ततः ॥ ३ ॥ अन्नेन स्विष्टकृद्धोमो न स्तः प्राशनमार्जने । वेदाद्यारम्भणं कृत्वा कर्म शिष्टं

१ आचार्यादिकर्मकर्त्तारः ।

समापयेत् ॥ ४ ॥ अथ तीरमपां गत्वा तेऽगवाह्य ततो जलम् । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥ ५ ॥ सावित्र्याद्या नवाऽग्याद्या देवतास्तर्पयन्स्वथ । सावित्रीं तर्पयाम्यग्निं तर्पयामीति तर्पयेत् ॥ ६ ॥ जयन्तस्त्वाग्निमीळादिमन्त्रैस्तर्पणमब्रवीत् । ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्यादिहापि तत ॥ ७ ॥ अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते । शुक्ले वेदास्त्वधीयीरन्कृष्णेऽङ्गानीति केचन । कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रयुञ्जते ॥ ८ ॥ (४३७) इत्युत्सर्जनम् ॥ इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु ॥ प्रथमोऽध्यायः ॥ १ ॥

॥ अथ द्वितीयोऽध्यायः ॥ २ ॥ ॥ १ श्रवणाकर्म ॥ ॥ ब्रुवेऽथ श्रवणाकर्म सर्पबल्याख्यकर्म च । कुर्वन्ति श्रावणे मासि पौर्णमास्यामिदं द्वयम् ॥ १ ॥ पूरयेदाहि कलशं नवं यावकसक्तुभिः । निधाय तं नवे शिक्ये दर्वीं वैकङ्कतीमपि ॥ २ ॥ प्राच्यां दिशि शुचिं देशं बल्यर्थं परिगृह्य च । यवधाना विभज्यैकं भागमभ्यज्य सर्पिषा ॥ ३ ॥ आदित्येऽस्तमिते कुर्यादन्वाधा-

---

१ उक्तं चैतत् कूर्मपुराणेऽपि 'छन्दांस्यूर्ध्वं रहस्योपि शुक्लपक्षेषु वै द्विजः । वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः' इति ।

नादि पूर्ववत् । हविर्द्वयस्य तूष्णीं स्तो निर्वापप्रोक्षणे इह ॥ ४ ॥ पुरोवदवघातादि स्याद्विभज्य च तण्डुलान् । तत्रैकेन पुरोडाशमन्येन श्रपयेच्चरुम् ॥ ५ ॥ एकस्मिंस्तु पुरोडाशं कपाले श्रपयेदिह । आज्येन सह धानानां पर्यग्निकरणं भवेत् ॥ ६ ॥ आज्यस्य केवलोत्पूतौ तासां त्रिःप्रोक्षणं भवेत् । चरुमासादयेत्पूर्वं पुरोडाशमतः परम् ॥ ७ ॥ बर्हिष्या-ज्यान्तरे कृत्स्नं पुरोडाशं निमज्जयेत् । प्रकाशपृष्ठमथवा पुरोडाशं निमज्जयेत् ॥ ८ ॥ अथ कृत्वाज्यभागान्तं चर्वाहुतिचतुष्टयम् । हुत्वा चतुष्टयेनाग्नेनयेति प्रत्यृचं ततः ॥ ९ ॥ उपस्तीर्याथ सव्येन दक्षिणे प्रोक्षिते करे । सव्येनैककपालं तमोप्य कृत्स्नमखण्डितम् ॥ १० ॥ उपरिष्टात्तु सव्येन कुर्याद्विरभिघारणम् । अच्युतायेति मन्त्रेण दक्षिणेन जुहोत्यथ ॥ ११ ॥ यस्मिन्नाज्ये निम-ग्नोऽयं स्रुवेणैव जुहोति तत् । उपर्येककपालस्य मानो अग्ने इति त्वृचा ॥ १२ ॥ अथोपस्तरणा-द्यन्यः करोति गृहिणोऽञ्जलौ । स तेन जुहुयादक्ता धानाः शं नो भवन्त्विति ॥ १३ ॥ यास्तु धाना अनभ्यक्ता पुत्रादिभ्यो ददाति ताः । अथ स्विष्टकृतं हुत्वा चरुधानैकदेशतः ॥ १४ ॥ परि-षेचनपर्यन्तं होमशेषं समापयेत् । इत्युक्तं श्रवणाकर्म सर्पबल्याख्यमुच्यते ॥ १५ ॥ ( ४५२ ) इति

 श्रवणाकर्म ॥ ॥ २ सर्पबलिः ॥ ॥ अथ प्रपूरयेद्दर्वीं सक्तुभिः कलशास्थितैः । गृहात्प्रागु- 
पनिष्क्रम्य शुचौ देशेऽह्नि कल्पिते ॥ १ ॥ अप आसिच्य तानोप्य सर्पदेवेति मन्त्रतः । नान्तरा
 बलिमात्मानं व्यवेयादिह कश्चन ॥ २ ॥ व्यवायस्य निषेधोऽयमुक्त आपरिदानतः । ये सर्पा इति
मन्त्रेण नमस्कुर्यात्कृताञ्जलिः ॥ ३ ॥ बलिं प्रदक्षिणं कृत्वा पश्चादस्योपविश्य च । सर्पोऽसीत्या-
दिकं मन्त्रं ददाम्यन्तं सकृद्वदेत् ॥ ४ ॥ ध्रुवामुं ते परिददाम्येतमुक्त्वा निवेदयेत् । ज्येष्ठानुक्रमतः
पुत्रानप्रत्तदुहितॄंस्तथा ॥ ५ ॥ ततः पत्नी ध्रुवामुं त इत्याद्यावर्ततेऽत्र तु । वाच्यं पुत्रादिनामात्र
द्वितीयान्तममुंपदे ॥ ६ ॥ ध्रुवमात्मेति चात्मानं ततः परिददाति सः । अन्यः कुर्वीत चेदाह
गृहिणो नाम मांपदे ॥ ७ ॥ सायं प्रातश्च मन्त्रेण तेनाप्रत्यवरोहणात् । बलिमेव हरेन्नेह नमस्का-
रादिरिष्यते ॥ ८ ॥ सायं प्रातश्च यावन्तः कालाः स्युस्तद्दिनादधः । तावतो वा बलींस्तस्मिन्ने-
वाहनि हरेदथ ॥ ९ ॥ ( ४६१ ) इति सर्पबलिः ॥ ॥ ३ आश्वयुजीकर्म ॥ ॥ कर्वीता-
श्वयुजीकर्म तदिदानीं मयोच्यते । स्यादाश्वयुजमासस्य पौर्णमास्यां तु कर्म तत् ॥ १ ॥ निवेशनमलं-

१ तत्रेतिकर्तव्यतामाह—प्रपूरयेदित्यादिना । २ तथाच आश्वलायनः 'या पौर्णमास्याश्वयुजीत्युक्तनक्षत्रयोगतः । तस्यामाश्वयुजीकर्मेत्येवमन्वर्थसंज्ञया' । ३ निवेशनं मन्दिरम् । 

कुर्यात्कुड्यानां लेपनं भवेत्। उपर्याच्छादनं चैषां समां भूमिं करोत्यथ ॥२॥ सर्वे गृह्या[1] विशेषेण स्नान्ति शुक्लाम्बरास्ततः। औपासने हुते प्रातरन्वाधानादि पूर्ववत् ॥ ३ ॥ उक्त्वा पशुपतीत्येतच्चतुर्थ्यन्तं ततः परम्। त्वा जुष्टं निर्वपामीति निर्वापप्रोक्षणे तथा ॥ ४ ॥ प्रोक्षामीति विशेषस्तु प्रोक्षणेऽन्यत्समं भवेत्। चरुश्रपणपर्यन्तमवघातादि पूर्ववत् ॥ ५ ॥ कुर्यात्पृषातकं नाम हविरन्यत्तदुच्यते। पयस्याज्ये[2] निषिक्ते तु तत्पयः स्यात्पृषातकम् ॥ ६ ॥ अस्यापि च सहाज्येन पर्यग्निकरणं भवेत्। आज्यस्य केवलोत्पूतौ तस्य त्रिः प्रोक्षणं भवेत् ॥ ७ ॥ इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम्। कृत्वाज्यभागपर्यन्तमन्वारब्धः सुतादिभिः ॥ ८ ॥ पशुपतये शिवाय शंकरायेति नामतः। पृषातकाय स्वाहेति मन्त्रेण जुहुयाच्चरुम् ॥ ९ ॥ अथोपस्तरणाद्यन्यः करोति गृहिणोऽञ्जलौ। द्रवत्वतः स्रुवेणैव पृषातकमवद्यति ॥ १० ॥ जुहोत्यञ्जलिनाप्येतदूनं मे पूर्यतामिति। हविर्द्वयांशतः स्विष्टकृतं हुत्वा समापयेत् ॥ ११ ॥ ( ४७२ ) इत्याश्वयुजीकर्म ॥ ॥

४ आग्रयणम् ॥ ॥ शरद्याग्रयणं नाम पर्वणि[3] स्यात्तदुच्यते। पूर्णपात्रनिधानान्तमन्वाधानादि[4]

---

१ गृह्याः गृहनिष्ठा मनुष्याः। २ अत्र पयसोऽधिकरणत्वेनाधिक्यं आज्यस्य चाल्पत्वम्। ३ पर्वणि पौर्णमास्यां अमावास्यायां वा। ४ आग्रायणस्येतिकर्तव्यतोच्यते—पूर्णेत्यादिना।

पूर्ववत् ॥ १ ॥ निर्वापप्रोक्षणे तूष्णीं भवेतामत्र कर्मणि । कृत्वाज्यभागपर्यन्तमवघातादि पूर्ववत्
॥ २ ॥ तिस्रश्चर्वाहुतीर्हुत्वा सजूरित्यादिभिस्त्रिभिः । ततः स्विष्टकृतं हुत्वा कुर्वीत प्राशनं त्विति
॥ ३ ॥ चरुशेषस्यैकदेशं सव्ये पाणौ निधाय च । प्रजापतादिमन्त्रेण दक्षिणेनाभिमृश्य तम्
॥ ४ ॥ भद्रां न इति तु प्राश्याचम्याथो नाभिमात्मनः । आलभेतोपविष्टस्तु तत्रैवामोसिमन्त्रतः
॥ ५ ॥ मध्यमं तु हविःशेषं पत्नी प्राश्नात्यमन्त्रकम् । परिषेचनपर्यन्तं होमशेषं समापयेत् ॥ ६ ॥
एतदाग्रयणं[1] कुर्यात्त्रेतायां[2] त्वाहितानले ॥ ७ ॥ (४७९) इत्याग्रयणम् ॥ ॥ ५ प्रत्यवरोहणम् ॥
॥ एवमाग्रयणं प्रोक्तं वक्ष्ये प्रत्यवरोहणम् । मार्गशीर्षस्य[3] मासस्य पौर्णमास्यां तदिष्यते ॥ १ ॥
पूर्वेद्युर्वा[4] भवेत्तद्वदलंकृत्य निवेशनम् । भानावस्तमिते कुर्यादन्वाधानादि पूर्ववत् ॥ २ ॥ निर्वापप्रो-
क्षणे तूष्णीं पयसि श्रपयेच्चरुम् । कृत्वाज्यभागपर्यन्तमन्वारब्धः सुतादिभिः ॥ ३ ॥ अपश्वेतेति
मन्त्राभ्यां जुहुयात्पायसाहुती । जपेदभयमित्यादि ईक्षमाणो हविर्भुजम् ॥ ४ ॥ उक्त्वा शिवो न

---

१ इदं चाग्रायणं शरदि भवति। तथा च वचनं 'शरदि व्रीहिभिर्यजेतेति' वसन्तेऽपि भवति तत्र यवैरेव भवतीत्यतो यवाग्रायणमुच्यते। २ पुस्तकान्तरे त्रेताग्निरिति पाठः। ३ तत्र कालमाह—मार्गशीर्षेति। ४ पूर्वेद्युः चतुर्दश्यामित्यर्थः।

इत्यादि हेमन्तेति पदं स्मरेत् । स्वस्तरं स्वयमास्तीर्य पश्चादग्नेस्ततः परम् ॥ ५ ॥ तत्रोपविशति स्योनापृथिवीति जपेदृचम् । एतत्प्रभृति मन्त्रज्ञा जपेयुः सूनवोऽपि च ॥ ॥ ६ ॥ शयीत तत्र सामात्यः प्राक्शिरा उदगाननः । गृहिणोऽनन्तरं यो यो ज्येष्ठस्तद्वच्छयीत सः ॥ ७ ॥ यथावकाशमथवा शेरते तद्वदेव ते । उत्थायर्चमतो देवाः प्राङ्मुखास्त्रिर्जपन्त्यथ ॥ ८ ॥ ऋचोऽस्याः प्रथमं पादं जपेयुर्दक्षिणामुखाः । प्रत्यङ्मुखा द्वितीयं तु तृतीयमुदगाननाः ॥ ९ ॥ ततोऽत्र स्विष्टकृद्वर्जं होमशेषं समापयेत् । यथाशय्यं शयित्वा ते संगता उदिते रवौ ॥ १० जपेयुः सूर्यसूक्तानि तद्वत्स्वस्त्ययनान्यथ । उदुत्यं नव षट् चित्रं देवानामुदगादिति ॥ ११ ॥ नमो मित्रस्य सूक्तं च सूर्यो न इति चापरम् ॥ उक्तानि सौरसूक्तानि वक्ष्ये स्वस्त्ययनानिच ॥ १२ ॥ आनो भद्रास्तथा स्वस्तिनो मिमीता परावतः । संस्कृतेन गृहान्नेन ब्राह्मणान्भोजयेदथ ॥ १३ ॥ ॐस्वस्ति ब्रूत इत्युक्त्वा ॐस्वस्तीति ब्रुवन्ति ते ॥१४॥ (४९३) इति प्रत्यवरोहणम् ॥ ॥ ६ पिण्डपितृयज्ञः ॥ ॥ एकाग्निरपि कुर्वीत पितृयज्ञः स उच्यते । अथ दर्शेऽपराह्णे तु प्रज्वाल्यौपासनं ततः ॥ १ ॥

---

१ सामात्यः कलत्रादिसहितः । २ पिण्डपितृयज्ञस्य विधिमाह—अथेति ।

प्राग्दक्षिणाग्रकैर्दर्भैः परिस्तीर्य हविर्भुजम् । कर्मसाधनमत्रेष्टं[1] सर्वं प्राग्दक्षिणामुखम् ॥ २ ॥ दर्भाना-
स्तीर्य वायव्यामैशान्यां वा हविर्भुजः । स्थालपाद्येकैकमासाद्य[2] स्थालीशूर्पे प्रगृह्य च ॥ ३ ॥ व्रीहिम-
च्छवटं वहेर्दक्षिणस्यामवस्थितम् । आरुह्य व्रीहिभिः पूर्णां स्थालीं शूर्पे निगृह्य[3] च ॥ ४ ॥ शकटारोहणं
चेह भवेद्दक्षिणभागतः । शूर्पस्थाञ्शकटे प्रास्य कृष्णाजिन उलूखले ॥ ५ ॥ चरुस्थालीस्थिता-
न्व्रीहीनवहन्याद्वधूस्ततः । सकृत्फलीकृतानत्र सकृत्प्रक्षाल्य तण्डुलान् ॥ ६ ॥ श्रपयित्वोल्मुकं
नीत्वा ये रूपेत्यानलीं दिशम् । अतिप्रणीत एषोऽग्निस्तं परिस्तीर्य पूर्ववत्[4] ॥ ७ ॥
अर्वागस्माल्लिखेत्स्फ्येन लेखामपहता इति । अभ्युक्ष्य तामवस्तीर्य सकृदाच्छिन्नबर्हिषा ॥ ८ ॥
अनुत्पूतं विलीनाज्यं ध्रुवायां सिच्यतेऽधुना । उत्पूतं नवनीतं वासाद्य दक्षिणतो ध्रुवाम् ॥ ९ ॥
अभिघार्य चरुं ध्रौवेणोदगुद्वास्य पश्चिमे । आसाद्य चाञ्जनादीनि दक्षिणस्यां हविर्भुजः ॥ १० ॥

---

१ कर्मसाधनं अर्थप्राप्तमित्यर्थः । २ द्वन्द्ववर्जमित्यर्थः । ३ निमृज्येति क्वचित्पाठः । ४ पूर्ववत् औपासनाग्निवत् । ५ उल्लेखने विशेष उक्तो ब्रह्मपुराणे 'सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः । प्रघर्षणं ततः कुर्याच्छ्राद्धकर्मण्यतन्द्रितः' ।

प्राचीनावीत्यथेदानीमाधायेध्मं[1] हविर्भुजि । अथावदानधर्मेण गृहीत्वा मेक्षणेन तु ॥ ११ ॥ चर्वाहुतिद्वयं हुत्वा सोमायेति द्वयेन वै । स्वाहाकारेण होमश्चेदुपवीती भवेदिह ॥ १२ ॥ मेक्षणानुप्रहृत्य[2]न्तं मन्त्रयोर्व्यत्ययस्तथा । प्रास्याग्नौ मेक्षणं चापो निनयेत्पितृतीर्थतः ॥ १३ ॥ लेखायां पिण्डदेशेषु शुन्धन्तामिति तु त्रिभिः । तत्र पिण्डत्रयं दद्यात्पराचीनेन[3] पाणिना ॥ १४ ॥ पित्रादित्रिभ्य एतत्ते विष्णो येचेति मन्त्रतः । नामानि चेन्न जानीयात्तत्तेसादि वदेत्क्रमात् ॥ १५ ॥ स्वाहान्तेनोक्तमन्त्रेण पिण्डो जीवाय हूयताम् । निपृतानत्र पितर इतिताननुमन्त्र्य तु ॥ १६ ॥ अप्रदक्षिणमावृत्य चोदक्प्राणान्नियम्य च । प्रसावृत्त्यानुमन्त्र्यामीमदन्तेसादिमन्त्रतः ॥ १७ ॥ चरुशेषमवघ्राय निनयेत्पूर्ववज्जलम् । अभ्यङ्क्ष्वाङ्क्ष्वेतिनामादि मन्त्राभ्यां तैलमञ्जनम् ॥ १८ ॥ दद्याद्दशामथैतद्व इति पिण्डेष्वतः परम् । नमो व इत्युपस्थाय मनोन्वेति त्र्यृचेन च ॥ १९ ॥ परेतनेति मन्त्रेण पिण्डांस्तान्वै प्रवाहयेत् । औपासनान्तिकं गत्वा जपेदग्ने तमेत्यृचम् ॥ २० ॥ यदन्तरिक्षमित्येतां

---

१ इध्मश्च पितृकर्मणि औदुम्बरः प्रशस्यते तदभावे पालाशो वाङ्गीक्रियते । २ प्रास्य निक्षिप्य । ३ उत्तानेनेत्यर्थः ।

तत्स्थ एव जपेदृचम्। गार्हपत्यपदस्येह लोपं न्यायविदो जगुः ॥ २१ ॥ वीरं मे दत्तमन्त्रेण पिण्डमादाय मध्यमम्। तं पिण्डं प्राशयेत्पत्नीमाधत्तेत्यादिमन्त्रतः ॥ २२ ॥ अप्सु वातिप्रणीतेष्वाविंतरौ प्रक्षिपेदथ। सादितान्यथ यानीह नवयज्ञायुधानि तु ॥ २३ ॥ द्वेद्वे एवोत्सृजेत्तानि शिष्टं सार्धं तृणेन तु ॥ २४ ॥ (५१७) इति पिण्डपितृयज्ञः ॥ ॥ ७ दर्शश्राद्धम् ॥ ॥ कुर्वीत पार्वणश्राद्धं दर्शे तदभिधीयते। कामयोगेन वान्यस्यां तिथाविसपरेऽब्रुवन् ॥ १ ॥ ब्राह्मणान्वेदसंपन्नान्दान्ताञ्शान्तानलोलुपान्। अक्रोधनानरोगांश्च पाखण्डकुलनिःस्पृहान् ॥ २ ॥ एवंविध-

---

१ श्रौते पिण्डपितृयज्ञे गार्हपत्यस्य सद्भावाद्यथापाठमन्त्रग्रह इह तु तदभावात्तद्वाचकपदप्रयोगाभावं मीमांसाशास्त्रकुशला वर्णयन्ति। २ सर्वेषां श्राद्धभेदानां 'श्राद्धं पार्वणवत्कुर्यात्' इत्यादिना दर्शश्राद्धमूलत्वात्तदेवादौ निरूप्यते। दर्शश्राद्धं तु 'दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितमिति' वचनानुरोधेन पार्वणमेव। ३ ननु पर्वणि भवं पार्वणमिति व्युत्पत्या उभयोरपि पञ्चदश्योः प्राप्नोति अत आह–दर्शे इति। अत्रैव पिण्डपितृयज्ञस्य विधानदर्शनादिति भावः। ४ तेषां मते पार्वणत्वं न पर्वणिभवत्वमेव किन्तु अर्घ्यपिण्डत्रयसाध्यं त्रिपुरुषोद्देशेन क्रियमाणं कर्म रूढ्या पार्वणमिति। ५ निमन्त्रणयोग्यब्राह्मणकथनपूर्वकं निमन्त्रणप्रकारमाह–ब्राह्मणानिति।

द्विजाभावे सतैकन गुणेन वा। युक्तान्निमन्त्रयीतार्हानसद्गुणविवर्जितवान्॥३॥ विहितानामधिष्ठातॄन्निषिद्धानां च वर्जकान्। शुचीन्निमन्त्र्य दैवे द्वौ त्रीन्विप्रान्पितृकर्मणि ॥ ४ ॥ दैवे पित्र्येऽथवैकैकं सपिण्डीकरणं विना। सायमौपासनं हुत्वा सायं भुक्तवतो द्विजान्॥ ५ ॥ उपगम्य स्वयं शिष्यः सुतो वा श्रद्धयान्वितः। श्राद्धं श्वो भविता तत्र भवद्भिर्दीयतां क्षणः॥ ६ ॥ एवं निमन्त्र्य नियतो मनोवाक्कायकर्मभिः। भोक्तुर्भोजयितुश्चैव ब्रह्मचर्यमतः परम्॥ ७ ॥ कृताह्निकः परेद्युस्ते प्रविशेच्चाग्निवेश्मसु। ततः संकल्प्य विधिवत्प्रारभेत्सुसमाहितः॥ ८ ॥ कृत्वेध्माधानपर्यन्तं पितृयज्ञमथ द्विजान्। तान्स्नातान्कृतपच्छौचानाचान्तानुपवेशयेत् ॥ ९ ॥ द्विराचामन्ति ते विप्राः कर्त्रा प्रक्षालिताङ्घ्रयः। द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रानुदगाननान्॥ १० ॥ ध्यायन्ममैते पितर इति तानुप-

---

१ छान्दसः शपोऽप्रयोगः। २ असद्गुणत्वं पङ्क्तिधुरावैधुर्यकारित्वम्। ३ क्षणदानानन्तरं भोजननिषेधादिति भावः। ४ निमन्त्रणं चैतच्छ्राद्धदिनेऽपि भवति। तथाचोक्तं स्मृत्यन्तरे ‘पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते। निमन्त्रयीत त्र्यवरान्सम्यग्विप्रान्यथोदितान्’। ५ ‘मण्डपस्योत्तरे भागे विप्रस्याचमनक्रिया। अमृतं स पिबेत्तोयं दक्षिणे रुधिरं तथेति’ संग्रहकारः। ६ तत्रोपवेशनप्रकारमाह—द्वौ दैव इति।

वेशयेत् । अर्चयित्वोपविष्टौ तु दैवे स्मृत्युक्तमार्गतः ॥ ११ ॥ ये पक्षाः कथिताः पिण्डयज्ञे जीवमृतान्प्रति । श्राद्धेऽपि वेदितव्यास्ते पक्षा इत्याह वृत्तिकृत् ॥ १२ ॥ प्राचीनावीत्यपो दत्त्वा पितृकर्मामदक्षिणम् । दर्भान्द्विगुणभुग्नांस्तु दत्त्वैषामासनेष्वथ ॥ १३ ॥ अपो दत्त्वाथ दर्भेषु पात्राण्यासादयेत्क्रमात् । तैजसेऽश्ममये पात्रे मृन्मयेऽन्तर्हिते कुशैः ॥ १४ ॥ एकद्रव्येषु चाग्नेयीदिक्संस्थेषु च तेष्वथ । निषिच्यापोऽनुमन्त्र्यर्चा शंनोदेवीरभिष्टये ॥ १५ ॥ अनुमन्त्रः सकृत्कार्यस्तिलोऽसीत्यावपेत्तिलान् । आवृत्तिः प्रतिपात्रं स्यान्मन्त्रस्योहस्तु नेष्यते ॥ १६ ॥ गन्धपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ । स्वधार्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत् ॥ १७ ॥

---

१ तथा च कात्यायनः 'सव्येनैवासनं धृत्वा दक्षिणे दक्षिणं करम् । ॐ भूर्भुवस्स्वरित्युक्त्वा आसनेषूपवेशयेत् । समाध्वमिति चैवोक्त्वा दक्षिणं जानु संस्पृशन् । आस्यतामिति तान् ब्रूयादासनं संस्पृशन्नपि' इत्यादि । २ अथ पित्रर्थब्राह्मणपूजा विधीयते'—प्राचीनावीत्यादिना । ३ तत्परिमाणमपि "अष्टाङ्गुलं भवेत्पात्रं पितॄणां तैजसादिकम् । दशाङ्गुलं तु देवानां सौवर्णं यच्च चोदितम्" इति । ४ "कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत् । तदेव हस्तघटितं पितृकर्मणि योजयेत्" । ५ निवेदनं नाम दानयोग्यकरणम् । नतुदानम् । तस्य उत्तरत्र विधानात् ।

अन्या आपः प्रदातव्या विप्रपाणिष्वतः परम् । अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना ॥ १८ ॥ सव्यहस्तगृहीतेन निनयेत्पितृतीर्थतः । त्रिभिः पितरिदं तेऽर्घ्यमिति पाणिष्वनुक्रमात् ॥ १९ ॥ दत्त्वा दत्त्वा निनीतास्ता या दिव्यास्तानुमन्त्र्य तु । पितृपात्रे प्रसिच्यार्घ्यं शेषं पात्रद्वये स्थितम् ॥२०॥ अनक्ति पुत्रकामस्तैर्मुखमेकीकृतैर्जलैः । न्यग्[1]बिलं पितृपात्रं स्यादासमाप्तेस्तु कर्मणः ॥ २१ ॥ उत्तानं वा तृतीयेन पिहितं तन्न चालयेत् । प्राचीनावीत्यथेदानीं गन्धमाल्यं सधूपकम् ॥ २२ ॥ दीपं वस्त्रं यथाशक्ति देयं वार्यन्तरान्तरा । पितृयज्ञचरोरन्नमुद्धृत्याभ्यज्य सर्पिषा ॥२३॥ अग्नौकरिष्य इत्येतान्पृष्ट्वोक्तः क्रियतामिति । प्रेक्षणानुप्रहृत्यन्तं पितृयज्ञं करोत्यथ ॥ २४ ॥ अन्नेषु परिविष्टेषु[2] हुतशेषं ददात्यथ । उद्दिश्य चान्नं विश्वेभ्यः पितृभ्यः श्रद्धया ततः ॥ २५ ॥

---

१ न्यग्बिलं अधोमुखमित्यर्थः । एतच्च पात्रस्याधोमुखस्थापनमेकोद्दिष्टविषयमिति केचित् । पार्वणादौ तु उत्तानं प्रथमं पात्रं तृतीयपात्रेणाच्छादितं कर्तव्यमिति पक्षः साधीयान् । २ परिवेषणप्रकार उक्तो मनुना 'पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्धितम् । विप्रान्तिके पितॄन्ध्यायञ्छनकैरुपनिक्षिपेत् । अन्नस्य वर्धितं अन्नादिपूर्णमित्यर्थः । उपनिक्षिपेत् विप्राणां समीपभूमौ स्थापयेदिति भावः ।

भुञ्जानाञ्श्रावयेद्द्विमात्राक्षोघ्नान्पितृलिङ्गकान् । पुराणानि पवित्राणि ऋषिगीतां पितृस्तुतिम् ॥२६॥ अन्नं भोजनपर्याप्तं देयं किंचित्ततोऽधिकम् । तृप्तेषु श्रावयेत्तिस्रो मधुवाताऋतायते ॥ २७ ॥ अक्षन्नीति च तान्विप्रान्संपन्नमिति पृच्छति । तेऽपि संपन्नमित्येवं प्रतिब्रूयुरतः परम् ॥ २८ ॥ यद्यदुक्तं ततः किंचित्किंचित्पिण्डार्थमुद्धरेत् । पितृयज्ञचरोरन्नमुद्धृतं प्रक्षिपेदथ ॥ २९ ॥ अन्नं प्रकिरणार्थं च सर्वस्मादन्नमुद्धरेत् । ब्राह्मणेभ्यस्ततः शिष्टं सर्वमन्नं निवेदयेत् ॥ ३० ॥ तेऽपि स्वीकुर्युरिष्टं चेदनुजानन्ति वा पुनः । पिण्डदान[1]मनाचान्तेष्वाचान्तेष्वथवा भवेत् ॥ ३१ ॥ अम्भोनिनयनाद्यन्तं पि[2]तृयज्ञं समापयेत् । अन्नं प्रकिरणार्थाय तदानीय जलप्लुतम् ॥ ३२ ॥ आचान्तानां समीपे तु त्वग्रतः प्रकिरे[3]द्भुवि । उत्तानं प्रथमं पात्रं कृत्वा यज्ञोप[4]वीत्यथ ॥ ३३ ॥ दत्त्वा च

---

१ अनेन पिण्डदानस्य कालो विधीयते । २ पिण्डपितृयज्ञप्रकारेणेति भावः । ३ अत्र पिण्डदाने पक्षद्वयम् । अचान्ते अनाचान्ते वा भवति पिण्डदानम् । विकिरणं तु पिण्डदानान्ते आचमनोत्तरमेव भवति नतु पूर्वं निर्वपणात्प्रकिरेदिति आश्वलायनेनोक्तत्वात् । शाखान्तरे तु विकिरणं पिण्डदानात्पूर्वं पश्चाद्वा भवति । ४ उद्धृते दक्षिणे पाणानुपवीत्युच्यते बुधैः । सव्ये प्राचीनावीती निवीती कण्ठसूत्रवत् ।

दक्षिणां शक्त्या विसृजेदों स्वधोच्यताम् ॥ ३४ ॥ ॐ स्वधीते प्रतिब्रूयुर्याचेतेमान्वरान्पितॄन् । दक्षिणां दिशमाकाङ्क्षन्नियतो वाग्यतः शुचिः ॥ ३५ ॥ दातारो नोऽभिवर्धन्तां वेदाः संततिरेव नः । श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति ॥ ३६ ॥ ब्रह्मचारी भवेत्तस्यां रजन्यां ब्राह्मणैः सह ॥ ३७ ॥ ( ५५४ ) इति दर्शश्राद्धम् ॥ ॥ ८ पूर्वेद्युःश्राद्धम् ॥ ॥ हेमन्तशिशिराख्यर्त्वोः कृष्णपक्षचतुष्टये । अष्टमीष्वथवैकस्यामष्टम्यामष्टका भवेत् ॥ १ ॥ प्रत्यष्टकं च पूर्वेद्युः श्राद्धं कुर्यात्तदुच्यते । कार्यं यत्कर्म सप्तम्यां तत्कुर्यात्पितृयज्ञवत् ॥ २ ॥ ओदनं कृसरं चैव पायसं श्रपयेदिह । गृहसिद्धादुपादेया अपूपाञ्जुहुयाद्यदि ॥ ३ ॥ पूर्वाहानां यथासंख्यं द्रव्याणां चेति केचन । ओदनास्तिलमिश्रस्तु कृसरः परिकीर्त्यते ॥ ४ ॥ तिलकल्कं विनिक्षिप्य शृतो वा कृसरो भवेत् । कृत्वेध्माधानपर्यन्तं पितृयज्ञविधानतः ॥ ५ ॥ वासःप्रदानपर्यन्तं श्राद्धं पार्वणवद्भवेत् । ओदनाद्यन्नमुद्धृत्य पृष्ठोक्तः पूर्ववाहुतिः ॥ ६ ॥ सोमायेत्येतयोः स्थाने हुत्वाष्टाभिरु-

१ श्राद्धात्पूर्वदिनेपि ब्राह्मणैः सह यजमानस्य ब्रह्मचर्यविधानाद्दिनद्वयेपि ब्रह्मचर्यनियमः । २ बौधायनः—उपरिष्टान्मध्याह्नात्पौर्णमास्यामपरपक्षस्य सप्तम्यामष्टम्यामिति क्रियते सापि वा अष्टम्यामेवेति । अस्यार्थः यदा तिथित्रये कर्तुमशक्तस्तदाष्टम्यामेवेति । ३ अग्नौकरणप्रकारमाह—ओदनाद्यमिति ।

दीरताम्। अन्नदानादि तद्वत्स्यादुक्तः संपन्नमित्यथ ॥ ७ ॥ उद्धृत्य भुक्तशेषान्नं निदधाति चरुत्रये। स्यात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत् ॥ ८ ॥ (५६२) इति सप्तमीश्राद्धम् ॥ ॥ ९ अष्टमीश्राद्धम् ॥ ॥ पूर्वेद्युः कर्म कथितमष्टकाकर्म कथ्यते। अष्टम्यां पशुना[1] कार्याः स्थालीपाकेन वाष्टकाः ॥ १ ॥ स्थालीपाकप्रयोगस्तु तत्र तावन्मयोच्यते । पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥ २ ॥ मन्त्रोक्तदेवताभ्यस्तु तूष्णीमेवाथ निर्वपेत्। चतुरश्चतुरो मुष्टीन्प्रोक्षणं च तथा भवेत् ॥ ३ ॥ सहैव श्रपयेदन्नं नास्ति व्युद्धरणं तथा। आदिष्टमन्त्रहोमेषु सर्वत्रैवं प्रतीयताम् ॥ ४ ॥ कृत्वाज्यभागपर्यन्तं जुहुयात्सप्तभिश्चरुम्। अग्नेनयेत्यृचा[2] पञ्च ग्रीष्म इत्यादयस्तथा ॥ ५ ॥ अविज्ञातस्वरो मन्त्रः सौत्रे[3] एकश्रुतिर्भवेत् । ततः स्विष्टकृतं[4] हुत्वा होमशेषं समापयेत् ॥ ६ ॥ अथाच्छादनपर्यन्तं श्राद्धं पार्वणवद्भवेत्। उद्धृत्य भोजनार्थान्नाद्द्वे हुत्वाथ पाणिषु ॥ ७ ॥ सोमायेति तु मन्त्राभ्यां मेक्षणेन करेण वा। एकैकामाहुतिं केचिद्विगृह्यैव प्रजुह्वति ॥ ८ ॥ प्राशितेषु हुतेष्व-

---

१ पशुना पशुकल्पेनेत्यर्थः। २ तानेव मन्त्रानाह—अग्ने नयेति। ३ इदमुपलक्षणं स्वरापरिज्ञानमात्रेप्येवमेव पाठः। ४ स्विष्टकृतमग्निं हुत्वेत्यर्थः।

न्नेष्वन्यदन्यं ददास्तथ । उदीच्याः प्राहुरत्रैवं न प्राश्नीयात्करे हुतम् ॥ ९ ॥ निधाय तद्धुतं पात्रेष्वाचम्योपविशेदिति । संपन्नवचनान्तं स्याच्छेषं पिण्डार्थमुद्धरेत् ॥ १० ॥ ब्राह्मणानां समीपे तु पिण्डनिर्व.पणं भवेत् । न कार्यमग्निं प्रत्येयादिसाद्यत्र तु कर्मणि ॥ ११ ॥ प्राशये- न्मध्यमं पिण्डं श्राद्धशेषं समापयेत् । अन्वष्टक्यं च पूर्वेद्युर्मासिमासि च पार्वणम् ॥ १२ ॥ चतुर्ष्वेष्वाग्निहोमः स्यात्पिण्डांश्चाग्निसमीपतः । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥ १३ ॥ चतुर्ष्वेषु करे होमः पिण्डदानं द्विजान्तिके । पिण्डनिर्वपणं केचिन्नेच्छन्त्यस्मिंश्चतुष्टये ॥ १४ ॥ ( ८७६ ) इत्यष्टमीश्राद्धम् ॥ ॥ १० अन्वष्टक्यश्राद्धम् ॥ ॥ ॥ अन्वष्टक्यं[2] भवेत्कर्म नवम्यां पितृयज्ञवत् । दक्षिणाप्रवणे वह्निं निधाय ज्वलयेच्चरुम् ॥ १ ॥ त्रिः परिस्तीर्य तं दर्भैः समूलैरप्रदक्षिणम् । अतिप्रणीतवह्नेश्च भवेदेवं परिस्तृतिः ॥ २ ॥ अकम्पयन्[3]निदं कुर्यात्परिस्तरण- मत्र तु । ओदनं कृसरं चैव पायसं श्रपयेत्तथा ॥ ३ ॥ कुर्वीत दधिमन्थाख्यं मधुमन्थाख्यमेव च

---

१ पत्नीमिति शेषः । २ अष्टकाया अनु पश्चात्क्रियमाणमन्वष्टक्यम् । ३ अकम्पयन्नाम आस्तरणोपयो- गिमात्रं दक्षिणकरकम्पनं कुर्वन् । तथाच इतरावयवचालनं न कार्यमिति भावः ।

श्रपयित्वा चरूनग्नौ दधिमन्थाद्यधिश्रयेत् ॥ ४ ॥ सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः । मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तवः ॥ ५ ॥ कुर्याल्लेखे अवस्तीर्य सकृच्छिन्नद्वयेन ते । अभिघार्य क्रमेणैतानुद्वासयति पूर्ववत् ॥ ६ ॥ मात्राद्यर्थं पृथक्कुर्यात्कशिपुं सोपबर्हणम् । कृत्वेध्माधानपर्यन्तं ब्राह्मणानुपवेशयेत् ॥७॥ कांश्चिद्द्विमान्पितृश्राद्धे स्त्रीश्राद्धे कांश्चिदेव तु । नोहेन्मात्रर्घ्यपात्रेषु तिलावापे पितॄन्पदम् ॥ ८ ॥ अर्घ्यप्रधानमन्त्रेषु मात्रादिपदमावपेत् । वासःप्रदानपर्यन्तं प्राग्वत्कृत्वोभयत्र तु ॥ ९ ॥ मधुमन्थहविर्वर्जमुद्धृत्यान्नं चतुष्टयात् । अनुज्ञातो द्विजैस्तद्वज्जुहुयादाहुतिद्वयम् ॥ १० ॥ हविश्चतुष्टयात्केचिदूचिरेऽष्टाहुतीरिह । संपन्नवचनान्तं स्यादन्नदानादि पूर्ववत् ॥ ११ ॥ उद्धृत्य भुक्तशेषान्नमेकीकृत्य च पञ्चभिः । पूर्वस्यामथ लेखायां पितॄणां निनयेज्जलम् ॥ १२ ॥ पश्चिमायां तु लेखायां मातॄणां निनयेज्जलम् । शुन्धन्तामत्र पित्रादौ मात्रादिपदमावपेत् ॥ १३ ॥ दत्त्वा पिण्डान्पितृभ्यस्तु मात्रादिभ्यो ददात्यथ । मातृपिण्डेषु निनयेत्सुरा चाचाममेव च ॥ १४ ॥ ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः । स्त्रीद्वित्वे वा बहुत्वे वा तेशब्दस्योह इष्यते ॥ १५ ॥ निर्दिशेन्नामनी द्वित्वे नामान्यपि बहूनि चेत् । नाम द्विवचनान्तं स्यादेवं तच्चेद्द्वयोरपि ॥ १६ ॥ नोह्या इति येशब्दं वृत्तिकारवचो यथा । जयन्तस्वामिनः शिष्या ऊहं कुर्वन्ति या इति

॥ १७ ॥ द्वित्वे युवां बहुत्वे तु युष्मानिति पदं वदेत् । अनूहेनैव पिण्डानां सकृत्स्यादनुमन्त्रणम्
॥ १८ ॥ अभ्यञ्जाथांपदं द्वित्वे बहुत्वेऽभ्यङ्ध्वमित्यथ । द्वित्वेऽञ्जाथांपदं ब्रूयाद्बहुत्वेऽङ्ध्वंपदं
वदेत् ॥ १९ ॥ दद्याद्दशामनूहेन मन्त्रस्यावृत्तिरिष्यते । अनूहेनैव षट् पिण्डान्सकृदेवोपतिष्ठते
॥ २० ॥ अनूहेनोभयेषां स्याद्युगपच्च प्रवाहणम् । पिण्डदानमनूहेन मन्त्रस्यावृत्तिरिष्यते ॥ २१ ॥
पिण्डद्वयमनूहेन पत्नीं वै प्राशयेदथ । स्यात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत् ॥ २२ ॥
( ५९८ ) इत्यन्वष्टक्यम ॥ ॥ ११ माघ्यावर्षम् ॥ ॥ माघ्यावर्षं नभस्यस्य कृष्णाष्टम्यां
विधीयते । अष्टकाकर्मवत्कार्यं सप्तम्यादिष्वहःसु तत् ॥ १ ॥ माघ्या वर्षं नभस्यस्य कृष्णपक्षेति
कुत्रचित् । अन्वष्टक्यवदेव स्यात्पार्वणं वेति केचन ॥ २ ॥ (६००) इति माघ्यावर्षम् ॥ ॥
१२ कृष्णपक्षश्राद्धम् ॥ ॥ प्रतिमासं भवेत्कृष्णपक्षे युग्मेऽह्नि कुत्रचित् । पितृभ्य एव तच्छ्राद्धमन्व-
ष्टक्यविधानतः[2] ॥ १ ॥ ( ६०१ ) इति कृष्णपक्षश्राद्धम् ॥ ॥ १३ काम्यश्राद्धम् ॥

---

१ यत्र तु नवदैवत्यं श्राद्धं भवति तत्र पङ्क्तित्रयस्यापि मध्यमपिण्डत्रयप्राशनं भवति । २ पिण्डपितृयज्ञ-
सममेतदिति भावः । अन्वष्टक्ये मात्रादिभ्यो दीयते तदत्र न कर्तव्यमिति विशेषः ।

पञ्चम्यां पुत्रकामस्येत्यादि काम्यं तदुच्यते । श्राद्धं यदुक्तमष्टम्यां तद्वदेव तदिष्यते ॥ १ ॥ (६०२) इति काम्यश्राद्धम् ॥ ॥ १४ मासिमासिश्राद्धम् ॥ ॥ विकल्पः पार्वणाख्यस्य मासिश्राद्धस्य चेष्यते । काम्यश्राद्धे कृते नैव कार्ये मासिकपार्वणे ॥ १ ॥ अष्टमीश्राद्धवत्कुर्यादाहिताग्निस्तु पार्वणम् ॥ २ ॥ (६०४) इति मासिमासिश्राद्धम् ॥ ॥ १५ नान्दीश्राद्धम् ॥ ॥ स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु । स्यात्पुंसवनसीमन्तचौलोपनयनेष्विह ॥ १ ॥ विवाहे चानलाधेयप्रभृतिश्रौतकर्मसु । इदं श्राद्धं प्रकुर्वीत द्विजो वृद्धिनिमित्तकम् ॥ २ ॥ अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्तिनिमित्तकम् । ॥ ३ ॥ प्राङ्मुखोऽत्रोपवीती स्यादुपचारः प्रदक्षिणम् । तिलकार्यं यवैः कुर्याद्युग्मान्विप्रान्निमन्त्र्य तु ॥ ४ ॥ ऋजुदर्भानमूलांस्तु दत्त्वैषामासनेष्वथ । प्राक्संस्थपात्रेष्वासिच्य प्रागग्रचापो निमन्त्र्य तु ॥ ५ ॥ तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत् । स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह

---

१ यथाष्टम्यां पिण्डपितृयज्ञो नास्ति, श्राद्धीयान्नेन द्विजपाणिषु होमः, द्विजसमीपे पिण्डनिर्वपनमिति तथात्रापि प्रत्येतव्यमित्यर्थः ।

॥ ६ ॥ पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति । स्वधानमःपदस्थाने स्वाहाशब्दं वदेदिह ॥ ७ ॥ संबन्धनामरूपाणि वर्जयेदत्र कर्मणि । अतोऽन्यत्तु यथापाठमुक्त्वार्घ्येष्वावपेद्यवान् ॥ ८ ॥ नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः । पित्रर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ॥ ९ ॥ इममेव वदेन्मन्त्रं पितामहपदान्वितम् । तदर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ॥ १० ॥ प्रपितामह-संयुक्तं मन्त्रमुक्त्वैवमेव तु । तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तत् ॥ ११ ॥ नान्दीमुखास्तु पितर इदं वोऽर्घ्यमिति त्वथ । दत्त्वार्घ्यस्यैकदेशं स्यादर्घ्यदानं प्रतिद्विजम् ॥ १२ ॥ आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते । प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमन्त्रणम् ॥ १३ ॥ यवोऽसीत्यूहमन्त्रः स्यादर्घ्यं इत्परे जगुः । द्विर्द्विर्गन्धादि दातव्यं पाणिहोमो भवेदिह ॥ १४ ॥ अग्नये कव्यवाहादि-मन्त्रेण प्रथमाहुतिः । सोमायेति द्वितीया स्यात्तथाऽन्येषां च पाणिषु ॥ १५ ॥ आभ्यामेव तु मन्त्राभ्यां द्वेद्वे हुत्वाहुती इह । एकैकामाहुतिं केचिद्द्विगृहीत्वैव प्रजुह्वति ॥ १६ ॥ स्वधानमःपदस्थाने स्वाहाकारो भवेदिह । अथ तृप्तिपरिज्ञानपर्यन्तं पूर्ववद्भवेत् ॥ १७ ॥ मधुवाता इतिस्थाने उपास्मै गायता नरः । पञ्चर्चः श्रावयित्वाक्षन्निति च श्रावयेदथ ॥ १८ ॥ संपन्नवच-नादि स्यादाचान्तेषु द्विजेषु तु । अथ भुक्ताशयात्सम्यग्गोमयेनोपलेपयेत् ॥ १९ ॥

तत्र प्रागग्रकान्दर्भानास्तृणाति ततः परम् । पृषदाज्यं च कुर्वीत दध्यानयति सर्पिषि ॥ २० ॥ पृषदाज्येन संमिश्रं भुक्तशेषोद्धृतं भवेत् । एकैकस्योक्तमन्त्रेण द्वौद्वौ पिण्डौ तु निर्वपेत् ॥ २१ ॥ अथानुमन्त्रणादि स्यात्तत्तु नेच्छन्ति केचन । अथो संपन्नमन्त्रेण विप्राणां स्याद्विसर्जनम् ॥ २२ ॥ ( ६२६ ) इति नान्दीश्राद्धम् ॥ ॥ १६ रथारोहणम् ॥

॥ आरोक्ष्यऽशकटादीनि वनस्पते इति स्पृशेत् । स्थिराविति स्पृशेद्वावक्षमीषां युगं तथा ॥ १ ॥ सुत्रामाणमृचा नावमारोहेदुत्तरन्नदीम् ॥ २ ॥ ( ६२८ ) इति रथाद्यारोहणम् ॥ ॥ १७ वास्तुपरीक्षा शान्तिश्च ॥

॥ कार्या वास्तुपरीक्षाथ बाह्यैर्लिङ्गैस्तथान्तरैः । इरिणं च विवादश्च न स्तो यस्मिन्स्थले सदा ॥ १ ॥ यस्मिन्नोषधयो वृक्षाः प्रभूतं कुशवीरिणम् । सन्ति तत्र गृहं कुर्यात्स्याच्चेदान्तरलक्षणम् ॥ २ ॥ कण्टकिक्षीरिणश्च स्युरपामार्गादयश्च ये । अन्ये च वास्तुविद्यायां निषिद्धा येऽत्र तानपि ॥ ३ ॥ उत्पाट्य सह मूलेन बहिरुद्वासयेदथ । आन्तरं लक्षणं वक्ष्ये यद्वलीयः प्रचक्षते ॥ ४ ॥ जानुमात्रं चतुष्कोणं गर्तं खात्वोद्धृतैस्तु तैः । पांसुभिः पूरयेद्गर्तं पांसुराशौ ततोऽधिके ॥ ५ ॥ प्रशस्तं पांसुराशौ तु समे गर्ते तु वृत्तिमत् । न्यूनेन कुत्सितं विद्यात्तस्मात्तत्र न कारयेत् ॥ ६ ॥ अथास्तमित आदिशे गर्तं तत्पूरयेज्जलैः । व्युष्टायां तं

परीक्षेत प्रशस्तः सजलो यदि ॥ ७ ॥ आर्द्रो यदि भवेद्गर्तो वृत्तिमद्वास्तु तद्भवेत् । स्याच्चेच्छुष्को गृहं तत्र न कुर्यात्कुत्सितं यतः ॥ ८ ॥ प्रशस्तलक्षणैरेभिर्लक्षितो यस्तमेव तु । भूभागं मधुरास्वादं सिकताबहुलं तथा ॥ ९ ॥ ततः स्वीकृत्य तं विप्रो बहुशः सीतया कृषेत् । कुर्यात्समचतुष्कोणं दिक्षु सर्वास्वतः परम् ॥ १० ॥ प्रागायतं चतुष्कोणं स्थलं तत्कुरुतेऽथवा । सर्वतश्चोन्नतं मध्ये निम्नं प्राक्प्रवणं भवेत् ॥ ११ ॥ सूक्तेन शंनइन्द्राग्नीमन्त्रान्ते त्रिः परिव्रजन् । प्रोक्षन्नद्भिः शमीशाखयौदुम्बर्या च शाखया ॥ १२ ॥ प्राचीमारभ्य तद्वास्तु व्रजेत्प्रोक्षन्प्रदक्षिणम् । अथ तां दिशमारभ्य त्वापोहिष्ठा तृचेन च ॥ १३ ॥ अम्बुधारां त्रिरच्छिन्नां मुञ्चन्नेव प्रदक्षिणम् । प्रोक्षणव्रजने स्यातां तृचान्तेऽन्यत्समं भवेत् ॥ १४ ॥ प्राच्यां दिशि गृहस्थस्य शयनीयं गृहं भवेत् । ततस्तु शयनीयस्य गृहस्योत्तरदेशतः ॥ १५ ॥ अपां शनैस्तु निर्गत्यै कुर्यात्स्यन्दनिकामृजुम् । महानसं भवेत्तत्र यत्र स्यन्दनिका कृता ॥ १६ ॥ वास्तुमध्ये सभां कुर्याद्यत्रास्ते स्वजनैर्वृतः । यावन्तः संभवन्त्यत्र वंशास्तत्र द्वयोर्द्वयोः ॥ १७ ॥ अन्तरेषु पृथक्कृत्य कुड्येनान्येन वा ततः । अवान्तरगृहाण्यत्र कारयेद्वास्तुशास्त्रवित् ॥ १८ ॥ स्थूणावटेषु त्ववकां शीपालं चावधापयेत् । आसां या मध्यमा स्थूणा तस्या गर्ते त्वतः परम् ॥ १९ ॥ प्रागग्रानुदगग्रांश्च

कुशानप्यास्तृणात्यथ । आसिञ्चेदच्युतायेति तस्मिन्व्रीह्यादिमज्जलम् ॥ २० ॥ गर्तेऽवधायमानां तां
मध्यस्थूणामुपस्पृशन् । इहैव तिष्ठमन्त्राभ्यामनुमन्त्रयते ततः ॥ २१ ॥ वंशमाधीयमानं तु मध्यमाया
उपर्यथ । ऋतेनेत्यनुमन्त्रान्ये प्रतिवंशं वदन्ति तत् ॥ २२ ॥ समाप्य च गृहं तस्मिन्बीजादि
स्थापयेद्गृहे । गृहप्रवेशनं कुर्यान्मुहूर्ते शोभने ततः ॥ २३ ॥ प्रविश्य बीजवद्गेहं चतस्रः स्थापये-
च्छिलाः । दूर्वास्तासु निधायात्र मणिकं स्थापयेदथ ॥ २४ ॥ पृथिव्याअधिमन्त्रेण यद्वारङ्गर
इत्यथ । एतु राजेति मन्त्रेण मणिकं पूरयेज्जलैः ॥ २५ ॥ मणिकादप आदाय व्रीहीनोप्य यवानपि ।
हिरण्यं चावधायाद्भिः प्रोक्षति त्रिः परिव्रजन् ॥ २६ ॥ सूक्तेन शंनइन्द्राग्नी इति पूर्ववदेव तु ।
अम्बुधारामवच्छिन्नां हरति त्रिः परिव्रजन् ॥ २७ ॥ आपोहिष्ठेत्यनेनैव त्र्यृचेनान्यस्तु पूर्ववत् ।
अन्यस्मात्पचनात्पूर्वं गृहमध्ये चरुं पचेत् ॥ २८ ॥ पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । निर्वाप-
प्रोक्षणे तूष्णीं मन्त्रो वास्तोष्पतेप्रति ॥ २९ ॥ हुत्वा चतसृभिः कुर्वन्स्वाहाकारमृगन्ततः । ततः
स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ३० ॥ अन्नेन गृहसिद्धेन ब्राह्मणान्भोजयेत्ततः । शिवं
वास्तु शिवं वास्त्वित्यथ भुक्तवतो द्विजान् ॥ ३१ ॥ वाचयेत्ते च तद्वाक्यं तथा ब्रूयुः सुपूजिताः । 
शास्त्रान्तरेण संस्कृत्य विशीर्णं यो गृहं विशेत् ॥ ३२ ॥ शिवं वास्त्विति मन्त्रः स्याद्बीजस्थापन-

पूर्वकम् ॥३३॥ (६६९) इति वास्तुशान्तिः ॥ ॥ १८ गृहे प्रवासप्रत्यागमनम् । अभयं
वोऽभयं मेस्तु मन्त्रेणोपासनं गृही । प्रवत्स्यन्नुपतिष्ठेत ततो ग्रामान्तरं व्रजेत् ॥ १ ॥ आगत्य
ज्वलयित्वाग्निमनेनैवोपतिष्ठते । गृहानेत्यादिमन्त्रेण गृहानीक्षेत वै ततः ॥ २ ॥ गृहानहं सुमनस
इत्यनेन प्रपद्यते । जपेत्त्रिर्वीक्षमाणस्तु शिवं शग्ममिति त्वथ ॥ ३ ॥ प्रवासादेत्य पुत्रस्य परिगृह्य
शिरस्ततः । अङ्गादङ्गादिति जपन्मूर्ध्नि त्रिरवजिघ्रति ॥४॥ प्रवासादेत्य कर्तव्यं कुमार्या अप्यमन्त्रकम् ।
साग्निः प्रयाति चेत्पाणी प्रतपेद्यात इत्यथ ॥ ५ ॥ जिघ्रेत्पाणी ततः काले व्याहृत्याग्निं समुच्छ्वसेत् ।
प्रादुष्करणकालो यः स काल इति कीर्तितः ॥ ६ ॥ कृते पाणिसमारोपे नियमांस्तु निबोधत ।
जलेऽनिमज्जनः स्नायान्नोपेयाच्च स्त्रियं तथा ॥ ७ ॥ कृत्वा मूत्रपुरीषे तु चिरं नासीत चाशुचिः ।
समिधं प्रतपेद्वाग्नावयं ते योनिरित्यृचा ॥ ८ ॥ अग्नौ प्रत्यवरोहेति काले तामादधात्यथ ।
अनेनैव च पूर्वस्मिन्पक्षेप्यग्निं समुच्छ्वसेत् ॥ ९ ॥ (६७०) इति गृहप्रवासप्रत्यागमनम् ॥
॥ १९ क्षेत्रकर्षणादि ॥ ॥ द्रव्यार्थमुत्तरैः प्रोष्ठपदैः क्षेत्रं प्रकर्षयेत् । रोहिण्यां वा तादिष्यते
फल्गुनीषूत्तरासु वा ॥ १ ॥ स्वक्षेत्रस्यानु वा तं तु देशं गच्छेत्सदाधनः । कृत्वाज्यभागपर्यन्तमु-
पलेपादि पूर्ववत् ॥ २ ॥ तत एतेन सूक्तेन क्षेत्रस्य पतिना वयम् । ऋगन्ततः पठन्स्वाहाकारमा-

ज्याहुतीर्दिशेत् ॥ ३ ॥ एतत्सूक्तं जपित्वा वा ततः क्षेत्रं प्रकर्षयेत् ॥ ४ ॥ (६७४) इति क्षेत्रकर्षणादि ॥ ॥ २० क्षेत्रे नित्यं गवानुमन्त्रणम् । ॥ गच्छन्तीरटवीं गन्तुमनुमन्त्रयते स्वगाः । अन्या वा नियमो द्वाभ्यां मयोभूर्वात इत्यथ ॥ १ ॥ आगच्छन्तीरिमास्तृप्ता अनुमन्त्रयते पुनः । यासामूधऋचा तद्वद्या देवेषु द्वयेन च ॥ २ ॥ आगावः सूक्तमेवान्ये आयान्तीनां तु मन्त्रणे । अथो गुरुगवां सङ्घान्भूतास्थेत्युपतिष्ठते ॥ ३ ॥ वाच्यं शं मयि जानीध्वं मन्त्रान्ते सकृदेव तु । कुर्यादहरहश्चेदं शुचौ देशे समाहितः ॥ ४ ॥ मध्येषु गुरुगव्यश्चेत्कर्म वै नैतदिष्यते ॥ ५ ॥ (६७९) इति गवानुमन्त्रणम् ॥ ॥ इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु द्वितीयोऽध्यायः ॥ २ ॥

अथ तृतीयोऽध्यायः ॥ ३ ॥ ॥ १ काम्यचरुहोमः ॥ ॥ अनाहिताग्निरेवेमान्कुर्यात्काम्यांश्चरूनथ । परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥ १ ॥ अग्नये पुत्रिणे त्वेति पुत्रकामस्तु निर्वपेत् । अग्नये पुत्रिणे स्वाहेत्येतेन जुहुयाच्चरुम् ॥ २ ॥ आयुःकामादिकचरूनेवमेव करोत्यथ । सूत्रोक्तदेवता ज्ञेयास्तत्र तत्र तु कर्माणि ॥ ३ ॥ (६८२) इति काम्यचरुहोमः ॥ ॥ २ व्याधिनिमित्तचरुहोमः ॥ ॥ व्याध्यादिषु निमित्तेषु षडाहुतिचरुर्भवेत् । परिषेचनपर्यन्त

मन्वाधानादि पूर्ववत् ॥ १ ॥ निर्वापप्रोक्षणे तूष्णीं भवेतामत्र कर्मणि । मुञ्चामि त्वेति सूक्तेन प्रत्यृचं जुहुयाच्चरुम् ॥ २ ॥ षष्ठं स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ३ ॥ ( ६८५ ) इति व्याधिनिमित्तचरुहोमः ॥ ॥ ३ दुःस्वप्नादिपरिहारः ॥ ॥ स्वप्नं दृष्ट्वाऽशुभं सूर्यमुपतिष्ठेत सप्तभिः । अद्यान इति तु द्वाभ्यां यच्च गोष्विति पञ्चभिः ॥ १ ॥ यो मे राजन्नृचा वार्कमेकयैवोपतिष्ठते ॥ २ ॥ ( ६८७ ) इति दुःस्वप्नपरिहारः॥ ॥ ४ जृम्भादौ प्रायश्चित्तम् ॥

॥ जृम्भित्वा यदि वा क्षुत्वा दृष्ट्वा प्रत्यक्षमप्रियम् । पापकं गन्धमाघ्राय तथाक्षिस्पन्दनेऽथवा ॥ १ ॥ अयाज्यं •याजयित्वा चाह्याविषादि प्रगृह्य च । अप्रतिग्राह्यपुरुषद्रव्यं वा प्रतिगृह्य च ॥ २ ॥ स्पृष्ट्वाग्निचयनस्थं च यूपं चाभोज्यभोजने । पञ्चस्वेषु निमित्तेषु भवेदन्यतमं यदि ॥ ३ ॥ पर्यूह्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् । पुनर्मामैतुमन्त्राभ्यां जुहुयात्संस्कृतं घृतम् ॥ ४ ॥ एताभ्यामेव मन्त्राभ्यां समिधावादधाति वा । पर्यूहनोक्षणे स्यातामन्यत्तन्त्रं तु नेष्यते ॥ ५ ॥ स्वाहाकारविनिर्मुक्तं यद्वा मन्त्रं जपेदिह ॥ ६ ॥ ( ६९३ ) इति जृम्भादौ प्रायश्चित्तम् ॥ ॥ ५ निद्रितेऽस्तमने प्रायश्चित्तम् ॥ ॥ स्वपन्तं सन्तमगदमादित्योऽस्तमियाद्यदि । तिष्ठन्नेव नयेद्रात्रिशेषं वाग्यत एव सन् ॥ १ ॥ उदिते येन सूर्येति पञ्चभिस्तूपतिष्ठते । अविध्युक्ताक्रियाश्रान्त-

मपि निद्रावशं गतम् ॥ २ ॥ अर्कोऽभ्युदेति चेदह्नः शेषं स्थित्वा तु वाग्यतः । उदिते यस्य ते विश्वेत्यृग्भिश्चतसृभी रविम् ॥ ३ ॥ उपतिष्ठेत विहितकर्मश्रान्तस्य नेष्यते ॥ ४ ॥ (६९७) इति निद्रितेऽस्तमने प्रायश्चित्तम् ॥ ॥ ६ कपोताद्युतापघाते प्रायश्चित्तम् ॥ ॥ रक्तपादः कपोताख्य अरण्यौकाः शुकच्छविः । स चेच्छालां विशेच्छालासमीपं वा व्रजेद्यदि ॥ १ ॥ परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् । देवाः कपोतसूक्तेन प्रत्यृचं जुहुयाद्धृतम् ॥ २ ॥ षष्ठं स्वाहेति जुहुयात्प्रत्यृचं च वनेष्विह । इदं सूक्तं जपेद्यद्वा विकल्पो जपहोमयोः ॥ ३ ॥ (७००) इति कपोताद्युपघातप्रायश्चित्तम् ॥ ॥ ७ धनार्थगमने विधिः ॥ ॥ गच्छन्धनार्थी सूक्तेन वयमुत्वा पथस्पते । पूर्ववत्प्रत्यृचं होमं कुर्यात्सूक्तस्य वा जपम् ॥ १ ॥ प्रज्ञाहीनोऽथवा नष्टं लब्धुमिच्छञ्जुहोत्यथ । संपूषन्सूक्ततस्तद्वत्प्रत्यृचं यदि वा जपेत् ॥ २ ॥ गमिष्यन्महदध्वानमल्पं वापि भयानकम् । संपूषन्नध्वसूक्तेन प्रत्यृचं यदि वा जपेत् ॥ ३ ॥ (७०३) इति धनार्थगमने विधिः ॥ ॥ ८ औपासनाग्निनाशे प्रायश्चित्तम् ॥ ॥ औपासनाग्निर्गच्छेच्चेदुपलेपादि पूर्ववत् । आहृतं श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ॥ १ ॥ अन्यस्माद्धोमकालात्स्त्री नाश्नीयाद्यदि वा गृही । पर्यूहनादिकं कृत्वा संस्कृत्याज्यं च पूर्ववत् ॥ २ ॥ अया-

श्चेत्यनया हुत्वा यथापूर्वं जुहोत्यथ ॥ ३ ॥ ( ७०६ ) इत्यौपासनाग्निनाशप्रायश्चित्तम् ॥

॥ ९ **अन्वाधानोत्तरमग्निनाशे प्रायश्चित्तम्** ॥ अन्वाधाने कृते यागात्प्राक्चेदनुगतिर्भवेत् । प्रायश्चित्तमिदं कृत्वा पुनरन्वादधात्यथ ॥ १ ॥ अन्वाधाने कृते यागात्प्रागेवारोपयेद्यदि । तुभ्यं ता इत्यृचा हुत्वा वह्निमारोपयेत्ततः ॥ २ ॥ ( ७०९ ) इत्यन्वाधानोत्तरमग्निनाशे प्रायश्चित्तम् ॥

॥ १० **नित्यहोमातिक्रमे प्रायश्चित्तम्** ॥ ॥ नित्यहोमे त्वतिक्रान्ते संस्कृत्याग्निं च पूर्ववत् । चतुष्कृत्वो गृहीत्वाज्यं मनस्वत्या जुहोत्यथ ॥ १ ॥ आद्वादशादिनाद्येवमूर्ध्वं विच्छिद्यतेऽनलः[1] । प्रायश्चित्तं तु मत्प्रोक्तमग्नित्यागोपपातके ॥ २ ॥ मनुना तत्प्रकुर्वीत तत्तत्कालानुसारतः । त्रैमासिकं गोवधोक्तं त्यक्तेऽग्नौ निष्कृतिर्भवेत् ॥३॥ चान्द्रायणं वा होम्यस्य दानं वापि समाचरेत् । अन्यत्र पुनराधानं दानमेव तथैव च ॥ ४ ॥ उपलेपादिकं कुर्यादाघारान्तं विवाहवत् । विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदिह ॥ ५ ॥ गृहप्रवेशनीयाश्च हुत्वा स्याद्धृदयाञ्जनम् । परिणीत्यादि नास्त्यत्र लाजानावपति स्वयम् ॥६॥ समानतन्त्रकं चेह होमद्वयमिदं भवेत् ॥७॥ ( ७१६ ) इति नित्यहो-

---

१ विच्छिद्यते लौकिको भवतीत्यर्थः ।

मातिक्रमे प्रायश्चित्तम् ॥ ॥ ११ उभयातिक्रमे ॥ ॥ उभयातिक्रमे कार्य एकः पथिकृतो भवेत् । तृतीयप्रभृतीनां तु पर्वणामतिपातने ॥ १ ॥ पुनराधेयमिच्छन्ति केचिद्ब्रह्मविदो द्विजाः । समारूढसमिन्नाशे पुनराधेयमिष्यते ॥ २ ॥ (१७८) इत्युभयातिक्रमप्रायश्चित्तम् ॥ ॥ १२ पुनराधानम् ॥ ॥ वक्ष्यामि पुनराधेयं जयन्तस्वामिनो मतम् । अग्न्याधेयीयसंभारान्यथासंभवमाहरेत् ॥ १ ॥ उपलेपादिकं कृत्वा संभारान्निदधाति तान् । संभारेष्वादधात्यग्निं श्रोत्रियादिगृहाहृतम् ॥ २ ॥ पर्यूहनादिकं कृत्वा संस्कृत्याज्यं च पूर्ववत् । स्रुवेण जुहुयादाज्यमयाश्चेत्यनयैकया ॥ ३ ॥ स्थालीपाके त्वतिक्रान्ते यद्यन्याग्नौ स्वयं यजेत् । स्वाग्नावन्यो यजेद्यद्वा कार्यः पथिकृतश्चरुः ॥ ४ ॥ आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम् । तया चाज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते ॥ ५ ॥ स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः । प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ॥ ६ ॥ कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥ ७ ॥ (७२८) इति पुनराधानविधिः ॥ ॥ १३ अग्नेरायतनाद्बहिर्गमने ॥ ॥ अर्वाक्शम्यापरासात्तु बहिरायतनाद्धृतम् । प्रायश्चित्तसमाहृयन्तं समर्थो जीवितुं यदि ॥ १ ॥ इदं त इत्यृचा तस्य स्थानेऽग्निं प्राक्षिपेत्पुनः । आज्याहुतीश्च जुहुयाद्व्याहृत्याख्यैश्च पूर्ववत् ॥ २ ॥ अतिक्रान्तो यदा शम्यापरास-

मनलो भवेत् । चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा ॥ ३ ॥ ( ७२८ ) इत्यायतनादग्ने-र्बहिर्गमने प्रायश्चित्तम्॥ ॥१४ इध्माधानोत्तरं हविषि दुष्टे ॥ ॥इध्माधाने कृते दुष्टं प्रधा-नहविरत्र चेत् । तत्स्थाने जुहुयादाज्यमदुष्टं च जुहोत्यथ ॥ १ ॥ एवं समाप्य यद्दुष्टं तदप्यप्सु क्षिपे-त्पुनः । अन्वाधानादिको यागः पुनः कर्तव्य एव तु ॥ २ ॥ ( ७३० ) इति दुष्टे हविषि प्रायश्चित्तम् ॥ ॥ १५ इध्माधानतः पूर्वं दुष्टे॥ ॥ प्रागिध्माधानतो दुष्टे प्रधानहविषि त्वथ। तद्धविः पुनरुत्पाद्य पूर्ववत्तत्समापयेत् ॥ १ ॥ अङ्गानां चेद्धविर्दुष्टं तदप्यप्सु क्षिपेत्पुनः । स्विष्ट-कृद्धविषो दोष आज्येनैव समापयेत्॥ २ ॥ ( ७३२ ) इतीध्माधानात्पूर्वदुष्टविधिःप्रायश्चि-त्तम् ॥ ॥ १६ नखाद्यमेध्यप्रक्षेपे ॥ ॥ प्रच्युतैस्तु नखैः केशैः कीटैर्वामेध्यसेविभिः । वसासृक्शुक्रमज्जास्थिमूत्रविण्मेददूषिकैः ॥ १ ॥ श्लेष्माद्यैरपि बीभत्सैर्दुष्टानि स्युर्हवींषि तु । भिन्नानि चैव सिक्तानि दुष्टानि स्युः क्षिपेज्जले ॥ २ ॥ ( ७३४ ) इति नखाद्यमेध्यप्रक्षेपे प्रायश्चित्तम् ॥ ॥ १७ स्रुगादिनाशे ॥ ॥ स्रुक्चेद्भिद्येत तर्ह्यन्यामाहृत्य जुहुयाद्धविः । वानस्प-त्यानि भिन्नानि प्राग्दण्डान्यनिले क्षिपेत् ॥ १ ॥ ( ७३५ ) इति स्रुगादिनाशे ॥ ॥ १८ अग्निसंसर्गे ॥ ॥ संसृष्टो यस्य गृह्याग्निरन्यगृह्याग्निना यदि । चरुर्विविचये कार्यो यद्वा पूर्णाहु-

तिर्भवेत् ॥ १ ॥ अग्निर्गुणी भवेदेषु विविचित्वादिको गुणः । चरुः क्षामाय कर्तव्यो गृहदाहेषु वै भवेत् ॥ २ ॥ ( ७३७ ) इत्यग्निसंसर्गे ॥ ॥ १९ शवाग्न्यादिसंसर्गेषु ॥ ॥ शवाग्निना तु संसर्गे कुर्वीत शुचये चरुम् । पचनाग्नेस्तु संसर्गे संसर्गाय चरुर्भवेत् ॥ १ ॥ वैद्युतेन तु संसर्गे कुर्यादप्सुमते चरुम् । प्रायश्चित्तचरुस्थाने पूर्णाहुतिरिहेष्यते ॥ २ ॥ पर्वण्यार्ताश्रुपातेन कुर्याद्व्रतभृते चरुम् ॥ ३ ॥ समानतन्त्रं कुर्वन्ति पार्वणेन तु कर्मणा । स्याच्चेत्पवित्रयोर्नाशः स्यात्पवित्रवते चरुम् ॥ ४ ॥ ( ७४१ ) इति शवाग्न्यादिसंसर्गेषु ॥ ॥ २० अनादिष्टप्रायश्चित्तम् ॥ प्रायश्चित्तविशेषस्य यत्र नोक्तो भवेद्विधिः । होतव्याज्याहुतिस्तत्र भूर्भुवःस्वरितीह तु ॥ १ ॥ स्वयं ज्वलित उद्दीप्यस्वेति द्वाभ्यां समिद्द्वयम् । आधेयमुपघाते तु पुनस्त्वेऽयनया समित् ॥ २ ॥ अकृताग्रयणोऽश्नीयान्नवान्नं यस्तु वै ततः । वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा ॥ ३ ॥ द्विषदन्नं यदा भुङ्क्ते तत्राप्येष चरुर्भवेत् ॥ ४ ॥ ( ७४५ ) इत्यनादिष्टप्रायश्चित्तम् ॥ ॥ २१ कपालनाशादौ ॥ ॥ कपालनाशेऽप्येष स्याच्छ्रवणाकर्मनामनि । कपालं तद्भवेद्भिन्नं प्रागेव श्रपणाद्यदि ॥ १ ॥ तदा तत्रोक्तमन्त्रेण कपालं संदधात्यथ । अभिन्नो घर्म इत्याभ्यामप्सु तत्प्रक्षिपेदथ ॥ २ ॥ तच्चेदशुचिसंबद्धं मृन्मयं भिन्नमेव वा ॥ ३ ॥ (७४८) इति कपालनाशादौ ॥

॥ २२ पुरोडाशभेदे ॥ ॥ भिद्येद्यदि पुरोडाश उद्गच्छेदथवा यदि । किमुत्पतासिमन्त्रेण बर्हिष्येनं निधाय तु ॥ १ ॥ अभिमन्त्रयते तं च माहिंसीरिरिति मन्त्रतः । श्रूयते मृतशब्दश्चेद्यजमाने तु जीवति ॥ २ ॥ अग्नये सुरभिमते चरुः पूर्णाहुतिस्तु वा ॥ ३ ॥ (७८१) इति पुरोडाशभेदे ॥

॥ २३ यमलजनने ॥ ॥ अथ यस्य वधूर्गौर्वा जनयेच्चेद्यमौ ततः । स मरुद्भ्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वा ॥ १ ॥ ( ७८२ ) इति यमलजनने ॥ ॥ २४ आयतनाद्बहिराहुतिपतने ॥

॥ आहुतिर्हूयमाना तु बहिः स्कन्देत चेद्यदि । देवाञ्जनमगन्यज्ञ इत्यनेनाभिमृश्य ताम् ॥ १ ॥ द्रप्सश्चेत्याहुतिं तां च प्रक्षिपेदनले पुनः । देवाञ्जनेति सर्वत्र स्कन्नं त्वभिमृशेद्धविः ॥ २ ॥ निमित्तानन्तरं सर्वप्रायश्चित्तं भवेदिह ॥ ३ ॥ ( ७८८ )इत्यायतनाद्बहिराहुतिपतने ॥ ॥

२८ मन्त्रदेवतादिविपर्यासे ॥ ॥ प्रागेवोत्पद्यते दोष आज्यसंस्कारतो यदि । प्रायश्चित्तं भवेदाज्यसंस्कारानन्तरं ततः ॥ १ ॥ व्युत्क्रमो देवतानां तु संकल्पादौ भवेद्यदि । द्रव्याणां व्युत्क्रमः स्याच्चेत्तथा निर्वपणादिषु ॥ २ ॥ यद्वोदेवाऋचा ब्रह्मा जुहुयात्तु स्रुवाहुतिम् । यन्मुख्यं स्वगृहे द्रव्यं होमकर्त्रे ददाति तत् ॥ ३ ॥ यजमानस्तु जुहुयाद्ब्रह्माभावे स्रुवाहुतिम् । कस्मैचिद्ब्राह्मणायास्मिन्पक्षे द्रव्यं ददाति तत् ॥ ४ ॥ होतव्यैकाहुतिस्तत्र व्याहृत्याख्यैः समुच्च-

यात् । यागानां व्युत्क्रमं ज्ञात्वा इदं कृत्वा यजेत्ततः ॥ ५ ॥ अविज्ञाते विपर्यासे विहिता देवताः स्मरन् । इष्टवांस्तत ऊर्ध्वं तु व्युत्क्रमेऽवगते सति ॥ ६ ॥ प्रायश्चित्तमिदं कृत्वा यागान्नावर्तयेत्तदा । यदा त्वविहितां देवतां स्मरन्निष्टवांस्तदा ॥ ७ ॥ प्रायश्चित्तमिदं कृत्वा यागं त्वावर्तयेत्कृतम् ॥ ८ ॥ ( ७६३ ) इति मन्त्रदेवतादिविपर्यासे ॥ ॥ २६ अपक्वहविरादौ ॥ ॥ यदा हविरपक्कं स्यात्तेनैव हविषा यजेत् । चतुःशरावमात्रैस्तु पचेद्व्रीहिभिरोदनम् ॥ १ ॥ भोजयेत्तेन चान्नेन चतुरो ब्राह्मणानथ । बहुदग्धमदग्धं वा किंचिदेव यदा हविः ॥ २ ॥ शिष्टेनेष्ट्वा पुनर्यागः स्यादारभ्यादितस्तदा । कृत्स्नं दग्धं यदा तत्स्यात्पुनरुत्पादयेद्धविः ॥ ३ ॥ स एव यागः कर्तव्यः पुनर्यागस्तु नेष्यते । मध्यात्पूर्वार्धतोऽवत्तं यदि दुष्टं हविर्भवेत् ॥ ४ ॥ तस्यैव हविषोऽवद्येन्मध्यात्पूर्वार्धतः पुनः । समारूढसमिन्नाशे पुनराधेय इष्यते ॥ ५ ॥ श्रौतोक्तमविरोध्यन्यन्मृग्यं तु शतशास्त्विदम् । बौधायन इदं प्राह लोपे पञ्चमखेषु च ॥ ६ ॥ एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि च हीयते । मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥ ७ ॥ एवं द्व्यहं त्र्यहं वापि प्रमादादकृतेषु तु । तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥ ८ ॥ दशाहं द्वादशाहं वा निवृत्तेषु च सर्वतः । चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमतश्चरुः ॥ ९ ॥ अकृत्वा पञ्चमं यज्ञं पञ्चानां वाष्टकादिषु । उपवासेन

शुद्धिः स्यात्सुमन्तोर्मतमीदृशम् ॥ १० ॥ स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् ॥ ११ ॥ (७७४)
इत्यपहृहविरादिप्रायश्चित्तम् ॥ इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामि-
विरचितासु तृतीयोऽध्यायः ॥ ३ ॥

॥ अथ चतुर्थोऽध्यायः ॥ ॥ १ दाहविधिः ॥ अनाहिताग्निदेहस्य संस्कारविधिरुच्यते । आग्नेय्यां दाहदेशः स्यान्नैर्ऋत्यामथवा दिशि ॥ १ ॥ भवेदभित आकाशः स देशो बहुलौषधिः । उन्नतो मध्यतस्तद्वत्सर्वतो निम्न एव च ॥ २ ॥ उद्धास्यानि समूलानि कण्टकप्रभृतीनि षट् । उर्ध्व-बाहुनरायामं खातं प्राग्दक्षिणायतम् ॥ ३ ॥ पञ्चारत्निमितं तिर्यगधस्ताद्द्वादशाङ्गुलम् । याम्य-प्रवणमाग्नेयीप्रवणं वा करोति तत् ॥ ४ ॥ स्नापयित्वाथ तं प्रेतं नलदेनानुलिप्य च । प्रतिमुञ्चति तन्मालामलंकुर्युः कलेवरम् ॥ ५ ॥ जपां प्रतिनिधिं केचिदूचिरे नलदस्य तु । कुर्युः प्राक्शिरसं प्रेतं यस्मिन्नेव नयन्ति तु ॥ ६ ॥ पादमात्रमवच्छिद्य मूलतोऽहतवाससः । आविष्पादं समासाद्य प्रसृगग्रेण वाससा ॥ ७ ॥ अङ्गुल्यग्राद्ध्वेद्यावत्पार्ष्णिप्रभृतिरस्य तु । तत्पादशब्दवाच्यं स्याज्ज-यन्तवचनं यथा ॥ ८ ॥ तस्याधस्तादथ भवेदन्यद्वासस्तु लौकिकम् । तस्य पुत्रा अवच्छेदं संगृह्णी-युस्ततः परम् ॥ ९ ॥ प्रभूतं बर्हिराज्यं च कर्मण्यत्रोपकल्पयेत् । गृहेच्छमरणे सम्यगस्त्रं....नीयते (?)

यदा ॥ १० ॥ गृहात्प्राच्यामुदीच्यां वा नद्यादौ नीयते तदा । जीवने च यदातस्य (?) वह्नि-
मारोपयत्सुधीः ॥ ११ ॥ सहैव नीयते तत्र ज्वालयेद्विधिपूर्वकम् । प्राणोत्क्रमणदेशात्तु ध्रियमाणं
तु तां दिशि ॥ १२ ॥ औपासनं नयेत्पूर्वं बर्हिराज्यं स्रुवं तथा । कृष्णाजिनं च चमसं तिलानुद-
कमण्डलुम् ॥ १३ ॥ नयन्त्यमिथुना वृद्धा अयुजस्तत्कलेवरम् । गोयुक्तशकटेनैके प्राहुः प्रेतं नये-
दिति ॥ १४ ॥ अव्यवायेन नयनमेतेषामिह कर्मणि । अधःकृतोपवीतास्तु प्रविमुक्तशिरोरुहाः
॥ १५ ॥ अकृत्वोपरि वस्त्रं च गच्छन्तीह सुतादयः । यो ज्येष्ठः स स पूर्वो यः कनिष्ठः स स
पृष्ठतः ॥ १६ ॥ एवंभूतास्तु गच्छेयुरमात्याः प्रेतपृष्ठतः । तद्देशं प्राप्य सत्सर्वमर्वागेव निधाय च
॥ १७ ॥ कर्ताचस्य शमीशाखयोदकेनाप्रदक्षिणम् । प्रोक्षत्यपेतवीत त्रिर्मन्त्रान्ते त्रिः परिव्रजन्
॥ १८ ॥ केचिद्वर्तोदकेनेति सूत्रमन्यदधीयते । खातं प्रोक्ष्यानलं तस्य निधायोत्तरपश्चिमे ॥ १९ ॥
प्रणयेच्चमसेनापो वह्नेरुत्तरदेशतः । तन्त्रं नास्त्यत्र भगवन्नारायणवचो यथा ॥ २० ॥ प्राचीना-
वीतिना कार्यं बौधायनवचो यथा । खाते हिरण्यशकलं निधायास्ये तिलानपि ॥ २१ ॥ चिनुया-
द्दहनायालमिध्मभूतां चितिं ततः । आस्तृणाति चितौ बर्हिरूर्ध्वलोमाजिनं च तत् ॥ २२ ॥
उत्तरेणानलं हृत्वा चितौ संवेशयन्ति तम् । प्रेतस्योत्तरतः पत्नीं चितौ संवेशयन्त्यथ ॥ २३ ॥ तां

देवर उदीर्ष्वेति शिष्यो वोत्थापयेदृचा । छिद्राणि शीर्षकस्थानि सप्त प्रेतस्य सांप्रतम् ॥ २४ ॥
हिरण्यशकलैरास्यप्रभृतीन्यपिधाय च । अवकीर्य घृताभ्यक्तांस्तिलान्प्रेतकलेवरे ॥ २५ ॥
पात्राणां योजनं नास्ति बौधायनवचो यथा । नेष्टं स्विष्टकृदाद्यत्र शेषं कार्यमिति स्थितिः २६ ॥
अथेममग्ने चमसं पूर्णपात्रानुमन्त्रणम् । आज्यस्योत्पवनं तूष्णीं कुर्वन्तीह तु कर्मणि ॥ २७ ॥
सव्यं जान्वाच्य जुहुयात्स्रुवेणाज्याहुतीरिमाः । अग्नये स्वाहा कामाय स्वाहेत्यौपासने ततः ॥ २८ ॥
अथ लोकाय स्वाहेति तृतीयाहुतिरिष्यते । अथानुमतये स्वाहा चतुर्थ्याहुतिरिष्यते ॥ २९ ॥
जान्वाच्य त्वेव जुहुयात्पञ्चमीं हृदि तस्य तु । अस्माद्वै त्वमजायेथा अयं त्वदधिजायताम् ॥ ३० ॥
देवदत्त स्वर्गाय लोकाय स्वाहेति चाहुतिम् । सिग्वाताद्यपरे कुर्युस्तथार्थप्राप्तिसंचितम् ॥ ३१ ॥
ततः प्रज्वालयेदग्निं दह्यमानानुमन्त्रणम् । प्रेहिप्रेहीति पञ्चानां तृतीयामुद्धरेदथ ॥ ३२ ॥ षण्मैनमग्ने
विदहः पूपात्वेति चतुष्टयम् । चतस्र उपसर्पेति सोम एकेभ्य इत्यृचा ॥ ३३ ॥ पञ्चाथोरूणसाव-
स्वित्येका तस्यानुमन्त्रणे । इमे जीवा इति जपेत्कर्ता सव्यावृतस्तु ते ॥ ३४ ॥ तूष्णीमेवेतरेऽ-
प्यासाः कर्त्रा साध्यमतः परम् । पृष्ठतोऽनीक्षमाणास्तु गच्छेयुरुदकास्थिरम् ॥ ३५ ॥ जयन्तस्त्वाह
सर्वेषामयं मन्त्रो भवेदिति । सकृन्निमज्ज्य ते सर्वे एकैकमुदकाञ्जलिम् ॥ ३६ ॥ स्त्रियश्चैकोदका

दद्युरयुग्मा दक्षिणामुखाः। गोत्रं नाम च निर्दिश्य त्वेतत्ते उदकं त्विति ॥ ३७ ॥ उत्तीर्य परि-
धायान्यान्यार्द्राण्यापीडयेत्सकृत्। उदगग्राणि वासांसि शोषणाय वितन्वते ॥ ३८ ॥ आतारको-
दयात्तत्र देशेऽमी सर्व आसते । दृश्यमानेष्वथर्क्षेषु सूर्ये वा रश्मिवर्जते ॥ ३९ ॥ कनिष्ठप्रथमा
ज्येष्ठजघन्या यान्ति मन्दिरम् । अश्मानमनलं चैव गोमयं चाक्षतानथ ॥ ४० ॥ तिलांश्चाप
उपस्पृश्य प्रविशेयुर्गृहं ततः । निश्यस्यान्नं पचेन्नैव क्रीताद्यन्नं तु भुञ्जते ॥ ४१ ॥ नाधीयत
इदं सूत्रं केचिद्ब्रह्मविदो द्विजाः। पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि ॥ ४२ ॥ अन
ग्निकां दहेदेवं कपालजहविर्भुजा । अग्निवर्णं कपालं तु तप्त्वा तत्र विनिक्षिपेत् ॥ ४३ ॥
करीषादि ततो योऽग्निर्जातः स तु कपालजः। पुरोपनयनात्प्रेतं दहेत्स्मृत्युक्तमार्गतः ॥ ४४ ॥
यस्मिन्देशे स्थितो वह्निस्ततोऽन्यत्र मृतो यदि। चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा ॥ ४५ ॥
अन्यदीयेन वत्सेन या गौः स्नुतपयोधरा। आ शरीराहृतेस्तस्याः पयसा होम इष्यते ॥ ४६ ॥
अन्यस्या अपि होतव्यं पयसा तदसंभवे ॥ ४७ ॥ ( ८२१ ) इति दाहविधिः ॥ ॥ २ पा-
लाशविधिः ॥ ॥ शरीराणि न विन्देरन्देशान्तरमृतस्य चेत् ॥ १ ॥ पलाशपर्णवृन्तैस्तु कुर्युस्त
त्प्रतिरूपकम्। दद्याच्छिरस्यशीत्यर्धं ग्रीवायां तु दशैव च ॥ २ ॥ उरसि त्रिंशतं दद्याद्विंशतिं

जठरे तथा । बाह्वोर्द्वयोः शतं दद्यादृशं बाह्वङ्गुलीषु च ॥ ३ ॥ द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव च । ऊर्वोर्द्वयोः शतं देयं षट्त्रिंशं जानुजङ्घयोः ॥ ४ ॥ दश पादाङ्गुलीषु स्युरूर्णासूत्रेण बन्धनम् । स्नाप्यालंकृत्य तद्रूपं कुर्यात्तस्याभिमर्शनम् ॥ ५ ॥ अयं स देवदत्तस्तस्यायमौपासनस्त्विति । । पूर्वोक्तेन प्रकारेण तद्रूपं संस्कारोऽस्तथ ॥ ६ ॥ कृष्णपक्षे प्रमीयेत यद्यहः प्रातराहुतीः । शेषास्तु जुहुयादर्शपर्यन्ताः पक्षहोमवत् ॥ ७ ॥ तदानीमेव जुहुयात्सायंकालाहुतीरपि । सायं म्रियेत चेत्सायमाहुतीर्जुहुयादथ ॥ ८ ॥ तदानीमेव जुहुयात्प्रातःकालाहुतीरपि । सकृद्गृहीतमन्त्रेष्टं भिन्नं तन्त्रं च होमयोः ॥ ९ ॥ दर्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु । होमदर्शौ न कर्तव्यौ पुनर्यदि स जीवति ॥ १० ॥ ( ८३१ ) इति पालाशविधिः ॥ ॥ ३ आशौचसंक्षेपः ॥ ॥ म्रियेतौपवसथ्येऽह्नि नैवैनं याजयेत्तदा । म्रियेताधिश्रिते नित्ये होमद्रव्ये हविष्षु वा ॥ १ ॥ यथा निःशेषदग्धानि तथा तानि दहेत्तदा । बर्हिष्यासादितेष्वेव हविष्षु म्रियते यदा ॥ २ ॥ यासां परिगृहीतानि देवतानां हवींषि तु । चतुर्थ्यन्तानि नामानि तावतीनां वदेदथ ॥ ३ ॥ स्वाहाकारेण युगपत्सर्वाणि जुहुयादथ । नेष्टं स्विष्टकृदाद्यत्र शेषकार्यमिति स्थितिः ॥ ४ ॥ त्रिरात्रं मरणेऽमासा-

 स्त्वक्षारलवणाशिनः । महागुरुमृतौ वर्ज्यं दानमध्ययनं तथा ॥ ५ ॥ द्वादशाहं दशाहं वा सपिण्डेषु 
 मृतेष्वपि । माता पिता तथा तद्वदाचार्यश्च महागुरुः ॥६॥ दशाहमेव ते वर्ज्यं यत्रमत्ता मृताः स्त्रियः।
एकदेशं तु योऽधीते तस्मिन्विप्रे मृते सति ॥७॥ यः समानोदकस्तस्य मरणेऽपि तथैव च । प्रेतानां मरणे
तद्वदजातदशने मृते ॥ ८ ॥ असंपूर्णमृते गर्भे त्रिरात्रं वर्जयेदथ । सहाध्यायिमृतौ चैकग्रामिष्ठ श्रोत्रिये
मृते ॥ ९ ॥ एकाहं वर्जयेदत्र नाशौचं तु विधीयते । स्मृत्युक्तं तद्विजानीयाद्दशाहं शावमित्यथ ॥१०॥
वर्ज्यमध्ययनं त्वेव नाशौचं यस्य वै मृतौ ॥ ११ (८४२) इत्याशौचसंक्षेपः ॥ ॥ ४ अस्थि-
संचयनम् ॥ ॥ अस्थिसंचयनं कृष्णदशम्या ऊर्ध्वमाचरेत् । एकादश्यां त्रयोदश्यां पञ्चदश्या-
मथापि वा ॥ १ ॥ फल्गुलीद्वयमाषाढाद्वयं प्रोष्ठपदाद्वयम् । षड्भ्यस्त्वन्यत्र नक्षत्रे कर्मास्थिचयनं
भवेत् ॥ २ ॥ कृष्णपक्षादि न स्याच्चेत्सापिण्डीकरणादधः । स्मृत्युक्तकाले कर्तव्यमस्थिसंचयनं
तदा ॥ ३ ॥ पुंसामस्थीनि चिनुयुः कुम्भे लक्षणवर्जिते । स्त्रीणामस्थीनि चिनुयुस्तादृक्कुम्भ्यामिति
स्थितिः ॥ ४ ऋचाऽप्रदक्षिणं शीतिकेशीति त्रिः परिव्रजन् । तत्प्रोक्षति शमीशाखयाम्भोभिः
क्षीरमिश्रितैः ॥ ५ ॥ अयुजोऽमिथुना वृद्धाः पादतः प्रभृति क्रमात् । अङ्गुष्ठोपकनिष्ठाभ्यां गृही-
त्वैकैकमस्थि तत् ॥ ६ ॥ तथा कुम्भे च दधाति शब्दस्तु न भवेद्यथा । शूर्पेण भस्म संशोध्य 

सूक्ष्मास्थीन्यवधाय च ॥ ७ ॥ य उक्तो दाहदेशोऽत्र तल्लक्षणवति त्वथ । यत्रापो नाभिस्यन्देरन्व-र्षाभ्योऽन्यास्तथाविधे ॥ ८ ॥ गर्तं खात्वास्थिकुम्भं तमवदध्युरुपेत्यृचा । कर्ता ब्रूयादिमं मन्त्रं स एवात्रोत्तरानपि ॥ ९ ॥ उच्छ्वंचस्वेत्यृचा पांसून्प्रक्षिपेदवटे ततः । उच्छ्वंचमाना पृथिवी सुतिष्ठत्वित्यृचं जपेत् ॥ १० ॥ उत्ते स्तभ्नाम्यृचा कुम्भमपिधाय कपालतः । यथा कुम्भो न दृश्येत पांसुभिः पूर-येत्तथा ॥ ११ ॥ ततोऽनवेक्षमागत्य स्नात्वैकोद्दिष्टमाचरेत् ॥ १२ ॥ ( ८५४ ) इत्यस्थिसंचय-नम् ॥ ॥ ५ एकोद्दिष्टम् ॥ ॥ एकोद्दिष्टे भवेदेक उद्देश्यो ब्राह्मणोऽपि च । अर्घ्यपात्रं भवेदेकं पाणावेकाहुतिर्भवेत् ॥ १ ॥ एकः पिण्डो भवेत्तस्मिन्नावाहन्येत्र निमन्त्रणम् । दैवं धूपं च दीपं च स्वधा-शब्दं च वर्जयेत् ॥२॥ पितृशब्दो नमःशब्दः सूक्तादिश्रावणं न च । कशिपूपबर्हणान्तं स्याद्ब्राह्मण-समीपतः ॥ ३ ॥ प्राचीनावीतिना कार्यं पच्छौचादि च पूर्ववत् । तिलोऽसिमन्त्रस्योहः स्यात्तूष्णीम-र्घ्यनिवेदनम् ॥ ४ ॥ अथाच्छादनदानान्तमर्घ्यदानादि पूर्ववत् । उद्धृत्य भोजनार्थान्नादन्नमक्तं घृतेन तु ॥ ५ ॥ देवदत्ताय स्वाहेति जुहोत्येकाहुतिं करे । अम्भोनिनयने मन्त्रस्योह इत्यादि वृत्तिकृत् ॥ ६ ॥ भुक्तशेषान्नमात्रेण पिण्डमेकं तु निर्वपेत् । गोत्रं नाम वदेत्मेतस्यायं ते पिण्ड इत्यथ ॥ ७ ॥ अनुमन्त्रादि सर्वं स्यादमन्त्रकमिति स्थितिः । पूर्वं यद्दक्षिणान्तं स्यात्संविसर्ज्याभिरम्यताम् ॥ ८ ॥

एकोद्दिष्टे नवश्राद्धवर्जितेऽयं विधिः स्मृतः । नवश्राद्धेषु सर्वं स्यादेकोद्दिष्टममन्त्रकम् ॥ ९ ॥ (८६३)
इत्येकोद्दिष्टम् ॥ ॥ ६ सपिण्डीकरणम् ॥ ॥ वत्सरे द्वादशाहे वा सपिण्डीकरणं भवेत् ।
एकः प्रेते नियोज्योऽत्र द्वौ दैवे नियमेन तु ॥१॥ त्रयो नियोज्याः प्रेतस्य त्रिषु पित्रादिषु द्विजाः ।
पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत् ॥ २ ॥ कुर्यात्पार्वणवत्सर्वं विशेषस्त्वेष उच्यते ।
अर्घ्यपात्राणि चत्वारि प्रेतस्य त्वेकमिष्यते ॥ ३ ॥ तत्पितृप्रभृतीनां तु त्रीणि पात्राणि कल्पयेत् ।
उपविष्टं द्विजं प्रेतमेकोद्दिष्टवदर्चयेत् ॥ ४ ॥ प्रेतपात्रे तिलांस्तूष्णीं प्रक्षिपेन्मन्त्रतस्त्रिषु । चत्वार्य-
प्यर्घ्यपात्राणि गन्धमाल्यैस्तथार्चयेत् ॥ ५ ॥ समानीव ऋचा प्रेतपात्रं त्रिषु निनीय तत् । कृत्वा-
च्छादनदानान्तं भोजनार्थान्नमुद्धरेत् ॥ ६ ॥ करेषु पूर्ववद्धुत्वा शेषं दद्याच्च पाणिषु । शेषं
पाणितले दत्तं नाश्नीयाद्भोजनादधः ॥७॥ अम्भोनिनयनान्तं स्यादन्नदानादि पूर्ववत् । प्रेतोद्देशेन
पिण्डैकं त्रीन्पिण्डान्मन्त्रतस्ततः ॥ ८ ॥ निदध्यात्त्रिषु पिण्डेषु प्रेतपिण्डं विभज्य च । तृचेन
मधुवातेति संगच्छध्वं तृचेन च ॥ ९ ॥ पिण्डानुमन्त्रणादि स्यादों स्वस्तीति विसर्जयेत् । यद्वा
स्मृत्युक्तमार्गेण सपिण्डीकरणं भवेत् ॥ १० ॥ ( ८८३ ) इति सपिण्डीकरणम् ॥ ॥ ७
अथ शान्तिः ॥ ॥ गुरुर्येषां मृतस्ते वै शान्तिकर्म प्रकुर्वते । हिरण्यपशुपुत्रादि क्षीयमाणाश्च

कुर्वते ॥ १ ॥ क्रियां मन्त्रवर्ती ज्येष्ठः कुर्याद्दर्शे तदिष्यते । उदयात्प्राक्कृतस्नानः पचनाग्निं समेखलम् ॥ २ ॥ क्रव्यादमग्निरर्धर्चेनाशां याम्यां नयन्स्वथ । निशि भस्मान्तमनलं प्रक्षिपन्ति चतुष्पथे ॥ ३ ॥ सव्यानूरून्करैः सव्यैराघ्नाना अप्रदक्षिणम् । त्रिःपरिव्रज्य तं वह्निमनवेक्ष्यागताः पुनः ॥ ४ ॥ स्नान्ति सर्वे ततः केशप्रभृतीन्वापयन्त्यथ । स्नातास्ते कुम्भपणिकं कमण्डल्वादिकान्नवान् ॥ ५ ॥ कल्पयेयुस्तथा सर्वे शमीकुसुममालिनः । इध्मं च परिधींश्चापि कल्पयेयुः शमीमयान् ॥ ६ ॥ अरणी च शमीमय्यावनडुद्रोमयं तथा । नवनीतं तथाऽश्मानं कल्पयेयुरतः परम् ॥ ७ ॥ यावन्त्यः स्युर्युवतयस्तत्र वै स्वीयमन्दिरे । तावन्ति कुशपिञ्जूलान्युपकल्प्य ततः परम् ॥ ८ ॥ अपराह्ण इहैवायमित्यर्धर्चेन मन्थयेत् । स वह्निः पचनस्तं च ज्वलयन्तः समासते ॥ ९ ॥ वदन्तः कुलवृद्धानां कथा आशान्तरात्रतः । शान्तरात्रे गृहं प्राप्य दक्षिणद्वारपक्षतः ॥ १० ॥ आरभ्य सिञ्चेदब्धारामोत्तरद्वारपक्षतः । तन्तुं तन्वन्नृचा धारां तां हृत्वा संततामथ ॥ ११ ॥ प्रज्वाल्यौपासनं तस्य पश्चादास्तीर्य चर्म च । प्राग्ग्रीवमूर्ध्वलोम स्याद्वेदानडुहं च तत् ॥ १२ ॥ आरोहतेत्यृचामात्यांश्चर्मण्यारोहयेदथ । आज्यसंस्कारपर्यन्तमन्वाधानादि पूर्ववत् ॥ १३ ॥ प्रथमं परिधिं प्रत्यगिमं जीवेभ्य इत्यृचा । आदध्यादितरौ तूष्णीं दक्षिणोत्तरदेशतः ॥ १४ ॥ स्थापयित्वोदगश्मानमन्तर्मृत्युमिति त्वथ । मन्त्रोऽयं

पादमात्रः स्यादिध्माधानादि पूर्ववत् ॥ १५ ॥ परं मृत्यो अनुपरेत्याभिश्चतसृभिस्ततः । जुहो-
त्याज्याहुतीः कुर्वन्स्स्वाहाकारमृगन्ततः ॥ १६ ॥ यथाहानीत्यृचामात्यानीक्षेतैतामतः परम् । याः
स्युर्युवतयस्तास्तैः कुशपिञ्जूलकैरथ ॥ १७ ॥ नवनीतमुपादाय पाणिभ्यामञ्जतेऽक्षिणी । अङ्गुष्ठोप-
कनिष्ठाभ्यामक्ष्णोर्युगपदञ्जनम् ॥ १८ ॥ पिञ्जूलान्यनवेक्षं तु ताः क्षिपेयुः स्वपृष्ठतः । अञ्जाना
युवतीरीक्षेतेमानारीरिति त्वृचौ ॥ १९ ॥ अश्मन्वतीत्यृचा तत्र कर्ताभिमृशति त्वथ । पश्चादभि-
मृशेयुस्तं तूष्णीमेवेतरे पुनः ॥ २० ॥ अग्निनानडुहा सार्धं गोमयेनाम्बुधारया । आपोहिष्ठेत्यृचेना-
विच्छिन्नया सिच्यमानया ॥ २१ ॥ औपासनममात्येषु नयत्सु परितस्तदा । कर्तैशान्यां दिशि
स्थित्वा परीमे गामृचं जपेत् ॥ २२ ॥ अनड्वान्परिणेतव्यः पिङ्गलो योऽत्र वर्णतः । अथ स्विष्टकृतं
हुत्वा होमशेषं समापयेत् ॥२३॥ आच्छाद्याहतवस्त्रेण रम्येषूपविशन्ति ते । अर्कोदयेऽस्वपन्तस्ते सर्वे
तत्र समासते ॥ २४ ॥ आदित्य उदिते सर्वे सौर्यादीनि जपन्ति ते । प्रकुर्वीताज्यभागान्तं संस्कृ-
त्यान्नं जुहोत्यथ ॥ २५ ॥ अपनः शोशुचेत्याभिरष्टाभिः प्रत्यृचं ततः । हुत्वा स्विष्टकृतं चाथ होम-
शेषं समापयेत् ॥ २६ ॥ ब्राह्मणान्भोजयित्वैतांस्वस्त्यृद्ध्यादि च वाचयेत् । गौः कांस्यं चाहतं वास-
स्त्रीणि तेभ्यो ददात्यथ ॥ २७ ॥ ( ९०० ) इति शान्तिकर्म ॥ ॥ ८ ग्रन्थोपसंहारः ॥ ॥

ऋक्शाखाध्यायिने विप्रे तपोज्ञानक्रियान्विते । दातव्यं हितकामाय इति वेदविदो विदुः ॥ १ ॥ विलोक्य सर्वसूत्राणि नानाऋषिमतानि च । ज्ञानार्थं याज्ञिकानां तु मयोक्ता गृह्यकारिकाः ॥ २ ॥ उक्तान्यत्रैव कर्माणि शाकल्यवचनोऽब्रवीत् ॥ ३ ॥ (९०३) इत्युपसंहारः ॥ ॥ इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु चतुर्थोऽध्यायः ॥ ४ ॥



# विज्ञापना.

भोभो विदांकुर्वन्तु अखिलवेदहृदयग्राहिणः सहृदयाः, यन्मया महता यत्नेन उपनिषदः अष्टोत्तरशतं दूरदेशात् संगृह्य मुद्रापिताः। अस्य ग्रन्थस्य आवश्यकत्वं कियदिति न खलु निवेदनीयम् । यतः दशोपनिषदां माहात्म्येन अन्यासामपि गौरवं सुविदितमेव।अस्मिन् ग्रन्थे अद्वैतं पुरस्कृत्य जगत उत्पत्तिस्थितिप्रलयाः साधुतरं व्याख्याताः, गणपतिदुर्गादीनां माहात्म्यं, तदुपासनाप्रकाराः, ततो लप्स्यमानानि भोगजातानि, मोक्षावाप्तिश्च प्रदर्शिता। योगमतं सांख्यतत्त्वानि च स्फुटतरं प्रकटीकृतानि। मन्येऽहमस्मिन्ग्रन्थे असंगृहीतं किंचिदपि न संभवेत् इत्यलं विषयविस्तरेण। अयं ग्रन्थः कुत्रापि मुद्रितो नास्ति इतीदं विवरं भर्तुकामोऽहं पुस्तकानि सुबहूनि संगृह्य सुवाच्यैः स्थूलैरक्षरैः प्रवीणैः पण्डितवरैः शोधयित्वा मुद्रापयितुं प्रायते। एतस्य मूल्यं अतीव स्वल्पं (रू. ७) ग्राह्यतया स्थापितम्। अतः स्वल्पमूल्येन बहुक्षीरा गाव इव उपनिषदः सर्वाः संग्राह्याः संग्राहकवरैः इति विज्ञापयति ( भवदीयः )

**तुकाराम तात्या.**

## आदर्शपुस्तकानि.

| | | | | | |
|---|---|---|---|---|---|
| १ डेक्कन्राजकीयपुस्तकालयतः | २ | ४ मद्रास रायल् ऐशियाटीक सोसायटीतः | १ | ६ आनरेबल् जव्हेरीलाल उमियाशंकरतः | १ |
| २ आनन्दाश्रमतः | १ | ५ रा. रा. जैकिसन व्यासजीतः | १ | | |
| ३ म्हैसुरतः | १ | | | | |

☞ इदं पुस्तकं यमबाणमिते ५२ गृहे कष्टम हौस रस्तासंज्ञे मोहमय्यां तुकारामतात्यातः मिलिष्यति.

॥२२०॥